G20 भारत 2023 INDIA

ISSN :2249-538X

# वाक्यार्थभारती

## परिसरस्य वार्षिकपत्रिका

UGC Carelisted and Peer Reviewed Journal

शैक्षिकगुणोत्कर्षवर्षम्

**Chief Editor**
Prof. C.S.S.Narasimha Murthy
Director of the Campus

**Editors**
Dr. Venkataramana S Bhat
Dr Govinda Gopalakrishna Hegde







**CENTRAL SANSKRIT UNIVERSITY**
Acreditted with NAAC A++ Grade
**RAJIV GANDHI CAMPUS**
Menase, Sringeri - 577 139

**2022-23**

G20 भारत 2023 INDIA

ISSN :2249-538X

# वाक्यार्थभारती

## परिसरस्य वार्षिकपत्रिका

UGC Carelisted and Peer Reviewed Journal

शैक्षिकगुणोत्कर्षवर्षम्

**Chief Editor**
Prof. C.S.S.Narasimha Murthy
Director of the Campus

**Editors**
Dr. Venkataramana S Bhat
Dr Govinda Gopalakrishna Hegde







**CENTRAL SANSKRIT UNIVERSITY**
Acreditted with NAAC A++ Grade
**RAJIV GANDHI CAMPUS**
Menase, Sringeri - 577 139

**2022-23**

| | | |
|---|---|---|
| **Title** | **:** | **Vakyarthabharati** |
| **Publisher** | **:** | **The Director** |
| | | Central Sanskrit University |
| | | Rajiv Gandhi Campus |
| | | Sringeri – 577 139 (Karnataka) |
| | | www.csu-sringeri.edu.in |
| **Chief Editor** | : | Prof. C.S. S Narasimha Murthy |
| **Editors** | : | Dr. Venkatramana S Bhat |
| | | Dr. Govinda Gopalakrishna Hegde |
| **e-mail** | : | director-sringeri@csu.co.in |
| **Year** | : | 2023 |
| **ISSN** | : | 2249-538X |
| **Design** | : | K V Shashidhar |
| **Printed at** | : | Sri SIRI Enterprises, Sringeri |

प्रो. श्रीनिवास वरखेड़ी
कुलपति
केन्द्रीय संस्कृत विश्वविद्यालय
संसद के अधिनियम द्वारा स्थापित
(पूर्व में राष्ट्रिय संस्कृत संस्थान,
शिक्षा मन्त्रालय, भारत सरकार के अधीन)



Prof. Srinivasa Varakhehdi
Vice-Chancellor
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education, Govt. of India)




# शुभसन्देशः

## "शास्त्रोपासनमेधतामनुपदम्"

श्रुत्यर्थं यथार्थमवगमयितुं परमकारुणिकाः महर्षयः स्वतपोमहिम्ना शास्त्राणि रचयामासुः। "शास्त्रं सुचिन्तितमपि पुनः परिचिन्तनीयम्" इति अभियुक्तवचनदिशा अध्ययनाध्यापनादिसुचिन्तनेनैव समधिगतानि शास्त्राणि संरक्ष्यन्ते इति तु विद्वज्जनविदितमेव। **"स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्"** इति श्रुत्या स्वाध्यायः प्रवचनञ्च अध्ययनाध्यापनकर्मसु आत्मानं व्यापारयतां समेषामपि लोकानां परमं कर्तव्यमिति। तदनु शास्त्राध्ययनाध्यापनसंरक्षणपरिपोषणादिपरम्परासु सततं दत्तावधानः केन्द्रीयसंस्कृतविश्वविद्यालयस्य शृङ्गेरीस्थः राजीवगान्धी परिसरः जगति सर्वत्र प्रथितयशाः वरीवर्ति। उभयेषां जगद्गुरूणां **अनन्तश्रीविभूषितानां श्री श्री भारतीतीर्थमहास्वामिनां, तत्करकमलसञ्जातानां श्री श्री विधुशेखरभारतीस्वामिनां, जगन्मातुः श्रीशारदाम्बायाश्च** सम्पूर्णानुग्रहेण पवित्रेऽस्मिन् शृङ्गगिरिक्षेत्रे प्रतिष्ठापिते परिसरे प्रतिवर्षमिव वर्षेऽस्मिन्नपि विशेषपरिवर्तनरूपेण **"वाक्यार्थभारती"** इत्याख्यः ग्रन्थः प्रकाशयिष्यत इति वृत्तान्तं विज्ञाय मोमुदीति मे अन्तःकरणम्। वाक्यार्थपरिषदः विविधशास्त्रविषयीभूतं लेखनभूयिष्ठं ग्रन्थरत्नं छात्राणामुपकारकं बोभवीति इति नो महान् प्रत्ययः। सन्दर्भेऽस्मिन् प्रकाश्यमानेयं वाक्यार्थभारती चिरं जीयादित्याशासे।

श्रावण-कृष्ण-द्वितीया (1-09-2023)

(प्रो. श्रीनिवासवरखेडी)
कुलपतिः

56-57, सांस्थानिक क्षेत्र, जनकपुरी, नई दिल्ली - .110058
56-57, Institutional Area, Janakpuri, New Delhi - 110058 (INDIA)
**Ph. No.: (O)** 011-28523949, **EPABX** : 28524993, 28521994, 28524995
**EMAIL** : vicechancellorcsu@gmail.com / vc@csu.co.in, **WEBSITE** : www.sanskrit.nic.in

प्रो. रणजित कुमार बर्मन
कुलसचिव (प्र.)
केन्द्रीय संस्कृत विश्वविद्यालय
संसद के अधिनियम द्वारा स्थापित
(पूर्व में राष्ट्रिय संस्कृत संस्थान,
शिक्षा मन्त्रालय, भारत सरकार के अधीन)



Prof. Ranjit Kumar Barman
Registrar (I/c)
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education, Govt. of India)




## शुभाशंसनम्

॥ जीयात् वाक्यार्थभारती.... ॥

असाधारणमहिम्नः अपौरुषेयस्य वेदस्य तात्पर्यनिर्णयाय परमकारुणिकाः महर्षयः स्वतपोमहिम्ना शास्त्राणि व्यलेखिषुः। "स्वाध्यायोऽध्येतव्यः" इति श्रुत्यनुसारेण अध्ययनाध्यापनादिनैव रत्नसदृशानि शास्त्राणि सुरक्षितानि। क्षेत्राधिष्ठितदेवतायाः शारदाम्बायाः असीमानुकम्पया, उभयेषां जगद्गुरूणां श्रीमत्परमहंसेत्यादि समस्तबिरुदावळी विराजमानानां श्रीमज्जगद्गुरु **श्री श्री भारतीतीर्थमहास्वामिनां** तत्करकमलसञ्जातानां श्रीमज्जगद्गुरु **श्री श्री विधुशेखरभारती महास्वामिनां** परमानुग्रहेण च शृङ्गेरीस्थराजीवगान्धीपरिसरः सर्वतोमुखं महीयते। शास्त्राणां, शास्त्रपरम्पराणां च संरक्षणे बद्धदीक्षः राजीवगान्धीपरिसरः छात्राणां अत्यन्तगभीरात्मकस्यापि शास्त्रीयविषयस्य सुललितया बोधार्थं **"वाक्यार्थपरिषत्"** इति नाम्नीं काञ्चित् परिषदं प्रचालयति। तदनु अनया परिषदा विशेषतः अस्मिन् वर्षे न केवलं परिसरीयविदुषां लेखनम् अपि तु भारतीय- विदुषामपि मौल्याधारितानि आधुनिकविषयशोधलेखनानि च सङ्कलय्य **"वाक्यार्थभारती"** इति ग्रन्थः प्राकाश्यं नीयत इति नितरां प्रसीदामो वयम्। अनेन कर्मणा सर्वेऽपि विद्वांसः, केन्द्रीयसंस्कृतविश्वविद्यालयस्य प्राध्यापकाः छात्राश्च नूनमुपकृताः भवन्तीति नो दृढीयान् विश्वासः। भगवत्याः शारदाम्बायाः कृपया जगद्गुरूणां परमानुग्रहेण च परिसरोऽयं समभिवर्धतां, सनिदेशकाः, परिसरसदस्याः, समेधन्तामित्याशास्महे।

श्रावण-कृष्ण-द्वितीया (1-09-2023)

R. K. Barman.

कुलसचिवः
केन्द्रीयसंस्कृतविश्वविद्यालयः,नवदेहली

आचार्यः सि.एस्.एस्. नरसिंहमूर्तिः
निदेशकः
केन्द्रीयसंस्कृतविश्वविद्यालयः
राजीवगान्धीपरिसरः, शृङ्गेरी -577139




Prof. C.S.S Narasimha Murthy
Director
Central Sanskrit University,
Rajiv Gandhi Campus, Sringeri- 577139

## देद्युत्यतां सुरवाणी

यः कश्चिन्न्याय आचारः सर्वं शास्त्रमिति श्रुतिः ।
यदन्याय्यमशास्त्रं तदित्येषा श्रूयते श्रुतिः ॥
(महाभारते शा.प.२६९ अध्याये श्लो.सं ५८)

"विद्यया प्राणिनां मुक्तिस्तस्मात्तद्दानमुत्तमम्" इत्यभियुक्तोक्तिः । अतः प्राणिनः आजन्म वेदितुं प्रायतन्त । तेषु उत्कृष्टो मानवः । सोऽर्जितस्य विज्ञानस्य संरक्षणं संक्रमणं चैच्छत् । तत्संकल्पक्रम एव गुरुकुलानि, विद्यालयाः,विश्वविद्यालयाश्च आविर्बभूवुः । जगति सम्प्रति नैकाः संस्थाः, नैके विश्वविद्यालयाः ज्ञानसमुपार्जनाय वरीवृत्यन्ते । तत्र विश्वगुरोरस्माकं भारतावनौ गैर्वाण्याः समभिवृद्ध्यै समुपासनायै च बहवो ह्युपायाः अनुष्ठीयन्ते । तदर्थं सर्वकारः नैकान् संस्कृतविश्वविद्यालयान् नाना दिक्षु अस्थापयत् । अमीषु संस्कृतविश्वविद्यालयेषु नाना परिसरयुक्तः नैकशास्त्रपरिपोषणरतः ऐषमः मूल्याङ्कनप्रत्यायनपरिषदा A++ प्राप्तः केन्द्रीयसंस्कृतविश्वविद्यालयः सर्वातिशायी वरीवर्ति । तत्रान्यतमत्वेन राराज्यते शृङ्गेरीस्थराजीवगान्धीपरिसरः । यतोऽयं नानाशास्त्रनदीष्णैः संयमीन्द्रैः पुम्भावसरस्वतीरूपैः जगद्गुरुभिः श्री श्री भारतीतीर्थमहास्वामिभिः समकल्पि समारम्भि च । अमीषाम् असीमानुकम्पया समेधमानो वरीवर्त्यम् । अत्र निदेशकाः अध्यापकाश्च समे शास्त्रेषु बद्धादराः अवृतन्, वर्तन्ते च । तेऽन्तेवासिनां तत्तच्छास्त्रेषु कौशलवर्धनाय नैकान् उपायान् समकल्पयन् । ते यथा – "१.स्पर्धिष्णुपरिषत् २. वाक्यार्थपरिषत् ३. वाग्वर्धिनीपरिषत्" इति ।

हायनेऽस्मिन् देशे विख्यातैः विपश्चिद्भिः प्रेषितानि लेखनानि, अस्मत्परिसरीयैः आचार्यैः समुपदिष्टानि व्याख्यानानि च संगृह्य वाक्यार्थभारती इति नाम्ना शोधपत्रिका प्रकाश्यते । लेखनानां प्रामाणिकतासम्पादनाय बाह्याः प्रसिद्धाः विद्वांसः आचार्याः प.ना.शास्त्रिणः, आचार्याः एम्.पि.भट्टाः, डा.गिरिधरशास्त्रिणः, डा.महेशकाकत्कर्वर्याः, डा.विनय.एम्.एस् वर्याश्च प्रायतन्त । तेभ्यः धन्यवादान् आविष्करोमि । सन्दर्भेऽत्र केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतिभ्यः कर्मठेभ्यः प्रो.श्रीनिवासवरखेडिमहोदयेभ्यः, कुलसचिवेभ्यः प्रो. रञ्जितकुमारबर्मन्वर्येभ्यश्च सादरं प्रणामान् निवेदयामः । अवसरेऽत्र सम्पादनकर्मणि निरतयोः डा.वेङ्कटरमणभट्ट डा.गोविन्दहेगडे इत्यनयोः कृतज्ञतां निवेदयामि । समये लेखान् प्रेषितवद्भ्यः विद्वत्तल्लजेभ्यः धन्यवादान् आविष्करोमि । शुभावसरेऽस्मिन् परमकरुणामूर्तीनां जगद्गुरूणां **श्री श्री भारतीतीर्थमहास्वामिनां तत्करकमलसञ्जातानां श्री श्री विधुशेखरभारतीमहास्वामिनाञ्च** अनुग्रहाशीर्भिः परिसरीयाणां सर्वेषां श्रेयांसि भूयासुरित्याशास्महे ।

प. नरसिंहमूर्तिः

शोभकृत्-श्रावणकष्ण-द्वितीया

इत्थं विद्वज्जनविधेयः

## Review Committee

| Members of Review Committee | Local Review Committee |
|---|---|
| Prof. P. N Shastri<br>Flat No. 43294, Building No. 4<br>Prestige Falcon City, Kanakapura Road,<br>Anjanadri Layout, Konanakunte,<br>Bengaluru, Karnataka – 560062<br>Email: pnshastry11952@gmail.com<br>Mobile: 8130494222 | Dr. Venkatramana S Bhat<br>Associate Professor<br>Central Sanskrit University<br>Rajiv Gandhi Campus<br>Sringeri – 577 139<br>Email : vbhatrgcs@gmail.com<br>Mobile : 9483288784 |
| Prof. Mahabaleshwar P Bhat<br>Pragati Nagar, Sirsi,<br>North Canara<br>Karnataka – 581402<br>Email : mpbhatsringeri@gmail.com<br>Mobile : 9448688498 | Dr. Pramod Bhat, Assistant Professor<br>Central Sanskrit University<br>Rajiv Gandhi Campus,<br>Sringeri – 577 139<br>Email : pramodrgcs@gmail.com<br>Mobile : 9481394969 |
| Dr. Giridhara Shastri<br>Arsha Vidya Kendra<br>Sringeri – 577 139<br>Email: cvgsringeri@gmail.com<br>Mobile : 9448964346 | Dr. Dayanidhi Sharma<br>Assistant Professor<br>Central Sanskrit University<br>Rajiv Gandhi Campus,Sringeri – 577 139<br>Email : dnsedu2015@gmail.com<br>Mobile : 9001473681 |
| Dr. Mahesh Kakathkar<br>Lecturer in Sanskrit<br>Gurusharanam, Managaru,<br>Sringeri, Karnataka – 577 139<br>Email: maheshkakathkar@gmail.com<br>Mobile : 9448953539 | Dr Govinda Gopalakrishna Hegde<br>Assistant Professor (Guest)<br>Central Sanskrit University<br>Rajiv Gandhi Campus,Sringeri – 577 139<br>Email : govindagh830@gmail.com<br>Mobile : 8618094325 |
| Dr. Vinay M.S<br>Assistant Professor in English<br>Govt. First Grade College, Siddakatte,<br>Bantwal Taluk, Dakshina Kannada Dist<br>Karnataka – 574237<br>Email: vinaynandalli@gmail.com<br>Mobile: 9449725830 | Sri K V Shashidhar<br>Assistant Professor (Guest)<br>Central Sanskrit University<br>Rajiv Gandhi Campus,Sringeri – 577 139<br>Email : shashikvdhar@gmail.com<br>Mobile : 9482566624 |

# सम्पादकीयम्

**भारतीकरुणापात्रं भारतीपदभूषणम् ।**
**भारतीपदमारूढं भारतीतीर्थमाश्रये ॥**
**विद्याविनयसम्पन्नं वीतरागं विवेकिनम् ।**
**वन्दे वेदान्ततत्वज्ञं विधुशेखरभारतीम् ॥**

शास्तीति शास्त्रम् । शिष्यते अनेन इति शास्त्रम् । साध्वसाध्वोः कर्तव्याकर्तव्ययोः विहितनिषिद्धयोः ग्राह्याग्राह्ययोः स्वरूपं चराचरवस्तुनः लक्षणं च यत् बोधयति तच्छास्त्रम् । शास्त्रविहितकर्मणामनुष्ठानमस्माकं परमं कर्तव्यमस्ति । यजनयाजनदानप्रतिग्रहाध्ययनाध्यापनकर्माणि शास्त्रोक्तानि विलसन्ति । एतेषु अध्ययनम् अध्यापनं च निरन्तरं क्रियमाणमस्माभिरिति विद्मः । अध्ययनमन्तरा अध्यापनमपूर्णम् । तदेव वक्ति भगवान् वेदः "स्वाध्यायान्माप्रमदः" इति । शास्त्रप्रतिपादितविषयाणामभिव्यक्तिः द्वेधा सम्भवति भाषणेन लेखनेन च । कक्षासु अध्यापनेन, गोष्ठीषु वाक्यार्थप्रस्तुत्या विद्वत्समवायेषु चिन्तनेन च शास्त्राणामभिव्यक्तिः जायते । पूर्वोक्तप्रकारेण लेखनद्वारा अपि शास्त्राभिव्यक्तिः जायते । शास्त्रं सुनिश्चलधिया परिचिन्तनीयम् इति वचसा शास्त्रचिन्तनं भृशमस्माभिः करणीयम् ।

एतदनु अस्माकं केन्द्रीयसंस्कृतविश्वविद्यालयस्य राजीवगान्धीपरिसरेण नैकेभ्यः वत्सरेभ्यः वाक्यार्थभारती नामकः ग्रन्थः प्रकाश्यते । किन्तु वर्षेऽस्मिन् एषः ग्रन्थः वैशिष्ट्यमावहति । संस्कृत- हिन्दी- आङ्ग्ल – कन्नडभाषासु च लेखनानि अस्मिन् संवत्सरे समुपनिबद्धानि । न केवलं परिसरीया अध्यापकाः लेखनानि व्यलेखिषुः अपि तु बाह्या अपि तत्तच्छास्त्रेषु कृतपरिश्रमाः विद्वांसः लेखनानि अलिखन् । संस्कृतमन्तरा भाषान्तरेष्वपि आधुनिकविषयान् लिपिबद्धमकार्षुः । मुद्रणयोग्यानां लेखनानां मूल्याङ्कनाय पुनरीक्षणसमितिः काचित् सङ्घटिता । तस्यां समितौ केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतिचराः आचार्याः परमेश्वरनारायणशास्त्रिणः, अद्वैतवेदान्तविभागस्य आचार्यचराः श्रीमन्तः महाबलेश्वर पि भट्टाः, कोप्पास्थ सर्वकारीयमहाविद्यालयस्य संस्कृतप्राध्यापकाः डा. महेशकाकत्कर् महोदयाः , श्री.जे.सि.बि.एम् महाविद्यालयस्य प्राध्यापकचराः श्रीमन्तः सि.वि.गिरिधरशास्त्रिणः, सिद्धकट्टेस्थ सर्वकारीयमहाविद्यालयस्य आङ्ग्लाध्यापकाः श्रीमन्तः विनय.एम्.एस् वर्याश्च सदस्याः आसन् । काले लेखनानि परिशील्य मुद्रणयोग्यतां प्रमाणीकृत्य प्रादुरिति तेभ्यः कार्तज्ञं निवेदयावः । केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतयः आचार्याः श्रीनिवास वरखेडिवर्याः अस्य ग्रन्थस्य प्रकाशनाय अस्मभ्यम् अपेक्षितं मार्गदर्शनं विधाय , संदेशञ्च प्रदाय उपाकार्षुरिति तेभ्यः धन्यवादान् आविष्कुर्वः । अस्मद्विश्वविद्यालयस्य कुलसचिवाः आचार्याः रञ्जित्कुमारबर्मन् महोदया अपि संदेशं प्रेषयित्वा उपाकुर्वन्निति तेभ्यः कृतज्ञतां व्याहरावः । परिसरस्य निदेशकाः आचार्याः सि.एस्.एस्.नरसिंहमूर्तिवर्याः ग्रन्थसम्पादनकर्मणि अस्मान् उद्बोध्य मार्गदर्शनम् अकुर्वन् । तेभ्यः कृतज्ञतां समर्पयावः । स्थानीयपुनरीक्षणसमितिसदस्याः डा.प्रमोदभट्टाः,डा.दयानिधिशर्माणः,डा.शशिधराश्च काले लेखनानि परिशील्य सहाकार्षुः । तेभ्यः धन्यवादान् आविष्कुर्वः । एवं काले लेखं प्रदाय सहकृतवद्भ्यः विद्वद्भ्यः

ग्रन्थस्य मुद्रणविन्यासादिकर्मसु सहकृतवद्भ्यः डा.शशिधरमहोदयेभ्यः धन्यवादान् वितरावः । येषां कारुण्यराशिं सम्प्राप्य परिसरः सर्वदैव आत्मानं धन्यं मनुते, तेभ्यः दक्षणाम्नायशृङ्गेरीशारदापीठाधीश्वरेभ्यः अनन्तश्रीविभूषितेभ्यः श्री श्री भारतीतीर्थमहासन्निधानश्रीचरणेभ्यः तत्करकमलसञ्जातेभ्यः श्रीविधुशेखरभारतीसन्निधानश्रीचरणेभ्यश्च सभक्तिश्रद्धं साष्टाङ्गप्रणामान् निवेदयावः ।

श्रावण-कृष्ण-द्वितीया (1-09-2023)
शृङ्गेरी

इत्थं सम्पादकौ
डा.वेङ्कटरमणभट्टः
डा.गोविन्दगोपालकृष्णहेगडे

# Table of Content

# लौकिकलिङ्गलक्षणम् - अनुपपत्तयश्च।

**डा.सि.एस्.एस्.नरसिंहमूर्तिः**
निदेशकः, केन्द्रीयसंस्कृतविश्वविद्यालयः
राजीवगान्धीपरिसरः, शृङ्गेरी ।

**सारांशः**

अष्टके षड्विधानि सूत्राणि विद्यन्ते । तेष्वन्यतमं वर्ततेऽधिकारसूत्रम् । तानि च अधिकार सूत्राणि ७४ सन्ति। तत्र निर्देशेषुवैलक्षण्यं प्रदर्शितम् आचार्येण । विशिष्यात्र लेखने "स्त्रियाम" इति कथयितुः सूत्रकारस्याशयः कः? तेषां द्योतकत्वं सम्प्रसारणे निरुप्य लिङ्स्वरूपं विचार्य स्त्रीत्वं किमिति निरूपितम्। अत्र स्त्रियाम् इति सूत्रभाष्योक्तवार्तिकानि साकल्येन विचारितानि । तत्र लौकिकलिङ्गस्वीकारेऽनुपपत्तीः प्रदर्श्य भाष्योक्तोत्तराणि निरुप्य चेतनाचेतनसाधारण दर्शनान्तरीयोक्तः लिङ्गव्यवहारः शाब्दिकैः स्वीक्रियते इति सयुक्तिकं प्रतिपादयत्ययं लेखः ।

पाणिनीये चतुस्सप्ततिः(७४) अधिकारसूत्राणि वर्तन्ते। तत्र सूत्रनिर्देशाः इत्थं विद्यन्ते। यथा -

१) प्रथमानिर्देशः - सूत्रकारेणापूर्वतया बोधितः। यथा - प्रत्ययः. समर्थः, अव्ययीभावः, बहुव्रीहिः, द्वन्द्वः, कृत्, तद्धिताः इत्यादयः।

२) पञ्चमीनिर्देशः - यथा - शास्त्रैकगम्यमानकार्यबोधकः। यथा - धातोः, प्रातिपदिकात्, अनुपसर्जनात्, पदात्, कालात् इत्यादयः।

३) षष्ठीनिर्देशः - यथा - शास्त्रीयकार्यसम्पादनार्थकः। यथा - अङ्गस्य, भस्य, उत्तरपदस्य, पदस्य इत्यादयः।

४) सप्तमीनिर्देशः - यथा - शास्त्रे क्वचिद्बोधितायाः संज्ञाया अनुवादेन कार्यबोधकः, अथवा लौकिकसंज्ञानुवादेन कार्यबोधकः। यथा - कारके, स्त्रियाम्, आर्धधातुके, भूते, शेषे, अलुगुत्तरपदे, संहितायाम् इत्यादयः।

स्त्रीलिङ्गबोधका**:** प्रत्ययाः= स्त्रीप्रत्ययाः। एते प्रत्ययाः पाणिनीयाष्टके स्त्रियाम्(४-१-३) इत्यधिकारे कथिताः। ते च प्रत्ययाः नव सन्ति। ते यथा - टाप्, डाप्, चाप्, ङीप्, ङीष्, ङीन्, ऊङ्, ति, ष्फ इति। एते च प्रत्ययाः द्योतकाः भवन्ति। वाचकत्वे स्त्रीप्रत्ययसत्त्वे एव स्त्रीत्वं प्रतीयेत, तदभावे नेत्यर्थः स्यात्। तर्हि वाक्, गीः, उपानत्, परिषत्, सदः इत्यादिस्थलेषु स्त्रीत्वं न प्रतीयेत। तत्र कस्यापि स्त्रीप्रत्ययस्याभावात्। द्योतकत्वे तु प्रत्ययाभावेऽपि प्रातिपदिके स्त्रीत्वस्य सत्त्वान्न दोषः।

स्त्रियामिति सप्तमीनिर्देशो वर्तते। सप्तमीनिर्देशस्यायं स्वभावो यत्सर्वदा सिद्धमेवार्थं बोधयति। यथा - घटे जलमस्ति, वृक्षे पुष्पाणि सन्ति। यस्य घटविषयकं ज्ञानमस्ति तं प्रत्येव वाक्यमिदं प्रयुङ्क्ते। यो घटं न जानाति तं प्रति प्रथमान्तेनैव प्रयोगः क्रियते - घटोऽस्ति, वृक्षोऽस्ति। प्रकृतेऽत्र सप्तमीनिर्देशेन स्त्रीत्वरूपं लिङ्गं सिद्धमस्तीत्याचार्यस्य सङ्कल्पः स्यात्। तच्च लौकिकमुत शास्त्रीयमिति सन्देहो भवति। अत्र शास्त्रे तु शास्त्रीयं लिङ्गं क्वापि नोक्तम्। लौकिकम् उत दर्शनान्तरीयं वाऽङ्गीकृत्य कार्याणि साधनीयानि। तत्रादौ लौकिकं लिङ्गलक्षणं किमिति परिशीलयामः।

किं लिङ्गम्? ततः किं स्त्रीत्वम्?

लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गम्। लौकिकानां व्यवहारे लिङ्गमेवं वर्तते।

**स्तनकेशवती स्त्री स्याल्लोमशः पुरुषस्स्मृतः।**

**उभयोरन्तरं यच्च तदभावे नपुंसकम्॥**[1]

स्तनकेशवती स्त्री स्यादित्यत्र स्तनकेशग्रहणमन्येषामपि प्रसवयोग्यप्रजननादीनामुपलक्षणम्। एवं लोमग्रहणमपि मेढ्रादीनां पुंधर्माणामुपलक्षणम्। स्त्रीपुंसयोरुभयोरपि तुल्यजातीयं तन्नपुंसकं भवति। इदं चेतनैकनियतं लिङ्गलक्षणम्। अत्र सूत्रे भाष्ये एवं विचार आरब्धः - **स्त्रियाम् इत्युच्यते, का स्त्री नाम? लोकतः।**[2] तत्र कैयटः एवं व्याख्यत् - वस्तुस्वरूपजिज्ञासायां प्रथमान्तेन प्रश्नः युक्तः, कस्यां स्त्रियामित्युच्यमाने विशेषविषयः प्रश्नः।[3] अतः किं लिङ्गं स्वीकर्तव्यमिति भाष्याशयः। तत्र यदि लौकिकानां लक्षणं स्वीक्रियेत तदा बहवो दोषाः भाष्यकारेण प्रादर्शिषत। ते यथा -

**१) लिङ्गात्स्त्रीपुंसयोर्ज्ञाने भ्रूकुंशे टाप्प्रसज्यते।**[4] तथाहि - भ्रूकुंशो नामस्त्रीवेषधारी नटः, तस्येदानीं स्तनकेशसम्बन्धात् स्त्रीत्वे सति टाप् प्राप्नोति। न च स्तनकेशवतीत्यत्र नित्ययोगे मतुब्विधानात् भ्रूकुंशशब्दस्य तथाऽभावान्न स्त्रीत्वमिति चेद् - सामाजिकानां स्त्रीवेषधारिण एव तस्य दर्शनात् स्त्रीत्वं वर्तते। नित्ययोगे मतुपः स्वीकारे दोषान्तरमप्यस्ति। केशवपने च स्त्रियाः स्त्रीत्वन्न स्यात्, तदानीं केशसम्बन्धाभावात्। स्तनादीनामाविर्भावात्पूर्वं बाल्यावस्थायां स्त्रीत्वव्यवहारो न स्यात्। स्तनातिशयसम्बन्धस्य उत्तरकालभावित्वाद् अतिशयने मतुपि विज्ञायमाने प्राक् स्त्रीत्वं न स्यात्। अव्याप्तिसद्भावादस्य लौकिकव्यवहारस्य यथावत्सङ्गमनं दुर्लभम्। अतोऽन्येषामुपलक्षणमिति निश्चप्रचमङ्गीकर्तव्यम्।

**२) नत्वं खरकुटीः पश्य।**[5] खरकुटीः = नापितगृहम्। चञ्चाः पश्य, वर्ध्रिकाः पश्य, खरकुटीः पश्य" तस्माच्छसो नः पुंसि" इति नत्वं प्राप्नोति। चञ्चा तृणमयः पुमान्" इति कोशः। चञ्चेव मनुष्यः= चञ्चा। संज्ञायां च(५-३-९७) इवार्थे कन् स्यात् समुदायश्चेत्संज्ञेत्यर्थकेन कन्प्रत्ययः, तस्य लुम्मनुष्ये(५-३-९८) इत्यनेन संज्ञायां च इति विहितस्य कनः लुग्भवति मनुष्ये वाच्ये इति लुक्। चञ्चेत्यस्य वर्ध्रिका इत्यर्थः। यद्यपि मनुष्यशब्दः स्त्रीपुंससाधारणस्तथापि सम्प्रति पुरुषसंज्ञायामत्र प्रसङ्गः। नापितगृहे यथा लोमानि भवन्ति तद्वल्लोमानि कस्यचित् मनुष्यस्य सन्तीत्यभिप्राये नापितगृहमिव इति इवार्थे कन्प्रत्ययः। तस्य लुम्मनुष्ये(५-३-९८) इत्यनेन संज्ञायां च इति विहितस्य कनः लुग्भवति मनुष्ये वाच्ये इति लुक्। तत्र मनुष्यस्य वाच्यत्वात् तस्य च लोमशत्वात् पुंस्त्वात् खरकुटीः पश्य इत्यत्र नत्वप्रसङ्गः।

**३) खट्वा वृक्षौ न सिद्ध्यतः।**[6] लौकिकं यल्लिङ्गं तत् खट्वावृक्षादिषु सुतरां नास्ति। अतः खट्वा इत्यत्र टाप्, वृक्षान्

---

[1] सिद्धान्तकौमुदि बालमनोरमा व्याख्या

[2] महाभाष्यम्

[3] महाभाष्यम् प्रदीप व्याख्या

[4] महाभाष्यम् (वार्तिकम्)

[5] महाभाष्यम्

[6] महाभाष्यम्

इत्यत्र "तस्माच्छसो नः पुंसि" इति नत्वं न प्राप्नोति। तर्ह्यनयोः किं लिङ्गं न्याय्यमिति सन्देहे **नापुंसकं भवेत्तस्मिन्**[1] इति वार्तिककृदवदत्। नपुंसके = वस्तुनि भवं लिङ्गम् = नापुंसकं, नपुंसकत्वमित्यर्थः। तदभावे नपुंसकम् इति पूर्वमुक्तमेव। तदभावे = स्त्रीपुंसलिङ्गाभावे नपुंसकं लिङ्गं न्याय्यम्। स्त्रीत्वपुंस्त्वयोरभावात् लिङ्गवत्त्वेन स्त्रीपुंससदृशत्वाच्च सत्त्वरूपत्वाच्च लिङ्गप्रतीतिः भवेत्। किं तल्लिङ्गमिति चेद् -- **असत्तु मृगतृष्णावत्**[2] इति। तद्यथा - मृगास्तृषिता अपां धाराः पश्यन्ति, न च ताः सन्ति। मृगतृष्णासु असदपि जलं यथा जलाभासः तथा कस्यचिल्लिङ्गस्यानवभासेऽपि नपुंसकमिति व्यवहारः। वस्तुतोऽसत्वेऽपि बुद्धिसत्ता सर्वत्राङ्गीक्रियते।

उक्तञ्च परमार्थसारे भगवता पतञ्जलिना -

मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम्।
तैमिरिकचन्द्रयुगवद्भ्रान्तमखिलं जगद्रूपम्॥ इति॥[3]

ततः **गन्धर्वनगरं यथा।** यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते, तद्वत्खाट्वावृक्षयोरसल्लिङ्गं द्रष्टव्यम्। वस्तुतोऽसत्त्वमपि सत्त्वमेव, परं तु न दृश्यते। यथा - **आदित्यगतिवत्सन्न**[4] इति। यथा आदित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्याऽनुमीयते तथा खट्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात्प्रत्यक्षेण ग्रहीतुमशक्यं, तत्कृतकार्यदर्शनादनुमीयते।

समाधानान्तरमपि उक्तम् - **वस्त्रान्तर्हितवच्च तत्।**[5] यथा वस्त्रान्तर्हितानि द्रव्याणि नोपलभ्यन्ते तद्वत् खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यन्ते। विषम उपन्यासः - वस्त्रान्तर्हितानि द्रव्याणि वस्त्रापाये उपलभ्यन्ते। खट्वावृक्षयोः पुनर्येऽप्येते रथकारा वाशीवृक्षादनहस्ता मूलात्प्रभृति आ अग्राद्वृक्षांस्तक्ष्णुवन्ति तेऽपि तयोर्लिङ्गं नोपलभन्ते? केनैतदवसीयते - खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते इति।

यदि सत्, तदा ऽनुपलम्भे किं कारणमिति चेद् - भाष्यकृदेवं विवृणोति - षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति - १) अतिसन्निकर्षात् २) अतिविप्रकर्षात् ३) मूर्त्यन्तरव्यवधानात् ४) तमसावृतत्वात् ५) इन्द्रियदौर्बल्यात् ६) अतिप्रमादात् इति।

१) अतिसन्निकर्षात् - स्वचक्षुर्गतमञ्जनम्
२) अतिविप्रकर्षात् - उड्डीनस्य शकुनेः।
३) मूर्त्यन्तरव्यवधानात् - कुड्यादिव्यवहितस्य सुवर्णादेः।
४) तमसावृतत्वात् - अन्धकाराक्रान्तस्य श्वभ्रादेः(गर्तः)
५) इन्द्रियदौर्बल्यात् - तिमिरावृतस्य नयनादेः।
६) अतिप्रमादात् - विषयान्तरासक्तचित्तत्वात्।

सौक्ष्म्यमप्यनुपलब्धौ कारणं भवति, तत्तु इन्द्रियदौर्बल्येऽन्तर्भावान्न पृथगुपन्यासः। दिव्यचक्षुः श्रोता हि

---

1 महाभाष्यम्

2 महाभाष्यम्

3 परमार्थसारः

4 महाभाष्यम्

5 महाभाष्यम्

सूक्ष्मप्यर्थमुपलभन्ते, न तु दुर्बलेन्द्रियाः। अतोऽत्र इन्द्रियदौर्बल्यमेव कारणं भवितुमर्हतीति निश्चीयते। **यल्लोके दृष्ट्वा एतदवसीयते**[1] इति भाष्यकृदाह।

**लोक्यते येन शब्दार्थो लोकस्तेन स उच्यते।**
**व्यवहारोऽथवा वृद्धव्यवहर्तृपरम्परा॥**[2]

अयमर्थः - यत् = निमित्तम्, उपलभ्य निमित्तवत्यर्थे प्रत्यय उपजायते, तत स्त्र्यादिशब्दवाच्यम्। तत् = निमित्तवदर्थरूपं स्त्र्यादिशब्देन अवसीयते = प्रत्याय्यते।

अतः चेतनाचेतनसाधारणं दर्शनान्तरीयोक्तः लिङ्गव्यवहारः वैयाकरणैः स्वीक्रियते - सत्त्वरजस्तमसां गुणानामवस्था उपचया-पचय-साम्यरुपाः इति। तत्र गुणानामुपचयः पुंस्त्वम्, तेषामेवपचयः स्त्रीत्वम्, तेषां साम्यं तु नपुंसकत्वमिति। तत्तदवस्थाविशिष्टागुणा एव लिङ्गमिति वक्तुः सांख्यानामपि अत्रैव तात्पर्यम्।

**उपयुक्तग्रन्थसूचि**

1. व्यैयाकरणसिद्धान्तकौमुदी
2. व्यैयाकरणसिद्धान्तकौमुदी-बालमनोरमा
3. महाभाष्यम्
4. परमार्थसारः

[1] महाभाष्यम्

[2] महाभाष्यम्

# ऊहः

**प्रो.सुब्राय.वि. भट्टः**
मीमांसाविद्याशाखाध्यक्षः
केन्द्रीयसंस्कृतविश्वविद्यालयः
राजीवगान्धीपरिसरः, शृङ्गेरी.

**सारांशः** –द्वादशलक्षण्याम् ऊहः विचारितः । तत्र ऊहो नाम "प्रकृतौ अन्यथा दृष्टस्य विकृतौ अन्यथाभावः" । यथा प्रकृतौ अग्निदेवताके आग्नेययागे "अग्नये जुष्टं निर्वपामि" इति श्रुतस्य निर्वापमन्त्रस्य विकृतौ सूर्यदेवताके सौर्ययागे अतिदिष्टस्यास्य मन्त्रस्य अग्निपदस्थाने सूर्यपदस्य प्रक्षेपः क्रियते – "सूर्याय जुष्टं निर्वपामि" इति । अयं चोहः त्रिविधः – मन्त्रोहः, सामोहः,संस्कारोहः चेति ।

**विशेषशब्दाः –** प्रकृतिः , विकृतिः , निर्वापः, अष्टाकपालः , यागः , साम, मन्त्रः, देवता , हविः , प्रयोगविधिः , यागस्वरूपम् ॥

भगवता जैमिनिना प्रणीते पूर्वतन्त्रे द्वादशलक्षण्यां नवमाध्याये ऊहविचारः विमृष्टः ।

भाट्टदीपिकायां नवमप्रथमप्रथमाधिकरणे खण्डदेवाचार्यैः ऊहलक्षणं परिष्कृत्य ऊहोपोद्घाततया प्रोक्षणावघातादीनां "अग्नये जुष्टं निर्वपामि" इत्यादि मन्त्रेषु अग्न्यादिपदानाञ्च प्रकृतौ व्रीह्यादिस्वरूपोद्देशेन विधानम् उत अपूर्वसाधनत्वोद्देशेन इति विचारः कृतः । सिद्धान्तबोधकैकसूत्रघटितमिदमधिकरणम् । तच्च सूत्रम् – **"यज्ञकर्मप्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारः तत्प्रयुक्तस्तदर्थत्वात्"**[1] । इति । पूर्वं सप्तमाध्याये अष्टमाध्याये च सामान्यविशेषभेदेन अतिदेशविचारः कृतः । अतिदेशोपजीवित्वात् ऊहस्य अतिदेशनिरूपणानन्तरमूहो निरूप्यते इति पूर्वोत्तराध्याययोः हेतुहेतुमद्भावसङ्गतिः । अत एव भाट्टदीपिकायां **"तदेवं सिद्धे अतिदेशे तत्प्रापितपदार्थविषयः ऊहश्चिन्त्यते"** इत्युक्तम् ।

त्रिविधश्चोहः निरूप्यते । मन्त्रोहः , सामोहः, संस्कारोहश्चेति । तत्र ऊहो नाम प्रकृतौ अन्यथा दृष्टस्य विकृतौ अन्यथाभावः । तत्त्वं च – येन सम्बन्धेन यद्धर्मावच्छिन्नवृत्तित्वं यस्य प्रकृतौ श्रुतं तस्य तेन सम्बन्धेन विकृतौ तद्धर्मावच्छिन्नभिन्नवृत्तित्वम् । लक्षणसमन्वयः – अस्ति चेदं "देवस्यत्वा........अग्नये जुष्टं निर्वपामि" इत्यादिमन्त्रेषु व्रीहीन् प्रोक्षति, व्रीहीन् अवहन्ति इत्यादिवाक्यविहितप्रोक्षणादिसंस्कारेषु च । मन्त्राणां स्मारकत्वसम्बन्धेन अग्नित्वावच्छिन्नवृत्तित्वं प्रकृतौ आग्नेययागे श्रुतम्, विकृतौ च सौर्ये तेनैव सम्बन्धेन अग्नित्वावच्छिन्नभिन्नसूर्यवृत्तित्वात् ।

एवं प्रोक्षणावघातादीनामपि संस्कार्यतासम्बन्धेन व्रीहित्वावच्छिन्नवृत्तित्वं प्रकृतौ दर्शपूर्णमासयोः श्रुतं, विकृतौ श्यामाकचरौ अनेनैव सम्बन्धेन व्रीहित्वावच्छिन्नभिन्नश्यामाकवृत्तित्वात् ।

एवं साम्नामपि आईभावादिरूपाणां, येन सम्बन्धेन संस्कार्यता सम्बन्धेन यत्स्थानगतैकारवृत्तित्वं प्रकृतौ प्रकृतिग्रन्थे श्रुतं, विकृतौ च उत्तराग्रन्थे तेषां तेनैव सम्बन्धेन तत्स्थानभिन्नस्थानगतैकारवृत्तित्वादूहः ।

अत्र लक्षणे सम्बन्धैक्यविवक्षायां प्रकृतौ अग्नीषोमीयपशुयागे पशुपुरोडाशयागोद्देशांशस्य स्मारकत्वसम्बन्धेन अग्नीषोमदेवतावृत्तेः विकृतौ सौत्रामण्यामन्यदेवताविधानेन आरादुपकारकस्य सम्बन्धान्तरेण क्रतूपकारवृत्तित्वात् अतिप्रसङ्गवारणाय सम्बन्धैक्यविशेषणम् । सौत्रामण्याम् आश्विनसारस्वतऐन्द्राः पशुयागाः ।

[1] जै.सू.९-१-१

पुरोडाशे तु ऐन्द्र वारुण सावित्राः पशुयागा इति देवताभेदः । प्रकृतावेव व्रीहित्वाद्यवच्छिन्नवृत्तित्वेन श्रुतानामवघातादीनां तद्भिन्नयवादिवृत्तित्वात्, तद्वारणाय प्रकृतिविकृतिपदोपादानम् । प्रकृतिस्थव्रीहिव्यक्त्यपेक्षया सौर्यादिविकृतिस्थव्रीहिव्यक्तीनां भेदात् आतिदेशिकव्रीहिमत्सौर्यादावेव अवघातादीनाम् ऊहवारणार्थं यद्धर्मावच्छिन्नेति विशेषणम् । सौर्यस्थव्रीहिषु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकव्रीहिभेदसत्त्वेऽपि व्रीहित्वावच्छिन्नप्रतियोगिताकभेदाभावात् ।

यवसाध्यविकृतौ ऊहाङ्गीकारेऽप्यदोषः । अपूर्वसाधनत्वस्य तात्पर्यज्ञानाधीनत्वेन निरुक्तश्रुतत्वाभावात् । अत्र च अग्निपदस्थाने सूर्यादिपदप्रक्षेपेऽपि अवशिष्टमन्त्रस्य प्राकृतत्वात् लक्षणे तस्य इति शब्दः न विरुध्यते ।

एवं च यत्र प्राकृत ऋक्स्थाने ऋगन्तरस्य ऊहः तत्र तदनुरोधेन तस्य इति पदं प्राकृततत्कार्यापन्नान्यतरपरमिति संक्षेपः । अत्र यतः अङ्गानि अतिदिश्यन्ते सा प्रकृतिः । यस्मिन् अङ्गानि अतिदिश्यन्ते सा विकृतिः इत्येवं प्रकृतिविकृतिपदेन गृह्यते । तेन सामोहस्यापि सङ्ग्रहः ।

स च ऊहः प्राकृतपदार्थानां प्रकृतौ यद्रूपावच्छिन्नोद्देश्यसम्बन्धित्वेन विधानं तद्रूपावच्छिन्नसम्बन्धित्वेनैव अतिदेशे सिद्ध्येत् । न तु स्वरूपेणैवातिदेशे । स्वरूपेणैवातिदेशे अग्निपदस्यैव अतिदेशेन सौर्ये तस्यैव अदृष्टादिप्रयोजनान्तरकल्पनया प्रयोगोपपत्तौ ऊहो न स्यात् । अत एव उपकारपृष्ठभावेन पदार्थानां विकृतावतिदेशः । भाट्टदीपिकायां भाष्यस्य द्वितीयवर्णकाभिप्रायेण ऊहोपोद्घाततया अधिकरणरचना कृता ।

अत्र "अग्नये जुष्टं निर्वपामि"[1] "व्रीहीन् प्रोक्षति"[2] "व्रीहीनवहन्ति"[3] इत्यादीनि दर्शपूर्णमासप्रकरणपठितानि वाक्यानि विषयः । ऊहोपोद्घाततया इदमधिकरणं प्रवर्तते इति उपोद्घातसङ्गतिः ।

अत्र संशयः - प्रोक्षणावघातादीनां "अग्नये जुष्टं निर्वपामि" इत्यादौ अग्न्यादिपदानां च प्रकृतौ व्रीहित्वाग्नित्वाद्यवच्छिन्नोद्देशेन विधानं, ततश्च व्रीह्यग्न्यादिप्रयुक्ताः ते । अथवा अपूर्वसाधनत्वावच्छिन्नोद्देशेन । ततश्च अपूर्वप्रयुक्तास्ते इति । संशयबीजं तु – अपूर्वसाधनत्वार्थत्वे एव ऊहसिद्धिर्भवति । स्वरूपप्रयुक्तत्वे तु ऊहापेक्षाभावात् ऊहारम्भो न भवति । अतः संशयः ।

अत्रायं पूर्वः पक्षः – यत्रापि आरादुपकारकस्थले उद्देश्यतावच्छेदकं न श्रुतं तत्रापि करणानुग्राहकाकांक्षारूपेतिकर्तव्यताकांक्षात्मकप्रकरणेन यागाङ्गतयैव प्रयाजादिविधानात् यागत्वमेव उद्देश्यतावच्छेदकम् । न तु अपूर्वसाधनत्वम् । अपूर्वसाधनत्वोद्देशेन विधाने प्रयाजाद्यङ्गानां प्रधानस्य च उभयोरपि अपूर्वसाधनत्वेन समप्राधान्यं स्यात् । अपि च अङ्गानां पारिप्लवत्वापत्तिः इति चेत् अनुवादस्य सति सम्भवे सन्निहितगामित्वनियमेन आग्नेययागस्यैव उद्देश्यतावच्छेदकत्वम् ।

न वा अतिदेशोच्छेदः अपूर्वविशेषार्थत्वे इव आग्नेयाद्यर्थत्वेऽपि "तद्वत्कुर्यात्" इत्यतिदेशेन आग्नेयस्थानापन्ने सौर्ये धर्मातिदेशः सिद्ध्यति । अस्यायमभिप्रायः – प्रयाजादीनां यागस्वरूपार्थत्वे यागस्वरूपं लोकतः अवगतमिति इतिकर्तव्यतापेक्षा नास्तीति सौर्ये किमर्थमतिदेशकल्पना इति चेत् यागस्वरूपं लोकतोऽवगतमपि शास्त्रप्रामाण्यात् इतिकर्तव्यातां विना अनुष्ठानं न शक्यते इति अपूर्वविशेषार्थत्वे इव

[1] तै.सं.(दर्शपूर्णमासप्रकरणम्)

[2] तै.सं.(दर्शपूर्णमासप्रकरणम्)

[3] तै.सं.(दर्शपूर्णमासप्रकरणम्)

आग्नेयाद्यर्थत्वेऽपि तद्वत्कुर्यादित्यतिदेशः उपपद्यते । अतः सौर्ये धर्मातिदेशः सिद्ध्यतीति ते यागप्रयुक्ता एव । तथा च व्रीह्यादिपदसंयोगेनैव प्रोक्षणादिश्रवणात् व्रीहित्वादिकमेव उद्देश्यतावच्छेदकम् ।

व्रीह्यादीनां प्रोक्षणादिव्यतिरेकेणापि जायमानतया स्वरूपे आनर्थक्यमिति चेत् एतादृशानर्थक्यपरिहारार्थं प्रोक्षणादिविशिष्टव्रीहीणामेव कल्पितवाक्यान्तरेण यागार्थत्वमङ्गीक्रियते । व्रीहीन् प्रोक्षति इति विधिना प्रोक्षणं व्रीह्युत्पादकत्वेन विधीयमानं स्वतस्सिद्धव्रीहिषु अनुपपन्नम् । अतः प्रोक्षणविधिरेव स्ववैयर्थ्यपरिहारार्थं वाक्यान्तरं परिकल्प्य प्रोक्षणादिविशिष्टव्रीहीणां यागसाधनत्वं बोधयति ।

यदि प्राथमिकशाब्दबोधसिद्ध्यर्थं व्रीहिपदे अवश्यं लक्षणा स्वीकर्तव्या, तदा लाघवात् उपस्थितत्वाच्च विजातीययागसाधनव्रीहित्वादिकमेव लक्ष्यते न तु अपूर्वसाधनत्वम् । यागस्य प्रोक्षणादिव्यतिरेकेणापि जायमानत्वात् आनर्थक्यापत्तिः इति चेत् प्रोक्षणादिव्यतिरेकेणापि यागत्वस्य जायमानत्वेऽपि विजातीययागत्वावच्छिन्नस्य प्रोक्षणादिव्यतिरेकेण जायमानत्वे प्रमाणाभावात् । अतः प्रोक्षणादेरेव विधिबलेन तत्सामग्रीत्वात् तद्व्यतिरेकेण यागस्वरूपोत्पत्तौ प्रमाणाभावेन प्रोक्षणादीनां न यागस्वरूपार्थत्वे आनर्थक्यम् । अत एव आरादुपकारकाणामपि अङ्गानां यागस्वरूपार्थत्वे न आनर्थक्यमिति प्रोक्षणावघातादिधर्माणां व्रीहित्वादिकमेव उद्देश्यतावच्छेदकमिति व्रीह्यग्न्यादिप्रयुक्ताः ते धर्माः इति पूर्वपक्षसंक्षेपः ।

सिद्धन्तस्तु - विजातीययागसाधनत्वं न धर्माणामुद्देश्यतावच्छेकम् । तथा हि - यागं प्रति द्रव्यं कारणमिति सामान्यतः अवगम्यते । विजातीययागव्यक्तीनामपि यागत्वावच्छिन्नव्यक्त्यन्तर्गततत्वात् यागत्वावच्छिन्नं प्रति द्रव्यत्वावच्छिन्नस्य लोकत एव कारणत्वमवगतम् । सामग्रीवशेन व्रीह्यादिद्रव्यं विनापि द्रव्यान्तरेण कदाचित् विजातीययागव्यक्तीनामनुत्पत्तौ बाधकं नास्तीति पुनः आनर्थक्यमेव ।

तदुपरि शङ्कते – ननु सामान्यसामग्र्या विशेषकारणसमवहितायाः कार्यजनकत्वं न स्यात् इति चेत् अन्यत्र एवं नियमाङ्गीकारेऽपि प्रकृते तथा कल्पनायां प्रमाणं नास्ति । "तदेव यादृक् तादृक्च होतव्यम्" इति लिङ्गं बाधितं स्यात् । अत एव अनयैव व्रीह्यादिविधीनां पक्षप्राप्तिमुपपाद्य फलतो नियमविधित्वमुपपद्यते प्रतिनिधिश्च । अतः द्रव्यतत्संस्कारविधयः सर्वे अपूर्वसाधनीभूतविषया एव । अपूर्वत्वावच्छिन्नं प्रति द्रव्यत्वादिना कारणत्वस्य लोकत अनवगतत्वेन प्रतिबन्धकत्वं न स्यात् । आरादुपकारकाणामपि उत्पत्त्यपूर्वजननानुकूलयागनिष्ठयोग्यतासम्पादनद्वारा अपूर्वार्थत्वम् । न तु यागार्थत्वम् , आनर्थक्यापत्तेः । यागनिष्ठयोग्यतासम्पादकत्वाच्च न प्राधान्यापत्तिः । न अङ्गत्वविघातो वा ।

पूर्वपक्षे – व्रीहित्वाद्यवच्छिन्नोद्देशेनैव प्रोक्षणादिविधिः । लक्षणाङ्गीकारो नास्ति । पश्चात् प्राथमिकशाब्दबोधसिद्ध्यर्थं वाक्यान्तरकल्पनया प्रोक्षणादिविशिष्टव्रीहीणाम् अपूर्वार्थत्वकल्पनमित्युक्तम् । तत्तु प्रोक्षणादेः तज्जन्यादृष्टस्य वा व्रीहित्वावच्छिन्नभाव्यकत्वे स्वरूपे आनर्थक्यप्रसङ्गेन अयोग्यतानिश्चयस्यैव प्रतिबन्धकत्वेन शाब्दबोध एव नोदेति । अतः लक्षणाङ्गीकरणम् । अतः व्रीह्यादिपदेन अपूर्वसाधनत्वलक्षणात् अपूर्वसाधनत्वोद्देशेनैव प्रोक्षणादिविधिः इति ते धर्माः अपूर्वप्रयुक्ताः इति सिद्धः श्यामाकादावूहः ।

नन्वेवमपि अङ्गानुष्ठाने व्रीहित्वादीनामपि अनुष्ठापकतया निमित्तत्वात् विकृतौ तदभावे अङ्गानां लोपापत्तिः इति चेत् यच्छब्दाद्यभावे व्रीहित्वादीनां निमित्तत्वे प्रमाणं नास्ति । तस्मात् अपूर्वसाधनत्वस्यैव उद्देश्यतावच्छेदकत्वात् अपूर्वस्यैव निमित्तत्वम् ।

अन्ते वस्तुतस्तु इत्यादिना – फलेच्छायाः अनुष्ठापकत्वेऽपि फलस्य असिद्धस्य अनुष्ठापकत्वे प्रमाणाभावात् फलीभूतमपूर्वमपि न निमित्तम् । एवं च यागत्वस्यापि निमित्तत्वं न सम्भवति । तथा च अस्मिन्नधिकरणे आरादुपकारकाणामङ्गानामपूर्वार्थत्वं दृष्टान्तीकृत्य सन्निपत्योपकारकाणामङ्गानामपि अपूर्वार्थत्वम् उहोपोद्घाततया प्रतिपादितम् ।

**मन्त्रोहः –** "देवस्यत्वा.......अग्नये जुष्टं निर्वपामि" इत्यास्मिन्मन्त्रे अग्निशब्दः कर्मणि समवेतार्थो न वेति विचार्यते । समवेतार्थत्वे ऊहः सिद्ध्यति अन्यथा न सिद्ध्यतीति विचारः क्रियते । यद्यपि अग्निः यागे समवेतः अङ्गत्वेन । "अग्नये" इति चतुर्थी श्रूयते । चतुर्थ्याः सम्प्रदानत्वमर्थः । सम्प्रदानत्वेन श्रुतस्याग्नेः यागाद्यतिरिक्ते निर्वापे अन्वयो न सम्भवति । अतः तादर्थ्यचतुर्थीमङ्गीकृत्य जुष्टपदार्थे अन्वयो वक्तव्यः । "जुषी प्रीतिसेवनयोः" इति धातोः भूते क्तप्रत्यये सति निष्पन्नस्य जुष्टशब्दस्य सेवनार्थकत्वं प्रतीयते । अतश्च अग्निना सेवितमित्यर्थः सिद्ध्यति । निर्वापावस्थायां चाग्निना सेवनाभावात् भूतकालवाचिक्तप्रत्ययान्वयो न सम्भवति । अतः "अग्नये जुष्टम्" इत्यस्य असमवेतार्थकत्वम् । अग्निना पूर्वं सेवितमिदमतः प्रशस्तं निर्वपामि इति अग्निसेवनकर्मकत्वस्य निर्वापस्तुत्यर्थमुपादानात् सौर्यादावपि तदुपपद्यते इत्यनूहः इति आक्षेपे प्राप्ते –

सिद्धान्तः – यद्यपीयं तादर्थ्यचतुर्थी जुष्टपदेनैव अन्वयश्च । तथापि "अग्नये जुष्टम्" अग्निना सेवितं यथा भवति तथा निर्वपामि इति क्रियाविशेषणत्वेन भविष्यज्जोषणपरत्वे सति समवेतार्थत्वम् । क्तप्रत्ययः भविष्यदर्थे लाक्षणिकः । अग्निपदस्य निर्वापफलप्रकाशनेन इतरदैवत्वहविर्विवेकसम्पत्त्यर्थतया निर्वापे देवतासंयोगस्य समवेतार्थत्वम् । अन्यथा कस्यै देवतायै निरुप्तमिति निर्णयो न स्यात् । देवतासम्बन्धकीर्तनप्रयोजनन्तु निर्वापे हविर्विवेकसम्पत्त्यर्थतया समवेतार्थत्वम् । एवं च समवेतार्थत्वात् अग्निपदे ऊहः सिद्ध्यतीति सिद्धान्तः ।

**सामोहः** – मन्त्रोहप्रसङ्गात् सामोहः विचार्यते इति सङ्गतिः । ज्योतिष्टोमे अग्निष्टोमस्तोत्रावान्तरप्रकरणे **"यज्ञायज्ञीयेन स्तुवीत"** इति । सामोहो नाम यदन्यवृत्तिनः साम्नः अन्यवृत्तित्वम् । यज्ञायज्ञेति शब्दयुक्तायां ऋच्युत्पन्नं साम यज्ञायज्ञीयम् इति । तस्यां ऋचि गिरा गिरा इत्येवं द्विवारं गिराशब्दः श्रूयते । यथा **"यज्ञायज्ञावो अग्नये गिरागिरा च दक्षसे, प्रप्रवयममृतं जातवेदसं प्रियं मित्रं न शंसिषम्"** इति । तत्र ब्राह्मणवाक्यमपि श्रूयते **"न गिरा गिरेति ब्रूयात्, ऐरं कृत्वा उद्गेयम्"** इति ।

सामगास्तु स्वाध्यायपाठे गकारेण सहैव गायन्ति । गायीराः गिरा इति । ब्राह्मणे तु – गकारलोपपूर्वकम् आकार यकारादिकं गानं विधीयते । **"ऐरं कृत्वा उद्गेयम्"** इति । गिराशब्दे गकारलोपात् इराशब्दो भवति । इरायाः सम्बन्धिगानम् ऐरम् । तादृशं कृत्वा उद्गानं कर्तव्यम् । अत्र प्रकृतिग्रन्थब्राह्मणग्रन्थयोः समानबलत्वेन विशेषाभावात् विकल्पेन प्रयोक्तव्यम् इति प्राप्ते – **"न गिरा गिरेति ब्रूयात् यद्गिरा गिरेति ब्रूयात्, आत्मानमेव तदुद्गाता गिरेत्"** इति गकारसहितगाने बाधमुक्त्वा गकाररहितमिरापदं गेयत्वेन विधीयते । तत्पदादेरिकारस्य गानार्थमाकारो यकार इकारश्चेति त्रीन् वर्णान् प्रयुञ्जते । अतः आयीरा यीरा इत्येव गातव्यमिति साम्नः ऊहः सिद्ध्यति ।

**संस्कारोहः** – वाजपेये **"नैवारश्चरुर्भवति"** इति नैवारश्चरुः श्रुतः । तत्र नीवाराणां व्रीहिस्थानापन्नत्वे प्रमाणाभावात् व्रीहिधर्माः प्रोक्षणावघातादयो नीवारेषु न कर्तव्याः इत्याक्षेपे समाधानं कथ्यते – नैवारः इत्यस्य

नीवारद्रव्यकमिदं कर्म इति विग्रहात् व्रीहयः यथा तण्डुलद्वारेण हविर्निष्पादसाधनं तथा नीवारा अपि । तस्मात् सन्ति प्रोक्षणादयः नीवारेषु इति प्रोक्षणादयः संस्काराः ऊह्यन्ते ।

ऊहापवादः कुत्रेति उदाहरणमेकं प्रदर्श्यते । प्रकृतावेव नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहिशब्दस्य ऊहो नास्ति । तथा हि श्रुतस्य द्रव्यस्य अपचारे नाशे वा भूयोवयवसादृश्यविशिष्टं द्रव्यान्तरं तस्य प्रतिनिधित्वेन विहितम् । यथा सोमाभावे पूतीकाः, व्रीह्यभावे नीवाराः इत्यादिना । तदेतत् षष्ठाध्याये विचारितम् ।

प्रतिनिहितेषु नीवारेषु **“व्रीहीणां मेध”** इत्ययं मन्त्रः ऊहितव्यः । कुतः ? अर्थानुसारात् इति पूर्वपक्षे प्राप्ते – सिद्धान्तः – विकृतौ नीवारचरौ नीवाराः होमसाधनत्वेन विहिताः । व्रीहिस्थानीयतया भवति तत्र ऊहः । इह तु नीवाराः न साधनत्वेन विहिताः किन्तु भूयोवयवसादृश्यद्वारा प्रतिनिधित्वेन प्राप्ताः । ततः अवयवानामेव साधनत्वम् । तथा सति व्रीह्यवयवेषु अविकारेण यथा व्रीहिशब्दः तथा नीवारावयवेष्वपि प्रवृत्तेः नास्त्यूहः । एवं च प्रतिनिधिस्थले ऊहो नास्तीति सिद्धान्तः । इत्येवमादिरूपेण द्वादशलक्षण्यां नवमाध्याये सापवादं ऊहः विचारितः ।

॥ इति शम् ॥

अनुशीलितग्रन्थाः –

- भाट्टदीपिका ।
- शम्भुभट्टियम् (प्रभावलिव्याख्यानम्) ।
- शाबरभाष्यम् ।
- अध्वरमीमांसाकुतूहलवृत्तिः ।
- शास्त्रदीपिका ।

# न्यायमञ्जरीकारोक्तदिशा प्रत्यक्षलक्षणविचारः

**डा. रामचन्द्रुल बालाजी**
आचार्यः, शिक्षाशास्त्रविद्याशाखा
केन्द्रीयसंस्कृतविश्वविद्यालयः, राजीवगान्धीपरिसरः, शृङ्गेरी

**सारांशः –**

न्यायमञ्जरीकारेण जयन्तभट्टेन न्यायसूत्रकारैः गौतममहर्षिभिः प्रतिपादितं प्रत्यक्षलक्षणसूत्रम् विस्तारेण व्याख्यातम् । अनेनापि लक्षणघटकपदानां प्रत्येकं प्रयोजनं कथितम् । भाष्यकारेण अकथितं दलसार्धक्यमपि जयन्तभट्टेन प्रदर्शितम् । ज्ञानपदं विशेष्यसमर्पकतया आवश्यकमिति प्रतिपादितम् । अन्यथा विशेषणानि निरालम्बनानि स्युः । विवादास्पदस्य अव्यपपदेश्य प्रयोजनविषये जयन्तभट्टेन विस्तारेण विचारः कृतः । बहूनि प्राचीनाचार्याणां मतानि च उल्लिखितानि । अतः न्यायमञ्जर्याः अध्ययनेन सूत्रभाष्यव्याख्याकाराणांविविधानि मतानि अस्माभिः ज्ञातुं शक्यन्ते । अत्र संक्षेपेण प्रत्यक्षलक्षणविचारः प्रतिपादितः ।

**कुञ्चिकापदानि –**

सन्निकर्षः, अव्यभिचारः, व्यवसायः, अव्यपदेश्यम्, मरुमरीचिकाः, भौमोष्मा, विपर्ययः, योगपक्षः, विशेषधर्मः, व्यवृत्तिः इत्यादयः ।

‘जयन्तभट्टेन न्यायमञ्जर्यां प्रत्यक्षलक्षणसूत्रं विस्तारेण व्याख्यातम् । अनेनापि लक्षणघटकपदानां प्रत्येकं प्रयोजनं कथितम् । ज्ञानपदस्य प्रयोजनं प्रथमतस्तेन वार्तिकानुसारेणैव प्रतिपादितम् । ज्ञानपदग्रहणं विशेष्यनिर्देशार्थम् । इतराणि इन्द्रियार्थ सन्निकर्षोत्पन्नादीनि विशेषणानि। असति विशेष्ये तेषां विशेषणत्वमेव न संभवतीति विशेष्यसमर्पकतया ज्ञानपदम् । अथवा सुखादेरपि इन्द्रियार्थसन्निकर्षोत्पन्नत्वेन प्रत्यक्षप्रमात्ववारणाय ज्ञानपदसार्थक्यम्''[1] उक्तम् ।

‘अत्र बौद्धाः विज्ञेयस्य सर्वस्य विज्ञानरूपत्वेन सुखादीनामपि ज्ञानस्वरूपत्वात् ज्ञानपदेन तद्वारणं न भवतीति वदन्ति । तदसत्, विषय विषयिणोः भेदस्यानुभूयमानत्वात्'[2]।

ननु सुखस्य इन्द्रियार्थसन्निकर्षोत्पन्नत्वेऽपि अव्यभिचारित्वं नास्ति । व्यभिचाराव्यभिचारौ ज्ञानधर्माविव न सुखधर्मौ । अतः अव्यभिचारपदोपादानादेव सुखादिवारणसंभवे सुखादि व्यावर्तनाय ज्ञानपदमिति कथनमनुचितमिति वक्तुं नैव शक्यते । यथा ज्ञाने व्यभिचाराव्यभिचारौ वर्तेते, तथा सुखेऽपि व्यभिचाराव्यभिचारौ वर्तेते।

'अतस्मिन् तद् भावो व्यभिचारः, तस्मिन् तद्भावोऽव्यभिचारः' । यथा शुक्तिकायां रजतज्ञानं व्यभिचारः । परदाराभिमर्शादि निषिद्धाचरणजन्यं सुखं व्यभिचार्येवेति अव्यभिचारि पदेन वारणासंभवात् सुखादि व्यावर्तनाय ज्ञानपदमावश्यकम्'[3] ।

---

[1] न्या. मं – पृ. 70

[2] न्या. मं – पृ. 70

[3] न्या. मं – पृ. 72

'अपरेत्वेवं वदन्ति । माभूत् अव्यभिचारिपदेन सुखादिव्यावर्तनम् । व्यवसायपदेन सुखादि वारणं संभवति । सुखदुःखादयः व्यवसायात्मिकाः न भवन्ति । ज्ञानमेव व्यवसायात्मकम् । संशयव्यवच्छेदार्थं च व्यवसायपदमावश्यकम् । तेनैव सुखादि व्यावर्तनसंभवे ज्ञानपदं व्यर्थमिति । तत् सत्यमेव ।

व्यवसायपदेन सुखादिव्यवच्छेदे सत्यपि धर्मिनिर्देशाय ज्ञानपदमावश्यकमेव । अन्यथा विशेषणानि निरालम्बनानि स्युः । विशेष्याभावे श्रोतृ बुद्धिः न समाहिता भवतीति ज्ञानपदमावश्यकम्"[1] । विवादास्पदस्याव्यपदेश्यपदस्य प्रयोजनविषये जयन्तभट्टेन विस्तारेण विचारः कृतः बहूनि प्राचिनाचार्याणां मतानि च समुल्लिखितानि। तैर्विहितान्यन्यमतखण्डनान्यपि लिखितानि । अतो न्यायमञ्जर्याः मध्यकाले सूत्र-भाष्य-व्याख्याकारणां विविधानि मतान्यस्माभिः ज्ञातुं शक्यन्ते । तत्र प्रथमं वृद्धनैयायिकानां मतं प्रदर्शितम् । वृद्धनैयायिकास्तावत् इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं विषयवाचकशब्दैः रूपज्ञानं, रसज्ञानं इति शब्दैः व्यपदिश्यत इति तस्य प्रत्यक्षप्रमात्व व्यवच्छेदाय अव्यपदेश्यपदस्य ग्रहणमिति । तदुक्तम् 'शब्दानामर्थसंस्पर्शत्वं शाक्यमतनिरासेन साधयिष्यत इति शब्दानुप्रवेशवशेन व्यपदेश्यं नाम ज्ञानमुपपद्यत इति तद्व्यवच्छेदार्थमव्यपदेश्यपदम्"[2] इति । एतेन शब्दव्यवपदेश्यस्य सविकल्पकज्ञानस्य प्रत्यक्षत्वव्यवच्छेदे निर्विकल्पज्ञानस्यैव प्रत्यक्षप्रमात्वमिति सूत्रकाराभिमततया ज्ञायते '। तदेतन्मतम् अन्यैः नाङ्गीक्रियते । 'नामधेयशब्दव्यपदेश्यत्वमात्रेण तस्य प्रत्यक्षत्वनिराकरणं न समुचितम् । नामधेयव्यपदेश्योऽपि ज्ञानं विषयाव्यभिचारि निस्संशयं च यदि भवति तदा प्रमैव भवितुमर्हति। यदि विषयः व्यभिचारि स्यात् तदा अव्यभिचारिपदेन तद्वारणं भविष्यति । संशयरूपं चेत् व्यवसायात्मिक इति पदेन वारणं भविष्यति । अतः तद् व्यवच्छेदाय न अव्यपदेश्यपदस्यावश्यकता । अतः अव्यपदेश्यपदस्य भिन्नं प्रयोजनं वक्तव्यमिति'[3] । तदित्थम् - अस्य शब्दस्यायमर्थः इति वृद्धव्यवहारतः व्युत्पद्यमानो जनः अयं पनसः इति वृद्धोदीरित वाक्यात् पुरोऽवस्थितं तं शाखादिमन्तम् अर्थं पनसशब्दवाच्यतया जानाति ।

एतादृशं ज्ञानम् इन्द्रियजन्यमपि न केवलमिन्द्रियकरणकं भवितुमर्हति । असति सञ्ज्ञोपदेशिनि शब्दे तदनुत्पादात् इति शब्देन्द्रियाभ्यां सम्भूयचरितत्वात् उभयजन्यमिदं ज्ञानं व्यपदेशाज्जातमिति व्यपदेश्यमुच्यते । अव्यपदेश्यपदेन एतादृशं ज्ञानं व्युदस्यते (निराक्रियते) इति । वस्तुतः विचार्यमाणे इदं ज्ञानं शाब्दमेव, तत्रेन्द्रियसन्निकर्षस्यापि कारणत्वेन प्रत्यक्षत्वप्रसक्तौ तन्निराकरणार्थम- व्यपदेश्यपदम्"[4] ।

अव्यपदेश्यं = शब्दनुप्रवेशरहितम् ।

पूर्वोक्तायं पनस इति ज्ञानं शब्दानुप्रवेशयुक्तमिति कृत्वा न तस्य प्रत्यक्षत्वमिति । एतद् व्याख्यानमपि अन्यैः निराक्रियते । पूर्वोक्तं शब्देन्द्रियोभयजन्यं अयं पनसः इति ज्ञानं प्रत्यक्षमेव भवितुमर्हति, इन्द्रियान्वयव्यतिरेकानुविधायित्वात् । अतः तस्य लक्ष्यतया तद्व्यवच्छेदार्थम- व्यपदेश्यपदं न भवति । किन्तु असंभवदोषव्यवच्छेदार्थम् अव्यपदेश्यपदोपादानमिति । तथाहि सति लक्ष्ये लक्षणवर्णनमुचितम् । लक्ष्यं

[1] न्या. मं – पृ. 73

[2] न्या. मं – पृ. 73

[3] न्या. मं – पृ. 73

[4] न्या. मं – पृ. 73-74

प्रत्यक्षमेव नास्ति। इन्द्रियार्थसन्निकर्षोत्पन्नतया इयं गौरितिज्ञानं यत् अन्यैः प्रदर्श्यते तत् ज्ञानं शब्दावच्छिन्नार्थविषयकत्वेन शाब्दमेव। विषयविशेषेनैव ज्ञानानामतिशयः प्रतिपादनीयः । यथा अयं दण्डी, अयं शुक्लः इति ज्ञानं विशेषणावच्छिन्न विशेष्यविषयकतया सातिशयित्वं प्राप्नोति । तथा गौरितिज्ञानमपि वाचकावच्छिन्नवाच्यविषयत्वेन सातिशयित्वं प्राप्नोति। शब्दावच्छिन्नवाच्यविषयकत्वात् इदं ज्ञानं शाब्दमेव नेन्द्रियकारणकं भवितुमर्हति । चक्षुषः विशेषणीभूतशब्दे सामर्थ्याभावात् न चक्षुः करणकत्वम् । विशेष्ये सामर्थ्याभावात् श्रोत्रस्यापि न करणत्वम् । श्रोत्रचक्षुरुभयकरणकमिदं ज्ञानमिति वक्तुं नैव शक्यते । इन्द्रियद्वयजन्यस्य एक ज्ञानस्यानङ्गीकारात् । नापि सुगन्धि बन्धूकबोधवत् मानसमिदं ज्ञानम् । करणान्तर व्यापारासहकृतेन जायमानं ज्ञानं मानसं भवति । करणान्तरव्यापारे सत्यपि ज्ञानस्य मानसत्वाङ्गीकारे सर्वेषां ज्ञानानां मानसत्वमेवेति मनः एकमेव प्रत्यक्षं प्रमाणं स्यात् । अतः शब्दकरणकमेवेदम् । इयं गौरिति ज्ञानं शाब्दमेव । अस्ति शब्दस्य सर्वप्रकाशनसामर्थ्यम्'[1] । 'एवं सर्वस्य ज्ञानस्य शाब्दत्वात् प्रत्यक्षरूपलक्ष्यस्यैवाभावात् लक्षणं न संभवति । इति असंभवदोषशङ्कायाः वारणार्थम- व्यपदेश्यपदमिति । प्रथमम् इन्द्रियसन्निकर्षात् शब्दोल्लेखनं विनैव यत् ज्ञानं तत् शब्दाजन्यत्वात् शब्दावच्छिन्नवाच्याविषयकत्वाच्च शाब्दं न भवति । इन्द्रियसन्निकर्षमात्रोत्पन्नमिति तत् प्रत्यक्षं लक्ष्यं वर्तते इति नासंभवदोषः"[2] । अत एव भाष्ये 'व्यवहारकाले शब्दः व्याप्रियते[3] न पूर्वमित्यभिहितम् ।

एतदपि मतं केचन नाङ्गीकुर्वन्ति । तेषामयमाशयः, इन्द्रियार्थसन्निकर्षोत्पन्नम् अयं गौरिति ज्ञानं न शाब्दं, नापि शब्दावच्छिन्नार्थविषयकम् । शब्दस्य तज्ज्ञानविषयत्वे प्रमाणाभावात् । शब्दस्तु अर्थप्रतीतौ करणं स्यात्, न तज्ज्य ज्ञानविषयः ।

ननु सूर्यः यथा स्वात्मानं विषयं च प्रकाशयति, एवं शब्दः अर्थस्य प्रकाशकः सन् स्वात्मनोऽपि प्रकाशक इति तज्ज्यज्ञानविषयत्वं संभवतीति चेत्, न, सङ्केतावगमसमये श्रुतः गौरित्यादि शब्दः नष्ट इति कथं तस्य ज्ञानहेतुत्वं ज्ञानविषयत्वं संभवति ? न च श्रुतस्य शब्दस्य ज्ञानकरणत्वाभावेऽपि स्मृतस्य शब्दस्य ज्ञानकरणत्वे, सम्भवतीति वाच्यम् । एकस्यैव स्मृतस्य शब्दस्य करणत्वं कर्मत्वं न संभवति। स्मर्यमानेन शब्देनापि यत्र शाब्दबोधः अङ्ङ्गीक्रियते तत्र प्रथमं शब्दस्मरणं, ततः अर्थज्ञानम् । अर्थज्ञानकाले शब्दः नैव भासते। अतः शब्दावच्छिन्नार्थविषयकत्वं ज्ञानस्य न संभवतीति शाब्दत्वाप्रसक्त्या असंभवदोषव्यवच्छेदार्थमव्यपदेश्यपदमिति वक्तुं नैव शक्यते । तदेतन्मतमाक्षिपन्तः प्रवराः गौरित्यादि ज्ञानस्य वाचकावच्छिन्न वाच्यविषयकत्वं साधयन्तः असंभवदोषवारणार्थमेवाव्यपदेश्यपदमिति कथयन्ति । तेषां प्रवराणामयमाशयः । इयं गौरिति ज्ञानस्य वाचकावच्छिन्नवाच्यविषयत्वानङ्गीकारे प्रथमं अक्षिसन्निकर्षजन्यात् निर्विकल्पकज्ञानात् अस्य ज्ञानस्य भेदो न स्यात्, अर्थविषयकत्वं चोभयत्र समानम् । अतः प्राथमिके निर्विकल्पकज्ञाने शब्दः विशेषणतया न भासते । तदनंतरजायमान इयं गौरिति सविकल्पकज्ञाने, शब्दः विशेषणतया भासत इति तयोः वैलक्षण्य निर्वाहाय वाचकावच्छिन्न वाच्यविषयकत्वम् अवश्यमङ्गीकर्तव्यमिति"[4] |

---

[1] न्या. मं – पृ. 75

[2] न्या. मं – पृ. 76

[3] न्या. मं – पृ. 165

[4] न्या. मं – पृ. 79

तदेतेषां प्रवराणां मतं निराकुर्वन्ति केचनाचार्याः । तेषामयमाशयः । न विषयभेदादेव ज्ञानानां भेदः । किन्तु उपायभेदादपि ज्ञानानां भेदो भवति । पर्वतो वह्निमानिति प्रत्यक्षे, पर्वतो वह्निमान् इत्यनुमितौ च विषयभेदाभावेऽपि उपायभेदसत्त्वात् वैलक्षण्यं संभवति, सविकल्पके निर्विकल्पकज्ञानस्योपायत्वात् । अतः गौरिति ज्ञानस्य वाचकावच्छिन्नवाच्यविषयकत्वाभावात् न शाब्दत्वं किन्तु प्रत्यक्षत्वमेवेति लक्ष्यस्य सद्भावात् लक्षणवैयर्थ्यशङ्का नास्तीति नासंभवदोष- निराकरणार्थमव्यपदेश्यपदम् '[1] |

किमर्थं तर्हि अव्यपदेश्यपदमिति नाशङ्कनीयम् । पूर्वोक्तरीत्या शब्द-इन्द्रियजन्य-ज्ञान व्यवच्छेदार्थम् । तथाहि - यत्र संज्ञिनं निर्दिश्य संज्ञाबुद्धिरुपदिश्यते गोशब्द वाच्योऽयं, पनसशब्द वाच्योऽयम् इति इयं गौः, अयं पनस इति यज्ज्ञानं तस्य शब्देन्द्रियोभयजन्यतया शब्दव्यपदेश्यमिति तद्व्यवच्छेदायाव्यपदेश्यपदम्"[2]।

तदुक्तं कारिकासु-

'अत एव लोकोऽपि शाब्दत्वमभिमन्यते ।
शब्दो परिचिता पूर्वज्ञानातिशयितोषितः '[3]।।
तच्छब्दवाच्यता ज्ञप्तिर्विना संज्ञोपदेशिनः ।
शब्दान्नेति स एवात्र सत्यप्यक्षे प्रकर्ष भाक् ॥

अतः

सूत्रकृताप्यत्र शब्दातिशयदर्शनात् ।
व्यधायि तद् व्यवच्छेदो न तु धर्मोपदेशिना'[4] ।

तस्मादुभयजन्यज्ञानव्यवच्छेदार्थमेवेदं पदमिति ।

एतदपि मतं केचनाचार्याः निराकुर्वन्ति । सङ्केतग्रहणकाले उभयजन्यज्ञानस्य शाब्दत्वमङ्गीकृतं चेत् व्यवहारकालेऽपि सविकल्पकज्ञाने शब्दस्मरणस्य कारणत्वेन स्मृतशब्दजन्यत्वात् व्यवहारकालीन सविकल्पकज्ञानानामपि शाब्दत्वं प्रसज्यत इति सविकल्पकप्रत्यक्षमात्रोच्छेदः स्यात् । अतः उभयजन्यज्ञानव्यवच्छेदपक्षः न समीचीनः । किन्तु जरन्नैयायिकप्रतिपादितः वाचकावच्छिन्न वाच्यविषयकज्ञानव्यवच्छेद पक्ष एव समुचितो भवति ।

अस्मिन् पक्षे व्यपदिश्यत इति व्यपदेश्यः इति कर्मणि कृत्यप्रत्ययान्तः यथार्थ सङ्गतो भवति[5] ॥

अस्मिन् पक्षे यः आक्षेपः वर्तते 'न तादृश ज्ञानमप्रमाणं, न वा पञ्चमं प्रमाणमिति' [6]", तस्याक्षेपस्यायं परिहारः । रूपादिग्रहणकाले यत् इन्द्रियजन्यं ज्ञानं तत् प्रमाणत्वेन (प्रमात्वेन) व्यवह्रियते । परन्तु तदेव ज्ञानं यदा

[1] न्या. मं – पृ. 80
[2] न्या. मं – पृ. 80
[3] न्या. मं – पृ. 74
[4] न्या. मं – पृ. 80
[5] न्या. मं – पृ. 81
[6] न्या. मं – पृ. 81

रूपज्ञानं, रसज्ञानमिति शब्देन व्यवह्रियते तदा प्रमात्वमुपहाय प्रमेयत्वं भजत इति तदा न तत् प्रमा"[1]। तदुक्तम् – 'स्पष्टत्वात् वाचका भावादिन्द्रियान विधानतः

लोकस्य संमतत्वाच्च प्रत्यक्षमिदमिष्यते ॥
शब्दानस्मृतिजत्वेऽपि न शाब्दं ज्ञानमीदृशम् ।
शाब्द स्मृतिः सहायः स्यादिन्द्रियस्य प्रदोषवत् ।
नन्वेवं सविकल्पस्य प्रत्यक्षत्वे प्रसाधिते ।
नेदानीं संगृहीतं स्यात्प्रत्यक्षं निर्विकल्पकम् ।
यत्तु शब्दानुवेधेन शाब्दत्वं सविकल्पके।
कश्चिदाशङ्कते तस्य प्रतिशब्दोऽयमुच्यते ॥
यत्र शब्दानुवेधेऽपि प्रत्यक्षं ज्ञानमिष्यते ।
तत्र तत्स्पर्शशून्यस्य तथात्वे का विचारणा ।
निर्विकल्पकवत्ता स्यात्प्रत्यक्षं सविकल्पकम् ।
संगृहीच्च तदिदं पदेनानेन सूत्रकृत् ॥
इत्याचार्यमतानीह दर्शितानि यथातथम् ।
यदेभ्यः सत्यमाभाति सभ्यास्तदवलम्ब्यताम् [2]॥

एवं रीत्या अव्यपदेश्यपदसार्थकत्वप्रदर्शनावसरे जयन्तभट्टेन विविधान्याचार्यमतानि प्रदर्शितानि । अव्यभिचारपदकृत्यविषये जयन्तभट्टः एवमभिधत्ते । ग्रीष्मे भौमोष्मना संसृष्टेषु सूर्यमरीचिषु यत् जल ज्ञानम् अतस्मिन् तदिति व्यभिचारि भवति । तद्व्यावृत्यर्थम् अव्यभिचारपदमिति भाष्याभिप्रायं समर्थनं कृत्वा जयन्तभट्टः तत्र प्रथमं जायमानं निर्विकल्पकज्ञानं वा अनन्तरं जायमानम् इदं जलमिति सविकल्पक ज्ञानं वा उभयमपि व्यभिचार्येवेति उभयव्यावर्तनायाव्यभिचारिपदमिति अव्यभिचारि पदकृत्यमकथयत्'[3] |

ननु मरुमरीचिषु जलज्ञानमविद्यमानं जलविषयकमिति इन्द्रियार्थसन्निकर्षस्यैवाभावात् इन्द्रियार्थसन्निकर्षोत्पन्नमिति शब्देनैव तद्वारणसंभवे किमव्यभिचारि पदेनेति चेत्,[4]।

अत्र केचित्तु-तत्र तरङ्गादि सामान्यज्ञाने सति सन्निहितसूर्यमरीचिगता विशेषधर्माः स्मृतिपथं नायान्ति (नावतरन्ति)। किन्तु पूर्वोपलब्धसलिलगताः विशेषधर्माः स्मृतिपथमायान्ति । तादृश विशेषधर्मस्मरणाच्च मरीचिगतविशेषधर्मेषु स्थगितेषु मरीचयः तोयरूपेण अवभासन्त इति तोयरूपापन्नानां मरीचिरूपार्थानाम् इन्द्रियस्य च सन्निकर्षो वर्तते इति इन्द्रियार्थ- सन्निकर्षजन्यमेवेदं ज्ञानमिति[5] |

---

[1] न्या. मं – पृ. 82
[2] न्या. मं – पृ. 82
[3] न्या. मं – पृ. 82
[4] न्या. मं – पृ. 83
[5] न्या. मं – पृ. 83

अत्र अन्येषु-जलं नात्र सन्निहितं मरीचयः एव सन्निहिताः। तरङ्गादि सादृश्यज्ञानेन देशान्तरस्थं जलं स्मर्यते । तादृश स्मृत्यारूढं जलमेव अत्रालम्बनमिति इन्द्रियार्थसन्निकर्षजन्यत्वं वर्तत इति । तथोक्तम् कारिकायाम्-

'अन्ये त्वालम्बनं प्राहुः पुरोऽवस्थितधर्मिणः ।
सादृश्यदर्शनोद्भूत स्मृत्युपस्थापितं पयः '[1]।।

परे तु-आलम्बनन्तु मरीचयः । भानं तु जलस्य । आलम्बनं चान्यत्, प्रतिभानविषयमन्यत्'[2] |
तथोक्तं कारिकायाम्-

अन्यदालम्बनं चान्यत्प्रतिभातीति केचन ।
आलम्बनं दीधितयास्तोयं च प्रतिभासते ॥

अत एव तस्य व्यभिचारित्वम् । एवं च इन्द्रियार्थ-सन्निकर्षजन्यत्वरूपविशेषण-सद्भावात् मरुमरीचिषु जलज्ञानव्यावर्तनम्, अव्यभिचारिपदकृत्यं भवितुमर्हति । 'ये च मनसाः विभ्रमाः बाह्येन्द्रियाण्यपेक्ष्य जायमानाः निरालम्बनाः ते इन्द्रियार्थ-सन्निकर्षपदेनैव वारयितुं शक्यन्त इति न तदर्थमव्यभिचारिपदोपादानम्[3] |

विरहोद्दीपितकामावृतदृष्टयः दूरस्थामपि कान्तां पुरतः पश्यन्ति । इदं ज्ञानं निरालम्बनमिति इन्द्रियार्थसन्निकर्षोत्पन्नपदेनैव तादृशमानसभ्रमवारणं संभवति । अतः सालम्बनबहिरिन्द्रिय जन्यभ्रमवारणायाव्यभिचारिपदमावश्यकमिति ।

व्यवसायात्मकपदकृत्यविषये जयन्तभट्टः 'दूरात् स्थाणुपुरुषसाधरणौ आरोहपरिणाहौ (ऊर्ध्व विशालत्वे)उपलभमानस्य तयोः स्थाणुपुरुषयोरन्यतरत्र वर्तमानान् वक्रकोटरादीन्, करचरणादीन वा विशेषानपश्यतः पुरुषस्य पुरोऽवस्थितार्थविषये स्थाणुर्वा पुरुषो वेति यत्संशयज्ञानम् इन्द्रियार्थसन्निकर्षोत्पन्नं जायते तद्व्यवच्छेदायाव्यवसायपदमिति यत् भाष्योक्तं तद्विषये अयमाक्षेपः[4] ।

संशयस्य मानसत्वात् इन्द्रियार्थसन्निकर्षजन्यस्यैवाभावेन तद्विशेषणेनैव संशयवारणं भवति । संशयस्य मानसत्वं तु 'स्मृत्यनुमानागमसंशय-प्रतिभा-स्वप्न-ज्ञानोहसुखादि प्रत्यक्षमित्यादयश्च मनसो लिङ्गमिति' भाष्यकारेणैवाङ्गीकृतमिति ।

'संशयाः केचन मानसाः केचन बाह्येन्द्रियजन्याश्च । अप्रत्यक्षज्योतिर्गणनादि विषये संशयाः मानसाः । विस्फारिताक्षस्य पुरुषस्य स्थाण्वादिसंशयाः बाह्येन्द्रियान्वयव्यतिरेकानुविधायित्वात् इन्द्रियार्थसन्निकर्षोत्पन्ना इति, तेन विशेषेण बहिरिन्द्रियजन्यसंशयवारणं न संभवतीति भाष्योक्तं व्यवसायपदसार्थक्यं युज्यते'[5] ।

ननु माभूत् इन्द्रियार्थसन्निकर्षोत्पन्नपदेन तद्वारणं, परम् अव्यभिचारिपदेन संशयवारणसंभवे व्यवसायात्मकमिति पदं व्यर्थमेव । तथाहि अतस्मिन् तदिति ज्ञानं व्यभिचारीति व्याख्यातं खलु । एकरूपं

---

[1] न्या. मं – पृ. 83

[2] न्या. मं – पृ. 83

[3] न्या. मं – पृ. 84

[4] न्या. मं – पृ. 84

[5] न्या. मं – पृ. 84

पुरोऽवस्थितमर्थम् अनेकरूपतया स्पृशति संशयः । स्थाणुर्वा पुरुषो वेति। योऽयं व्यभिचारी भवतीत्यव्यभिचारिपदेन वारणं संभवतीति चेत् न,

'विपर्ययसंशययोः स्वरूपभेदः कारणभेदश्च वर्तते । विरुद्धाकारोल्लेखि प्रत्ययः विपर्ययः । स्थाणौ पुरुष इति पुरुषे स्थाणुरिति । अयमेव व्यभिचारि। अनियताकार द्वयोल्लेखि प्रत्ययः संशयो भवति । स्थाणुर्वा पुरोषो वेति । एवं स्वरूपभेदः । कारणभेदस्तु विरुद्धविशेषस्मरणजन्यः विपर्ययः । उभय विशेषस्मरणजन्यः संशयः इति । व्यभिचारि पदेन विषय व्युदास एवं कर्तुं शक्यते । न संशय व्युदास इति संशय व्युदासार्थं व्यवसायात्मकपदमावश्यकम्"[1] ।

'एवं लक्षणगतानि पदानि विचार्य लक्ष्यपदं प्रत्यक्षमिति तेन विचारितम् । तत्र च रूढिर्योगश्चेति उभयमपि तेन समर्थितम् । 'लक्ष्यपदन्तु प्रत्यक्षमिति ज्ञानविशेषे रूढ्यैव प्रवर्तते, योगस्य व्यभिचारात् प्रतिगतमक्षं प्रत्यक्षमिति अक्षरार्थः, सचायं सुखादावपि संभवतीति रूढिरेव साधीयसी, अथवा ज्ञानपदस्य सूत्रे निर्देशात् योगपक्षोऽप्यस्तु न चासौ विद्यमानो निहोतुं युक्तः । योगरूढिस्तु न सम्मतैव विदुषामिति'[2] ।

**उपयुक्तग्रन्थसूची** -

१. न्यायदर्शनम् - महर्षि गौतमः चौखम्बा सिरीज, १९२५
२. न्यायमञ्जरी - (प्रथमभागः) जयन्तभट्टः चौखम्बा वाराणसी, १९७१
३. न्यायमञ्जरी - (द्वितीयभागः) जयन्तभट्टः, चौखम्बा, वाराणसी १९६९
४. न्यायवार्तिकतात्पर्यटीका - वाचस्पतिमिश्रः वाराणसी, १८१८
५. न्यायवार्तिकम् - उद्योतकरः चौखम्बा वाराणसी, १९१५
६. न्यायमनोविज्ञाननयेन प्रत्यक्षविमर्शः - डा. रामचन्द्रुलबालाजी, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः
७. न्यायवैशेषिकयोः प्रत्यक्षलक्षणविकासः - कमलेशमिश्रः, पुरी १९८४

[1] न्या. मं – पृ. 85

[2] न्या. मं – पृ. 85

# दुन्दुभिदृष्टान्तवाक्यार्थवर्णनम्

**डा. गणेश ईश्वर भट्टः, शृङ्गेरी**
सहाचार्यः समन्वयकः च, अद्वैतवेदान्तविद्याशाखा,
केन्द्रीयसंस्कृतविश्वविद्यालयः
राजीवगान्धीपरिसरः, शृङ्गेरी

एकविज्ञानेन सर्वविज्ञानम् इति कश्चन वेदान्तशास्त्रे विचार्यमाणः मुख्यः विषयः । अस्याः प्रतिज्ञायाः उपपादनाय नैके दृष्टान्ता उपनिषत्सु आम्नाताः । एतदर्थं दुन्दुभ्यादयः त्रयः दृष्टान्ताः बृहदारण्यकोपनिषदि श्रुताः । तत्र दुन्दुभिदृष्टान्तवाक्यस्य अर्थः अस्फुटः । अतः वादिनः अस्य अर्थम् अन्यथा वदन्ति । किन्तु प्रकृतस्य सार्वात्म्यस्य उपपादनं यथा स्यात्, तथा अर्थः वर्णनीयः, अन्यथा असाङ्गत्यप्रसङ्गात् । अतः अस्मिन् लेखे न्यायरक्षामण्यादिग्रन्थान् आश्रित्य आक्षेपनिरासपुरस्सरं दुन्दुभिदृष्टान्तवाक्यस्य अर्थः निर्धारितः ।

बृहदारण्यकोपनिषदि मैत्रेयीब्राह्मणे एवमाख्यायिका श्रूयते- प्रविव्रजिषुः याज्ञवल्क्यः भार्ययोः मैत्रेयीकात्यायन्योः वित्तस्य विभागं चिकीर्षति । किन्तु वित्तस्य अमृतत्वसाधनत्वं नास्तीति याज्ञवल्क्यस्य मुखादेव श्रुत्वा मैत्रेयी अमृतत्वसाधनम् एव प्रार्थितवती । तदा याज्ञवल्क्यः आत्मज्ञानस्यैव अमृतत्वसाधनत्वात् आत्मस्वरूपम् उपक्रम्य **"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"** इत्यात्मदर्शनं श्रवणादिसाधनानि चोपदिश्य, "**आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्**[१]" इत्यात्मविज्ञानेन सर्वविज्ञानं प्रतिजज्ञे । ब्रह्मज्ञानानन्तरं ज्ञातव्यं किमपि नावशिष्यते, ब्रह्मभिन्नस्य कस्यचिदपि अभावात् इति इयं प्रतिज्ञा प्रपञ्चस्य ब्रह्माव्यतिरेकात् साधनीया । ततः **"ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद"** इत्यादिभिः "**सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद**[२]" इत्यादिभिः वाक्यैः**,** ब्रह्मणः भेदस्य अभावे अपि यः प्रपञ्चं ब्रह्मभिन्नतया पश्यति सः पुरुषार्थात् प्रच्यवते इति भेददर्शनं निन्दितम् । **"इदं सर्वं यदयमत्मा"** इति ब्रह्मणः सार्वात्म्यं च उपपादितम् । अस्य च सार्वत्म्यस्य उपपादनाय दुन्दभ्यादिदृष्टान्ताः दर्शिताः ।

तत्र "**स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः**[३]" इति दुन्दुभिदृष्टान्त आम्नातः । "**स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः । स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः**[४]" इति अन्यत् दृष्टान्तद्वयम् आम्नातम् ।अत्र प्रथमं श्रुतस्य दुन्दुभिदृष्टान्तस्य अर्थवर्णनेन अन्ययोः अपि अर्थः निश्चितो भवतीति दुन्दुभिदृष्टान्तवाक्यार्थ एव विचार्यते । १४.७.३.[१०]

चिद्रूपात्मस्फुरणं विना स्फुरणशून्यं जगत् चिदात्मनो न व्यतिरिच्यत इत्ययमर्थः अत्र प्रतिपिपादयिषितः । तदर्थं यद्यस्य स्फुरणं विना न स्फुरति तत्ततो न व्यतिरिच्यत इति नियमे अयं दृष्टान्तः । **स यथा... दुन्दुभेस्तु ग्रहणेन** इति वाक्यस्य अयमर्थः- दुन्दुभेः हन्यमानस्य इत्यनेन हन्यमानदुन्दुभिप्रभवशब्दसामान्यस्य इत्यर्थः लक्ष्यते । बाह्यान् इत्यस्य दुन्दुभिशब्दसामान्यात् बहिर्भूतान् शब्दविशेषान् इत्यर्थः । तथा चायमर्थः फ्लति- यथा दुन्दुभिशब्दसामान्यविशेषभूतान् शब्दान् दुन्दुभिशब्दसामान्यात् बाह्यत्वेन अर्थात् ततो निष्कृष्य कश्चिदपि ग्रहीतुं न शक्नोति । किन्तु दुन्दुभिग्रहणेन अर्थात् दुन्दुभिशब्दसामान्यग्रहणेनैव तद्विशेषशब्दो गृहीतो भवति इति ।

यद्यपि श्रुतौ शब्दशब्दः नास्ति । तथापि वाक्यशेषे **दुन्दुभेस्तु ग्रहणेन** इति श्रूयते ।तत्र दुन्दुभिशब्दितकाष्ठग्रहमात्रेण दुन्दुभेः शब्दविशेषाणां ग्रहणासम्भवात् दुन्दुभेः इत्यस्य दुन्दुभिशब्दस्य इत्यर्थः । तदनुरोधात् आदावपि दुन्दुभेः इत्यस्य दुन्दुभिशब्दस्य इत्येवार्थः वक्तव्यः । तदुक्तं वार्तिके-

**"दुन्दुभिध्वनिरित्येतत् कथं लब्धं विशेषणम् ।**
**दुन्दुभेर्ग्रहणेनेति लब्धमेतद्विशेषणम् ॥**
**दुन्दुभेस्तु रवा एत इत्येवं ग्रहणे सति ।**
**गृहीतास्तद्विशेषाः स्युस्तेषां तादात्म्यकारणात्[५]" ॥** इति ।

एतदग्रे **दुन्दुभ्याघातस्य वा शब्दो गृहीतः** इति वाक्यं वर्तते । अत्र दुन्दुभ्याघातशब्देन सङ्ग्रामभूमिषु वीररसाद्यनुकूलः दुन्दुभिध्वनिविशेषः विवक्षितः। यद्यपि दुन्दुभ्याघातशब्दः कुम्भकारादिशब्दवत् कर्मोपपदप्रत्ययान्तः दुन्दभिमाहन्तीति दन्दुभ्याघात इति दुन्दुभ्याहन्तृवाची । तथापि प्रकृते दुन्दुभ्याघातशब्दस्य घञन्तत्वेन आहननम् आघातः, लक्षणया तज्जन्यदुन्दुभिध्वनिविशेषः । तथा च दुन्दुभ्याघातसंज्ञकस्य शब्दविशेषस्य ग्रहणेन नीचोच्चाद्यवान्तरविशेषः गृहीतो भवति इत्यर्थः। फलतः, यथा दुन्दुभ्याघातशब्दसामान्यात् तद्विशेषाः न भिद्यन्ते, विशेषात् अवान्तरविशेषा वा यथा न भिद्यन्ते, एवं चिद्रूपादात्मनः प्रपञ्चो न भिद्यत इति वाक्यार्थः । शङ्खवीणादृष्टान्तावपि एवमेव योजनीयौ

अत्राशङ्का- इदं क्लिष्टार्थकल्पनं भवति । एतदपेक्षया अस्य वाक्यस्य अक्लिष्टम् अर्थान्तरं वक्तुं शक्यम् । यथा दुन्दुभौ हन्यमाने सति ततो बहिर्निस्सरतः शब्दान् न कश्चिदपि ग्रहीतुं (निरोद्धुं) शक्नोति । किन्तु दुन्दुभेः निरोधेन तदाहन्तृपुरुषनिरोधेन वा दुन्दुभिशब्दो निरुद्धो भवति इति । अतः अयमेवार्थः अङ्गीक्रियतामिति शङ्का । समाधानं तु- एवमर्थकरणं प्रकृतानुपयोगि । यतः अत्र सार्वात्म्यमेव प्रतिपिपादयिषितम् । यदि अक्लिष्टमित्येतावता एतदनुपयोग्यपि अर्थान्तरं कल्प्यते, तर्हि ततोऽपि अक्लिष्टतरम् अर्थान्तरद्वयमत्र वर्णयितुं शक्यम् । यथा- दुन्दुभौ हन्यमाने बाह्यान् दुन्दुभिशब्दव्यतिरिक्तान् मानुषादिशब्दान् दुन्दुभिशब्दाभिभूतान् ग्रहीतुं न शक्नोति, दुन्दुभेः तदाहन्तृपुरुषस्य वा निरोधेन मानुषादिशब्दो गृहीतो भवति । अथवा- हन्यमानदुन्दुभिम् अनादृत्य तद्दर्शनम् अनपेक्ष्य बाह्यान् पिहितकर्णत्वेन कर्णपुटम् अप्रविष्टतया कर्णपुटाद् बहिरेव वर्तमानान् दुन्दुभिशब्दान् ग्रहीतुं न शक्नोति । यतः कर्णपुटं पिहितम् । हन्यमानदुन्दुभिरूपकारणस्य प्रत्यक्षत्वाभावेन दुन्दुभिशब्दविषयकम् अनुमानमपि नावतरति । एवं सति प्रागुक्तहन्यमानत्वविशेषितस्य दुन्दुभेः तदाहननव्यापृतस्य पुरुषस्य वा ग्रहणेन अनुमानमवतरति दुन्दुभिः शब्दविशिष्टः आहननविशिष्टत्वात् इति । एवं प्रकृतानुपयोगि अर्थद्वयं कल्पयितुं शक्यते । अस्मिन् पक्षद्वयेऽपि प्राक्सिद्धान्तदर्शितपक्ष इव बाह्यशब्दः सप्रयोजनः । एकत्र बाह्यशब्दस्य दुन्दुभिशब्दबाह्यमानुषादिशब्द इत्यर्थः । पक्षान्तरे बाह्यः कर्णपुटात् बहिर्विद्यमानः इत्यर्थः ।

पूर्वपक्षिणा उपस्थापिते पक्षे तु बाह्यान् इत्यस्य बहिर्निस्सरतान् इत्यर्थ उक्तः । स तु अयुक्तः । यतः दुन्दुभौ हन्यमाने ततो शब्दानां बहिर्निस्सरणस्य स्वाभाविकत्वात् बाह्यशब्दस्य व्यावर्त्यं किमपि नास्ति । किञ्च ग्रहणशब्दस्य ज्ञानम् उपादानं वार्थः । स एव सिद्धान्तिपक्षे आदृतः । पूर्वपक्ष्युक्तः निरोध इत्यर्थस्तु ग्रहणशब्दस्य नैव प्रसिद्धः । तथैव गच्छतां चोरादीनामिव शब्दस्य निरोधः न सम्भवति । दुन्दुभिर्यथा नाहन्येत तथा तन्निरोधेन,

दुन्दुभिं पुरुषो यथा नाहन्यात् तथा पुरुषनिरोधेन वा शब्दस्य उत्पत्तिप्रतिबन्धमात्रं क्रियते, न तु द्रव्यविषयत्वेन प्रसिद्धः निरोधः शब्दस्य सम्भवति । तथा च दृष्टान्तवाक्यस्य चमसवाक्यवत् अनेकधा योजयितुं शक्यत्वात् सिद्धान्तरीत्या प्रकृतसार्वात्म्योपपादकदार्ष्टान्तिकानुगुण एव अर्थो ग्राह्यः । सिद्धान्तिदर्शिते पक्षे तु यद्यपि लक्षणा भवति, तथापि सा न दोषाय ग्रहणशब्दानुरोधात् । द्रव्यस्येव शब्दस्य उपादानासम्भवे सति ग्रहणशब्दस्य ज्ञानमेव अर्थो वक्तव्यः । कस्य ज्ञानमिति विचार्यमाणे दुन्दुभेः ज्ञाने तु तदीयशब्दविशेषाः न ज्ञायन्ते, किन्तु दुन्दुभिशब्दसामान्यज्ञान एव । अतः सिद्धान्त्युक्तः दुन्दुभिशब्दार्थ एव युज्यते ।

अत्राशङ्का- पूर्वं शङ्काग्रन्थदर्शितोऽप्यर्थः किञ्चिद्दार्ष्टान्तिकमध्याहृत्य तद्दृष्टान्ततया वर्णयितुं शक्यः । यथा- दुन्दुभ्याहननव्यापारानुवृत्तौ दुन्दुभिशब्दः यथा निरोद्धु न शक्यते, एवम् इन्द्रियव्यापारानुवृत्तौ बाह्यार्थप्रत्ययो निरोद्धु न शक्यः । अतः आत्मदर्शनार्थिना तद्विरोधी बाह्यार्थप्रत्ययः इन्द्रियनिरोधेन तद्विजृम्भणहेतुमनोनिरोधेन वा निरोद्धव्यः । एवं प्रकृतात्मदर्शनोपयोगितया दृष्टान्तवाक्यस्य अर्थः वर्णयितुं शक्य इति । उच्यते- श्रुतस्यार्थस्य उपपादनार्थतयैव दृष्टान्तो नेयः न तु दृष्टान्तस्वारस्यानुरोधन दार्ष्टान्तिकान्तरमध्याहार्यम् । अत एव अवकाविधौ स्तावकत्वेन **आपो वै शान्ता**[6] इत्यर्थवादः कथञ्चन नीयते । तद्यथा **वेतसशाखया अवकाभिश्च विकर्षति**[7] इत्यग्निविकर्षणे वेतसशाखा अवकाश्च विधीयन्ते । स्तुतिस्तु श्रूयते **आपो वै शान्ता** इति अपाम्, न त्ववकानाम् । तदा अर्थवादानुरोधात् अपां विधिर्न कल्प्यते । किन्तु वेतसस्य अवकानां च अब्जन्यत्वगुण्योगात् अपां स्तुत्या अब्जन्याः स्तुता भवन्ति इति गुणवादः तत्र आश्रितः । तद्वत् प्रकृते दार्ष्टान्तिकस्य निर्वाहाय दृष्टान्तवाक्यस्य अर्थो नीयते, न तु दार्ष्टान्तिकान्तरम् अध्याह्रियते ।

यदि दृष्टान्तस्वारस्यम् अनुरोद्धव्यम्, तदापि यत्पूर्वम् अर्थान्तरद्वयं दर्शितम्, तयोर्मध्य एव कश्चनार्थः ग्राह्यः, तयोः प्रस्तुतमननादिविधानोपयोगित्वात्, न तु पूर्वपक्षिदर्शितः । तथा हि आत्मदर्शनमनूद्य तद्दर्शनसाधनानाम् उपदेशे कृते सति, एवं शङ्का जायते- पतिजायादिप्रियसंसूचितस्य जीवस्य यदिदं द्रष्टव्यत्वम् उपदिश्यते, एतदयुक्तम्, अहमनुभवे नित्यमेव तस्य दृश्यमानत्वात् ।

तत्रापि शङ्का स्यात्- अहम्प्रत्यये प्रकाशामानात् जैवरूपात् अतिरिक्तं यत् निरतिशयानन्दरूपम्, तदभिप्रायेण इदं द्रष्टव्यत्वम् उपदिश्यत इति, । तत्रोच्यते- तर्हि मन्तव्यो निदिध्यासितव्यः इति न वक्तव्यम्, मनसा नित्यम् अहमिति गृह्यमाणे जीवे मनसा अगृहीतं सूक्ष्मरूपसद्भावं वेदान्तेभ्यः श्रुतवता तद्रूपम् अवहितेन मनसा ग्रहीतुं शक्यते । यथा चक्षुषा गृह्यमाणे तारकादौ तद्गते सूक्ष्मे विशेषे केनचित् कथिते सति, तद्ग्रहणाय तदेव चक्षुः पुनः सावधानं व्यापार्यते, तद्वत् । तथा च मननादिविधानं व्यर्थमिति आशाङ्का जायते । तदा दुन्दुभ्यादिदृष्टान्तैः मननादिसार्थक्यमुच्यते । यथा दुन्दुभिशब्दे प्रतिबन्धकरूपेण स्थिते, मानुषादिशब्दो ग्रहीतुं न शक्यते । अतः तद्ग्रहणाय दुन्दुभिशब्दस्य निरोधकम् अपेक्ष्यते, एवमिहापि असम्भावनादिप्रतिबन्धे सति जीवस्य ब्रह्मात्मकं रूपं ग्रहीतुं न शक्यते । अतः तन्निवर्तकं मननदिकम् अपेक्ष्यते ।

अथवा यथा कर्णस्य पिधानादिदोषेण दुन्दुभिशब्दग्रहणासमर्थ्ये सति तद्ग्रहणाय दुन्दुभ्याहननादिलिङ्गम् अपेक्ष्यते, तथैव **पराञ्चि खानि व्यतृणत् स्वयम्भूः**[8] **यन्मनसा न मनुते**[9] इत्यादिश्रुतेः मनः स्वत एव ब्रह्मदर्शनासमर्थम् । अतः आत्मदर्शनार्थम् उपायान्तरम् अन्वेषणीयम् । तथा च मननादिकं सार्थकम् । एवं दृष्टान्तस्वारस्यानुरोधे अपि पूर्ववाद्यभिमतार्थात् अन्य एवार्थः सिद्ध्यति । वस्तुतस्तु, श्रुतौ **इदं सर्वं यदयमात्मा**[10]

इति सार्वात्म्यम् अभिधाय ततः आम्नायमानः दृष्टान्तः सार्वात्म्योपपादनार्थतयैव योजयितुं युक्तः । अतः प्रागुक्त एव दृष्टान्तवाक्यस्यार्थ इति तत्त्वम् ।

सङ्केतसूची:-

१. बृहदारण्यकोपनिषत् २-४-५
२. बृहदारण्यकोपनिषत् २-४-६
३. बृहदारण्यकोपनिषत् २-४-७
४. बृहदारण्यकोपनिषत् २-४-८,९
५. बृहदारण्यकभाष्यवार्तिकम् २-४-७
६. तैत्तिरीयसंहिता ५-१-५
७. तैत्तिरीयसंहिता ५-४-४
८. कठोपनिषत् २-४-१
९. केनोपनिषत् १-६
१०. बृहदारण्यकोपनिषत् २-४-६

## ‘कर्मणि कुशलः’ इत्यत्र लक्षणाविचारः

**Dr. Chandrakala R. Kondi**
Associate Professor (Sahitya)
CSU, Rajiv Gandhi Campus, Sringeri-577139

**Key words –**

शब्दार्थयोः नित्यसम्बन्धः, लक्षणा, कर्मणि कुशल इत्यत्र रूढिलक्षणा इति मम्मटाचार्यः, तत्र कारणानि, तन्नास्तीति कविराजविश्वनाथः, तत्र कारणानि, उभयवादेऽपि समर्थकांशाः, अन्ते तत्र रूढिलक्षणा अस्तीति निर्णयः ।

### Abstract

शास्त्रेषु शब्दार्थयोः नित्यसम्बन्धः प्रतिपादितः । यद्यपि तत्र शब्देन सह वाच्यार्थ इव लक्ष्यार्थ-व्यङ्ग्यार्थावपि भवितुमर्हतः, तथापि शब्देन सह नित्यसम्बन्धत्वं बाहुल्येन वाच्यार्थेन सहैव सम्भवति नियतत्वात् । तथापि मुख्यार्थबाधेन वाक्यार्थस्यासमञ्जस्ये लक्ष्यार्थ एव तत्समीकरोतीति लक्ष्यार्थः अङ्गीकरणीय एव । तादृशलक्ष्यार्थः आरोपितक्रियया लक्षणया भवति । सा च लक्षणा रूढिः प्रयोजनवती चेति द्विविधा । यत्र योगार्थः (मुख्यार्थः) बाधितः सन् लक्ष्यार्थ एव रूढौ प्रतिष्ठितः भवति तादृशप्रयोगः रूढिलक्षणा इत्युच्यते ।

कर्मणि कुशलः इत्येष प्रयोगः मम्मटाचार्येण रूढिलक्षणाया उदाहरणत्वेन दत्तः । किन्तु ‘----यस्य यत्र अव्यवधानेन गृह्यते स तस्य वाचकः’ इति मम्मटाचार्येणैवोक्तदिशा कर्मणि कुशल इत्यत्र कुशलशब्दस्य लक्ष्यार्थे निपुणार्थ एव झटिति सङ्केतो गृह्यते इति सः तस्य मुख्यार्थ एव भवति, न तु लक्ष्यार्थः । तत्र लक्ष्यार्थे गृहीते ‘गौः स्वपिति’ इत्यत्रापि लक्षणा स्यात् इति विश्वनाथस्याभिप्रायः ।

किन्तु यत्र शब्दस्य कश्चन मुख्यार्थः बाध्यते, तेन मुख्यार्थेन च कमपि सम्बन्धं पुरस्कृत्य योऽर्थः प्रवर्तते सोऽर्थः लक्ष्यार्थ एव भवति, न तु मुख्यार्थः । किन्तु तस्य मुख्यार्थः शाश्वततया बाधितः सन्, लक्ष्यार्थ एव सङ्केतं गृह्णाति लोकः । तथापि सः शब्दः तस्य वाचकः न भवति, किन्तु लक्षक एव । यत्र मुख्यार्थः न बाध्यते, मुक्ल्ह्यार्थेन सह अर्थान्तरस्य सम्बन्धोऽपि न भवति, तत्र न लक्षणा । उदाहरणार्थं ‘मण्डप’शब्दः । अत्र मण्डं पातीति योगार्थेऽयं शब्दः लोके सर्वथा अप्रयुज्यमानः सन् ‘लताकुञ्ज’ इत्येवार्थे सदा प्रयुज्यते । किन्तु अत्र मुख्यार्थेन सह अर्थान्तरस्य सम्बन्धाभावात् न लक्षणा । अतः मम्मटाचार्योक्तं साधु एवेति वक्तुं शक्यते इति शम् ।

### Article

शास्त्रेषु प्रतिपादितः ‘शब्दार्थयोः नित्यसम्बन्धः’, **‘अस्मात् पदादयमर्थो बोद्धव्य’** इत्याकारकसङ्केतमाधारीकृत्य । कस्यचिच्छब्दस्य कश्चनार्थ भवेदेवेति तस्य तात्पर्यम् । अर्थाः वाच्य-लक्ष्य-व्यङ्ग्य-तात्पर्यार्थादिभेदेन बहवो भवन्ति । तत्र कस्यचिच्छब्दस्य एतेषु यः कोऽप्यर्थः भवेदेवेति शब्दस्य अर्थेन सह नित्यसम्बन्धत्वं सिद्ध्यति । अर्थात् अर्थसामान्यमत्र स्वीकरणीयम् । तथापि ‘अस्मात् पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिः’ इत्यनेन अयं नियमः बाहुल्येन वाच्यवाचकयोरेव अन्वेति । यतो हि शब्दस्य सङ्केतितार्थः निश्चितः । न कदापि परिवर्तनं दृश्यते तद्विषये । तादृशं निश्चयमाधारीकृत्यैव वाच्यवाचकभावो व्यवस्थित इति

तत्रैव नित्यसम्बन्धत्वं शब्दार्थयोः। लक्ष्यार्थ-व्यङ्ग्यार्थ-तात्पर्यार्थाः सन्दर्भानुसारं भिद्यन्ते इति केनचिदपि शब्देन तेषां नित्यसम्बन्धत्वं न सिद्ध्यति। तथापि यत्र शब्दस्य सङ्केतितार्थोऽसङ्गतो भवति, तदा लक्ष्यार्थः व्यङ्ग्यार्थो वा तस्य शब्दस्य अर्थत्वेन परिगण्यते। अत एव अर्थसामान्यं स्वीकरणीयम्। तथा यदि न स्वीक्रियते तर्हि सन्दर्भविशेषेषु असङ्गतं सङ्केतितार्थं समीकर्तुमेव न शक्यते। अर्थस्यासङ्गतत्वे वाक्यार्थहानिः। अत एव लक्ष्यार्थादीनाम् अङ्गीकारोऽनिवार्यतां भजते।

शब्दनिष्ठप्रतिपादकतानिरूपितप्रतिपाद्यता अर्थे, अर्थनिष्ठप्रतिपाद्यतानिरूपितप्रतिपादकता शब्दे इतिरीत्या शब्दार्थयोः प्रतिपाद्यप्रतिपादकभावसम्बन्धः। स च शब्दव्यापारद्वारा कार्यरूपं प्राप्नोति। अर्थात् शब्द-तदर्थयोर्मध्ये शब्दव्यापाराः भवन्ति। ते च अभिधा-लक्षणा-व्यञ्जनाः। तेषु वाच्यवाचकयोः अभिधा, लक्ष्य-लक्षकयोः लक्षणा, व्यङ्ग्य-व्यञ्जकयोः व्यञ्जना इति व्यवस्था कृता शास्त्रे। तत्र शब्दस्य अभिधाव्यापारेण ज्ञायमानोऽर्थः 'मुख्यार्थः', यदा असङ्गतो भवति अर्थात् मुख्यार्थबाधो जायते, तदा तत्समीकर्तुम् आरोप्यमाणः शब्दव्यापारः लक्षणा। यत्र मुख्यार्थबाधः, तत्रैव लक्षणाया प्रसक्तिः, नान्यत्र। अतः मुख्यार्थबाधस्य समीकरणमेव लक्षणायाः कार्यम्। तथा समीकरणे आधारभूतहेतुद्वयं रूढिः प्रयोजनं चेति। लक्षणा द्विधा सम्भवति रूढिमाधारीकृत्य, प्रयोजनप्रतिपिपादयिषया च। तेन रूढिलक्षणा प्रयोजनवल्लक्षणा चेति लक्षणा द्विविधा। उभयत्रापि मुख्यार्थेन सह कञ्चन सम्बन्धं पुरस्कृत्यैव लक्ष्यार्थः स्वीक्रियते। तदेवं मम्मटाचार्येण एवमुक्तम्-

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणाऽऽरोपिता क्रिया॥** [1]

इति। यत्र रूढिः लक्षणाया मूलं भवति तत्र व्यङ्ग्यः न भवति, प्रयोजनविवक्षायां तु व्यङ्ग्यः भवतीत्येव तयोर्भेदः-**'व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने'** [2]। तत्र रूढिलक्षणाप्रयोगे लोकप्रयोगपरम्परैवाधारः। अतः सर्वैरपि स्वाभाविकतयैव तथा प्रयुज्यते। तत्र किमपि प्रयोजनं वक्त्रा उद्दिष्टं न भवति, श्रोत्रापि तादृशप्रयोजनस्य प्रतीक्षा न क्रियते।

'कर्मणि कुशलः' इत्येष प्रयोगः मम्मटाचार्येण रूढिलक्षणाया उदाहरणत्वेन दत्तः। तत्र 'कुशल'शब्दः लक्षणाया आश्रयः। तस्य मुख्यार्थः 'कुशान् लाति(कर्तयति)' इति। तेन वाक्यस्य मुख्यार्थः 'कर्मणि कुशान् लाति' इति असमञ्जसतया घटितः। तेन मुख्यार्थबाधः। तत्समीकर्तुं कुशलशब्दस्य निपुण इत्यर्थः लक्षणाव्यापारं प्रयुज्य स्वीकृतः। तदा 'कर्मणि निपुणः' इत्यर्थलाभात् मुख्यार्थबाधपरिहारः। तर्हि लक्षणाप्रयोगे मुख्यार्थ-लक्ष्यार्थयोः कश्चन सम्बन्ध आवश्यकः खलु ? अत्र कः सम्बन्ध इति जिज्ञासायां 'विवेचकत्वम्' इत्येवोत्तरम्। दर्भः तादृशं वस्तु भवति यस्य स्पर्शमात्रेणापि तत्स्थानि कण्टकानथस्ते व्रणमुत्पादयन्ति। अतः दर्भस्य कर्तने नैपुण्यमावश्यकं हस्तः यथा व्रणितः न भवति तथा। तथैवास्मिन् जगति अस्माभिः क्रियमाणेषु कार्येष्वपि चिन्तनीयम्। येन कार्येण अनिष्टावाप्तिः (दर्भकर्तने हस्तव्रण इव) यथा न भवेत्तथा अवधानेन विवेचनेन च कार्यं करणीयम्। विवेचनं नाम विवेकः अर्थात् द्वयोर्मध्ये पार्थक्यकल्पनम्। सदसद्विवेकः, कार्याकार्यविवेकः

---

[1] काव्यप्रकाश-२/८ (कारिका)

[2] काव्यप्रकाश-२/१२ (कारिकाया पूर्वार्द्धः)

इत्यादिप्रयोगाः अत्र स्मर्तव्याः । इदं कार्यं करणीयम्, इदं च न करणीयम्, एतत् कार्यम् एवम् अनुष्ठेयम्, एवं रीत्या नानुष्ठेयम् इत्यादिरीत्या कर्मकरणे यः विवेकवान् भवति (विविच्य कार्यं करोति) स एव 'कर्मणि कुशलः' ।

एवमभिप्रायेण 'कर्मणि कुशल' इत्ययं प्रयोगः मम्मटाचार्येण रूढिलक्षणाया उदाहरणत्वेन दत्तः । किन्तु विश्वनाथः अस्मिन् प्रयोगे लक्षणां नाङ्गीकरोति । अर्थात् तस्य अभिप्राये अयं प्रयोगः मुख्यप्रयोग एव, न तु लक्षणाप्रयोगः –

**"------कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात् । अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तम्, अन्यच्च प्रवृत्तिनिमित्तम् । व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे 'गौः शेते' इत्यत्रापि लक्षणा स्यात् । 'गमेर्डोः'[1] इति गमधातोः डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽप्रयोगात्" ।**

तत्रायमभिप्रायः-

शब्दस्यार्थः व्युत्पत्तिपरकः प्रवृत्तिपरकश्चेति द्विधा भवति । तत्र योगार्थः व्युत्पत्तिपरकः, कुशान् लातीत्यादिः । स एव मुख्यार्थ इति स्वीक्रियते । तस्य समन्वयः नास्तीति प्रवृत्तिपरकः निपुण इत्यर्थः स्वीकृतः । किन्तु विश्वनाथस्याभिप्राये यत्र व्युत्पतिपरकार्थोऽकिञ्चित्करः अर्थात् श्रोतुर्मनसि सर्वथा न भासते, तत्र प्रवृत्तिपरकार्थ एव मुख्यार्थत्वेन स्वीकरणीयः । उदाहरणार्थं 'गौः स्वपिति' इति कश्चन प्रयोगः । गौः इत्यस्य 'गच्छतीति गौः' इति व्युत्पत्त्या 'गमनक्रियावान्' एव गौः भवति । तदा 'गौः स्वपिति' इत्ययं प्रयोगोऽपि लक्षणाप्रयोग इत्येव वक्व्यं भवति । यतः स्वापसमये सः गमनक्रियावान्न भवतीति तदा सः 'गौः' इति वक्तुमेव न शक्यते । किन्त्वत्र गौः स्वपितीति प्रयोगश्रवणेन कस्यापि श्रोतुर्मनसि गोशब्दस्य गच्छतीति गौः इत्यर्थः न भासते । किन्तु गोत्वरूप-जातिमानित्येवार्थः भासते, यः वस्तुतः गोशब्दस्य प्रवृत्तिपरकार्थः भवति । अत्र प्रायः जनाः 'गच्छतीति गौः' इत्यर्थं प्रायः नैव जानीयुः । अतस्तेषां मनसि सर्वथा अभासमानोऽर्थः कथं मुख्यार्थत्वेन स्वीकर्तुं शक्यते । यतः मुख्यार्थो नाम शब्दस्य साक्षात्सङ्केतितार्थः, यः 'अस्मात् पदादयमर्थो बोद्धव्य' इत्याकारकेश्वरसङ्केताज्ज्ञायमानः, यश्च सामान्यजनैरपि अवश्यं ज्ञायते । किन्तु योऽर्थः न ज्ञायते केनापि, सः कथं स्वीकर्तुं शक्यः? गोत्वजातिमानित्यर्थ एव प्रयुज्यमानः 'गौः' शब्दः गच्छतीत्यर्थे कदापि केनापि लोके न प्रयुज्यते । अतः गोत्वजातिमानित्ययं प्रवृत्तिपरकार्थ एव गौः शब्दस्य मुख्यार्थत्वेन स्वीकरणीयः । तदा एव 'गौः स्वपिति' इत्ययं प्रयोगः निर्दुष्टः भवति ।[2]

तथैव कर्मणि कुशल इत्यत्रापि । यतः कुशलशब्दस्य निपुण इत्यर्थः रूढ्यैव आगतः । यदि प्रयोगश्रवणेन श्रोतुर्मनसि व्युत्पत्तिपरकार्थः (योगार्थः) न भासते तदा एव मुख्यार्थान्वयाभावरूपः मुख्यार्थबाधः जायते, अन्यथा न । कर्मणि कुशल इत्यत्र कुशल शब्दस्य निपुणार्थः परम्पराप्रयोगादेव सिद्ध इति श्रोतुर्मनसि अस्य प्रयोगस्य श्रवणेन निपुणार्थ एव जायते, न तु 'कुशान् लाति' इति योगार्थः । अतः योगाद्रूढिर्बलीयसीति न्यायात् कुशलशब्दस्य प्रवृत्तिनिमित्तार्थः 'निपुण' एवेति हेतोः, श्रोतुर्मनसि च स एवार्थः श्रवणसमनन्तरं जायत

[1] उणादि-२/६७

[2] साहित्यदर्पणः-२/५ (वृत्तिभागः)

इति कारणाच्च, कुशलशब्दस्य मुख्यार्थ एव भवति निपुणार्थः । तत्र तस्य समन्वयाभावाभावात् मुख्यार्थबाधः नास्त्येव । तथा सति कथं लक्षणाप्रयोगः ?

तस्य समाधानमेवं वक्तुं शक्यम्-

योगार्थः अर्थात् व्युत्पत्तिपरकार्थ एव शब्दस्य मुख्यार्थः भवति । तस्मिन्नर्थ एव लोके बाहुल्येन सङ्केतो गृह्यते । किन्तु केषाञ्चन पदानां सोऽर्थः सदापि, सर्वत्रापि च बाधावस्थायामेव तिष्ठति, कदापि तस्य शब्दस्य अर्थत्वेन न भासते । अतः तस्मिन्नर्थे लोकैः सङ्केतोऽपि न गृह्यते । तर्हि कस्मिन्नर्थे सङ्केतग्रहणं भवतीति जिज्ञासायां तत्सम्बद्धेऽर्थान्तरे सङ्केतग्रहणं भवतीति ज्ञेयम् । तत्र बाधितः स मुख्यार्थः स्वस्मिन् वर्तमानं सङ्केतं लक्ष्यार्थे स्थापयति । लक्ष्यार्थ एव मुख्यार्थस्य स्थाने रूढ्या दृढतया तिष्ठति । तेन तस्मिन्नर्थ एव तस्य शब्दस्य सङ्केतो वर्तत इव भाति । तेन लक्ष्यार्थ एव मुख्यार्थवत् गृह्यते लोके । कुशलशब्दस्यापि तथैव स्थितिः । 'कुशान् लाती'ति तस्य व्युत्पत्तिपरकार्थः (योगार्थः) लोके केनापि न गृह्यते । प्रयोक्त्राऽपि तस्मिन्नर्थे न प्रयुज्यते, किन्तु निपुणार्थ एव प्रयुज्यते । अतः जनमानसेभ्यः सोऽर्थस्तिरोहित एव, सदा बाधितत्वात् । तस्य शब्दस्य सङ्केतः 'निपुण' इत्यर्थे प्रतिष्ठितः । 'कुशल'शब्दश्रवणेन सर्वस्यापि मनसि निपुणार्थ एव भासते । किन्तु अस्माद्धेतोः तत्र लक्षणा नास्तीति वक्तुं न शक्यम् । यतः 'कुशल'शब्दः 'निपुणा'र्थे लाक्षणिक एव, न तु वाचकः । यतः स शब्दः विवेचकत्वसम्बन्धसहित एव प्रयुज्यते । श्रीमद्भगवद्गीतायाम्,

'योगः कर्मसु कौशलम्'[1], 'न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते'[2] इत्यत्रापि विवेचकत्वसम्बन्धः स्पष्ट एव । यः कर्मफलं त्यक्त्वा भगवदर्पणबुद्ध्या कर्माणि कुर्वन् भवति, सः कर्मणा बद्धो न भवति । तत्र कर्तुः फलासक्ति-फलानासक्त्योर्मध्ये विवेचनम् । एवमेव सर्वत्रापि तत्सम्बद्धविशिष्टमेव तत्पदप्रयोगं पश्यामः । तथा सम्बन्धेनैव सः निपुणार्थे रूढः । एवं कश्चिच्छब्दः यदि अन्यार्थ(मुख्यार्थ)सम्बद्धतयैव तिष्ठति सः मुख्यार्थः न भवति, किन्तु लक्ष्यार्थ एव । अत एव लक्षणाहेतौ मुख्यार्थसम्बन्धोऽपि कश्चनांशः भवति ।

एवं यस्य शब्दस्य योगार्थे सङ्केतः भवति सोऽर्थः तस्य शब्दस्य मुख्यार्थः । यस्य च शब्दस्य योगार्थः सदा बाधावस्थायां सन् तिरोहित एव तिष्ठति तत्र सर्वत्रापि तत्सम्बद्धतया लक्ष्यमाणार्थ एव सर्वैः गृहीतो भवति । कुशलशब्दस्यापि कुशान् लातीत्यर्थः तिरोहितः सन्, विवेचकत्वेन तत्सम्बद्धतया लक्ष्यमाण एव 'निपुणा'र्थः गृह्यते । अत एव कुशलशब्दस्य लाक्षणिकत्वम्, न तु वाचकत्वम् ।

यत्र शब्दस्य योगार्थः सम्पूर्णतया तिरोहितः, अर्थान्तरमेव रूढौ स्थितम्, किन्तु मुख्यार्थसम्बद्धतया न प्रयुज्यते तत्र लक्षणा नाङ्गीक्रियते । उदाहरणार्थं 'मण्डप'शब्दः । 'मण्डम् (अन्नमण्डं) पाति' इति तस्य योगार्थः । किन्तु तस्मिन्नर्थे आत्यन्तिकतयैव अप्रयुज्यमानः सन् स शब्दः सदापि 'लतामंडप' इत्यर्थे, तदाकारवत्सु (विवाहादिषु कृतकतया निर्मीयमाणेषु) उपचारेण च प्रयुज्यते । किन्तु लताकुञ्जरूपस्य अर्थान्तरस्य अन्नमण्डरूपमुख्यार्थेन सह कोऽपि 'योगः' नास्ति । तेन न तत्र लक्षणा ।

एवं कुशलशब्दस्य 'कुशान् लाती'ति मुख्यार्थः, कर्मणि तस्य बाधितत्वात् मुख्यार्थबाधः, मुख्यार्थेन सह 'विवेचकत्व'सम्बन्धः 'निपुण'रूपलक्ष्यार्थस्य, तेन 'कर्मणि निपुणः' इति वाक्यार्थस्य सुसङ्गतिः-इत्येवंरीत्या

[1] श्रीमद्भगवद्गीता—२/५०

[2] श्रीमद्भगवद्गीता -१८/१०

लक्षणाहेतुस्तत्र अन्यूनतयाऽन्वेति इति 'कर्मणि कुशल' इत्यत्र लक्षणा अस्त्येव । 'कुशान् लाती'त्यस्य मुख्यार्थस्य तिरोहितत्वात् 'निपुण'रूपलक्ष्यार्थ एव लोके रूढ इति 'रूढिलक्षणा'या उदाहरणत्वेन मम्मटाचार्येण प्रस्तुतम् । एतच्च सर्वदर्शनसङ्ग्रहकारेण सायणमाधवेनापि समर्थितम्-**"तत्र कर्मणि कुशल इत्यादि रूढिलक्षणाया उदाहरणम् । कुशान् लातीति व्युत्पत्त्या दर्भादानकर्तरि यौगिकं कुशलपदं विवेचकत्वसारूपयात् प्रवीणे प्रवर्तमानम्, अनादिवृद्धव्यवहारपरम्परानुपातित्वेन अभिधानवत् प्रयोजनमनपेक्ष्य प्रवर्तते । तदाह-'निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्' इति "** [1]**।**

अतः मम्मटाचार्यस्य प्रयोगे न काप्यसङ्गतिरिति शम् ।

## Bibliography


1. काव्यप्रकाशः (हैमवतीटीकासहितः) । मोतीलाल बनारसीदास, वाराणसी । प्रथमसंस्करणम्-१९८०
2. साहित्यदर्पणः । 'शशिकला' हिन्दीव्याख्योपेतः । चौखम्बा विद्याभवन, वाराणसी । दशमसंस्करण-१९९७
3. श्रीमद्भगवद्गीता (कन्नड) गीताप्रेस् गोरखपुरम् । अष्टादश संस्करणम्-२००८
   ISBN-81-293-0485-6
4. सर्वदर्शनसङ्ग्रह (in Kannada Language) प्रकाशकाः-श्रीशिवरात्रीश्वरग्रन्थमाला, JSS महाविद्यापीठम्, मैसूरु-५७०००४. तृतीय संस्करणम् -२०१२
5. लघुसिद्धान्तकौमुदी । संस्कृतभाषाप्रचारसमितिः, हैदराबाद-५०० ००१. चतुर्थं संस्करणम् -2010


## END NOTES

1. काव्यप्रकाश-२/८ (कारिका)
2. काव्यप्रकाश-२/१२ (कारिकाया पूर्वार्द्धः)
3. उणादि-२/६७
4. साहित्यदर्पणः-२/५ (वृत्तिभागः)
5. श्रीमद्भगवद्गीता—२/५०
6. श्रीमद्भगवद्गीता -१८/१०
7. सर्वदर्शनसङ्ग्रहः-पातञ्जलदर्शनम् ।

[1] सर्वदर्शनसङ्ग्रहः-पातञ्जलदर्शनम् ।

# दर्शपूर्णमासानुष्ठानकालविचारः

**डा. एस्. वेङ्कटेशताताचार्यः**
सहायकाचार्यः,
केन्द्रीयसंस्कृतविश्वविद्यालयः, राजीवगान्धीपरिसरः, शृङ्गेरी

**प्रमुखशब्दाः**
आवर्तनकालः, पर्वप्रतिपत्सन्धिः, दर्शपूर्णमासेष्टिः, प्रकृतियागः, विकृतियागः, अन्वाधानम्, तिथिवृद्धिः, तिथिक्षयः, अग्न्युपस्तरणम्, सङ्गवः, अपराह्णः, सायम् ।

**सारांशः**
अस्मिन् शोधपत्रे प्रकृतीष्टेः कालः आपस्तम्बकात्यायनबोधायनानुयायिभिः ग्राह्यः कः भवति इति सप्रमाणं विचारितम् । तत्र आपस्तम्बाद्यनुसारिणाम् आवर्तने आवर्तनात् पूर्वं वा पर्वप्रतिपत्सन्धौ पूर्वेद्युरन्वाधानं कृत्वा सन्धिदिने यागानुष्ठानम्। आवर्तनात् परं चेत् सन्धिदिने अन्वाधाय श्वोभूते यष्टव्यम् । सङ्गवात् परमावार्तनपर्यन्तं सन्धिसंभवे तु विकल्पेन सद्यस्कालताऽपि भवति । वाजसनेयिनां तु सन्धिदिने नैव पूर्णमासयागः किन्तु परस्मिन्नेवाहनि । बोधायनानां वाजसनेयिनां दर्शे अयं विशेषो यत्, प्रतिपदि सायं द्वितीयासंबन्धे अमायामेव यागः पूर्वेद्युरन्वाधानादिकं चेति इमे सिद्धान्ता निरूपिताः ।

**भूमिका**

अस्माकं योगक्षेमार्थमपौरुषेयवाग्रूपा श्रुतिः विविधानि कर्माणि विधत्ते । तत्र "याग" इत्येका विधा । यागाश्च प्राधान्येन त्रिविधा दृश्यन्ते – इष्टयः, पशुयागाः, सोमयागाश्चेति । इष्टीनां च प्रकृतिर्भवति दर्शपूर्णमासेष्टिः । पशुयागेष्वपि अग्नीषोमीयपशुयागः दर्शपूर्णमासान्तर्गतपयोयागप्रकृतिकः । अन्ये च साक्षात् परम्परया वा अग्नीषोमीयपशुयागप्रकृतिकाः । सोमयागे च पशुयागः अङ्गम् । साङ्गसोमानुष्ठानप्रकारज्ञानाय पशुयागानुष्ठानप्रकारज्ञानमावश्यकं यच्च दर्शपूर्णमासेष्टिनिरूपणाधीनम् । यद्यपि आधानेनैव दर्शपूर्णमासानुष्ठानयोग्यता सिद्ध्यतीति अग्न्याधानमेव प्रथममनुष्ठीयते, तथापि आधानस्यापि पवमानेष्ट्यङ्गकत्वात् पवमानेष्टीनां दर्शपूर्णमासप्रकृतिकत्वात् साङ्गाधानेतिकर्तव्यताज्ञानार्थमपि दर्शपूर्णमासेतिकर्तव्यताज्ञानमावश्यकम् । एतदेव मनसि निधाय महर्षिणा आपस्तम्बेन श्रौतसूत्रेषु "[1]अथातो दर्शपूर्णमासौ व्याख्यास्याम" इति आरभ्य आदौ पञ्चसु प्रश्नेषु दर्शपूर्णमासौ व्याख्यातौ । एवं सर्वेषां श्रौताग्निसाध्यकर्मणामनुष्ठानप्रकारज्ञानात् पूर्वं ययोः दर्शपूर्णमासयोरनुष्ठानप्रकारो ज्ञातव्यः, तादृशयोः दर्शपूर्णमासयोः कालविषयकविचारः प्रस्तूयते –

अस्मिन् विचारे त्रयः अवान्तरविषयाः संभाव्यन्ते –

1. दर्शपूर्णमासयोः प्रथमप्रयोगः कदा आरब्धव्य इति ।
2. सामान्यतः दर्शपूर्णमासयोरनुष्ठानं कदा कर्तव्यमिति ।
3. प्रकृतिविकृत्योरेकस्मिन्नहनि सन्निपाते कथमनुष्ठानक्रम इति च ।

तत्र प्रथमबिन्दौ आधानानन्तरं मलमासशुक्रास्तादिदोषरहितायां पौर्णमास्यां पूर्णमासेष्टिमारभ्य अनन्तरे दर्शे दर्शेष्टिः कर्तव्येति सामान्यतः स्थितम् । इदानीं तत्र विशेषविचारः न क्रियते ।

प्रकृतिविकृत्योरेकदिनसन्निपाते अनुष्ठानक्रमस्तु “[2]विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा विकृतिः तयोः प्रत्यक्षशिष्टत्वात्” इति पञ्चमाध्यायचतुर्थपादसप्तमाधिकरणे (विकृतीनां सद्यस्कालताधिकरणे) प्रतिपादितः, यत्र च मीमांसकानां याज्ञिकानां च बहवो मतभेदाः सन्ति । अतः स विषयः पृथक्शोधपत्रे स्थानमर्हति । अतः अवान्तरविषयेषु प्रथमं तृतीयं च हित्वा द्वितीये विचारः प्रस्तूयते –

**दर्शपूर्णमासयोः श्रुतिस्मृत्युक्तकालविरोधः तत्परिहारश्च**

“दर्शः” “पूर्णमासः” इति नामभ्यामेव अनयोः कालः प्रतीयते । दर्शेष्टेः अमावास्या कालः, पूर्णमासेष्टेः पौर्णमासी काल इति । परन्तु नेदं नामपदद्वयं कालविधिप्रयोजकं, किन्तु शास्त्रान्तरप्राप्तकालसंबन्धयोः दर्शपूर्णमासयोः तत्प्रख्यन्यायेन नामधेयम् । कालप्राप्तिश्च तत्तदुत्पत्तिवाक्यात् । सामान्यतः दर्शे त्रयः पूर्णमासे च त्रयो यागाः सन्ति । तस्य तस्योत्पत्तिवाक्येन तत्र तत्र दर्शः पूर्णमासो वा कालः प्राप्नोति । उत्पत्तिवाक्येन कालादिगुणविशिष्टयागस्य विधानात् । इदं च “[3]यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति” इति आग्नेययागोत्पत्तिवाक्योदाहरणेन स्पष्टं प्रतीयते । अपि च दर्शपूर्णमासमहाप्रयोगे दर्शस्य पूर्णमासस्य च अवान्तरप्रयोगविधायके वाक्ये स्तः – “[4]पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया” इति । एताभ्यामपि वाक्याभ्यां पौर्णमास्यमावास्याकालौ प्राप्नुतः । एवं श्रुतिवचनानां सत्त्वेऽपि स्मृतिवचनान्यपि दर्शपूर्णमासकालबोधकान्येवमुपलभ्यन्ते –

“[5]पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः।
यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः॥
पर्वप्रतिपदोस्सन्धिरर्वागावर्तनाद्यदि ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ॥
आवर्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत् परेहनि ॥
आवर्तनात् परः सन्धिर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येष पर्वद्वयविनिश्चयः ॥” इति ।

इमानि स्मृतिवचनानि दर्शपूर्णमासयोः दिनद्वयसाध्यत्वं बोधयन्ति । पर्वणि अन्वाधानादि कर्तव्यं, प्रतिपदि यागः कर्तव्य इति । सङ्गवात् परम् आवर्तनकालात् पूर्वं पर्वप्रतिपत्सन्धौ तु विकल्पेन सद्यस्कालताऽपि विधीयते –

“[6]अन्वाहितिश्चास्तरणोपवासः पूर्वेद्युरेते खलु पौर्णमास्याम् ।
आवर्तनात् प्राग्यदि पर्वसन्धिस्सद्यस्तदा वा क्रियते समस्तम् ॥” इति,
“[7]पूर्णिमाप्रतिपत्सन्धिर्यदि सङ्गवमन्तरा ।
आवर्तनं च स्यात्तर्हि सद्यस्कालविधिर्भवेत् ॥” इति च ।

एवं क्वचिद्विकल्पेन सद्यस्कालविधावपि सर्वासु परिस्थितिषु द्व्यहकालत्वं तावत् दर्शपूर्णमासयोः स्मृतिवचनैः लब्धम् । अत्र च पौर्णमास्यमावास्याकालविधायकश्रुतिविरोधः कथं परिह्रियत इति चेदुच्यते – श्रुतिषु आरम्भाभिप्रायेण पौर्णमास्यमावास्याशब्दप्रयोगः । यतो हि पूर्वोक्तस्मृतिवचनानुसारेण पर्वणि आरभ्य प्रतिपदि

इष्टिः समापनीया । अतः तदनुसारेण श्रुतिवाक्येषु शक्त्या पर्वणि दर्शपूर्णमासेष्टिः कर्तव्येति अर्थप्रतीतावपि लक्षणया पर्वणि दर्शपूर्णमासेष्टेरारम्भः कर्तव्य इति अर्थः स्वीकर्तव्यः । यदि तु "एवं सति पौर्णमास्यामित्यनन्तरमारभ्येति पदस्य अध्याहारः स्वीकर्तव्यः । तथाहि – "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इति वाक्यमनुवादत्वद्योतकयच्छब्दश्रवणात् भवतीति विधिप्रत्ययाभावाच्च न स्वतो यागविधानं कर्तुं शक्नोति, किन्तु "आग्नेयेनाष्टाकपालेन पौर्णमास्याममावास्यायां च यजेते"ति वाक्यस्य उन्नायकं भवति । अत्र च आरभ्येति पदाध्याहारे पौर्णमास्याममावास्यायां चारभ्य यजेतेति वाक्यार्थः सिद्ध्यति । अतोऽस्त्यध्याहारप्रयुक्तं गौरवमि"ति विभाव्यते, तर्हि अस्तु पौर्णमास्यादिपदस्यैव पर्वप्रतिपत्समुदाये लक्षणा । अविद्यमानपदाध्याहारापेक्षया विद्यमानपदे लक्षणास्वीकारस्य लघुत्वात् । न च स्मृत्यनुसारेण श्रुतौ लक्षणाकलपनं नोचितमिति वाच्यम् । श्रुतौ लक्षणाया अस्वीकारे स्मृतेः कथमपि निर्वाहासंभवेन सुतरामप्रामाण्यापत्तिः, स्वीकारे तु उभयोः प्रामाण्योपपत्तिरिति परिस्थितौ स्मृतेः तात्पर्यग्राहकत्वमङ्गीकृत्य श्रुतौ लक्षणया उभयोः प्रामाण्योपपादनस्यैव उचितत्वात् । "[8]उपास्मिन् श्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाति" इत्यादिश्रुतीनामपि अग्न्युपस्तरणादीनां पूर्वदिनकर्तव्यत्वबोधिकानां पौर्णमास्यादिपदलक्षणातात्पर्यग्राहिकाणां सत्त्वाच्च । एवञ्च द्व्यहकालत्वं दर्शपूर्णमासयोः सिद्धम् ।

**गोभिलादिस्मृतिदिशा कालनिर्धारणम्**

पूर्वोदाहृतस्मृतिवाक्येषु आवर्तनं नाम अह्नः मध्यकालः । स च यस्मिन् क्षणे सूर्यः पश्चिमां दिशमभि पर्यावर्तितुमारभते सः । यदि कस्यचिदह्नः त्रिंशत् (30) नाड्यो मानं, तर्हि पञ्चदशनाडीसमाप्तिकाल एव आवर्तनकालः । अहर्मानस्य आधिक्ये न्यूनत्वे वा तदनुसारेण आवर्तनकालोऽपि उत्कृष्यते अपकृष्यते वा । पर्वप्रतिपत्सन्धिर्नाम यस्मिन् क्षणे पर्वणः समाप्तिः प्रतिपद आरम्भश्च स क्षणः । स यदि आवर्तनात् पूर्वं, तर्हि पूर्वेद्युरारम्भः, सन्धिदिने यागः कार्यः । यदि आवर्तनकाले, तदापि तथैव । यदि च सन्धिः आवर्तनात् परः तर्हि तु सन्धिदिने आरभ्य श्वोभूते यागः कार्य इति पूर्वोक्तस्मृतिबलात् लभ्यते ।

अत्र कश्चिद्विशेषः – पूर्वापेक्षया प्रतिपदः वृद्धौ अधिकभागस्य अर्धं पर्वणि योजयेत् । एवं योजनेन यः पर्वान्त्यक्षणः लभ्यते स एव पर्वप्रतिपत्सन्धिकालः । एवं पर्वापेक्षया प्रतिपदः क्षये यावता कालेन प्रतिपत् पर्वापेक्षया न्यूना तावतः अर्धं पर्वणि न्यूनीकर्तव्यम् । एवं कृते यः पर्वसमाप्तिकालः प्राप्नोति स एव सन्धिकालः । एवं योजनेन न्यूनीकरणेन वा प्राप्तः सन्धिकालः किमावर्तनकालात् पूर्वः उत परः उत आवर्तनकाल एवेति विज्ञाय पूर्वोक्तरीत्या दर्शपूर्णमासारम्भतत्समाप्तिकालौ निर्णेयौ ।

उदाहरणार्थं यदि त्रिंशद्घट्यात्मकमहः, तत्र च पञ्चदशघटीकालं यावत्पर्व, प्रतिपच्च अग्रिमेऽहनि सप्तदशनाडीकालं यावत्, तर्हि स्थूलरूपेण पञ्चदशनाडीसमाप्तिकालरूपे आवर्तने पर्वप्रतिपत्सन्धिप्रतीतावपि, वस्तुतः प्रतिपदः पर्वापेक्षया नाडीद्वयेन वृद्धिसत्त्वात् तदर्द्धभूतामेकां नाडीं पर्वकाले योजयामश्चेत् यः षोडशघटीकालः प्राप्नोति, तत्समाप्तिक्षण एव पर्वप्रतिपत्सन्धिः । एवं पर्वप्रतिपत्सन्धेःआवर्तनात् (पञ्चदशनाडीसमाप्तिक्षणात्) परत्वेन सन्धिदिने अन्वाधानादिकं कृत्वा परदिने एव इष्टिरनुष्ठेया ।

एवं यदि षोडशनाडीकाले पर्वसमाप्तिः, तर्हि आवर्तनात् परं सन्धिरिति स्थूलतया प्रतीतावपि, अग्रिमेऽहनि चतुर्दशनाडीपर्यन्तं प्रतिपत्सत्त्वे नाडीद्वयेन प्रतिपत् क्षीणेति तदर्धरूपामेकां नाडीं पर्वणो वियोजयामश्चेत् यः

पञ्चदशनाडीकालः प्राप्तः तदन्त्यक्षण एव सन्धिकाल इति तस्य आवर्तनकालवर्तित्वेन तस्मिन्नेव अहनि इष्टिः, अन्वाधानादिकं तु पूर्वेद्युरेवेति सूक्ष्मतया द्रष्टव्यम् । एतादृश्यां गणनायां प्रमाणभूते वचने इमे स्तः –

"[9]परेऽह्नि घटिका न्यूनास्तथैवाभ्यधिकाश्च याः।
तदर्धक्लृप्त्या पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेत् ॥ " इति ।
"[10]तिथेः परस्या घटिकास्तु याः स्युः न्यूनास्तथा वाभ्यधिकास्तु तासाम् ।
अर्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने स्यात् ॥" इति च ।

एवं सामान्यत आपस्तम्बादीनां दर्शपूर्णमासेष्टिकालो निरूपितः ।

**वाजसनेयिनां पूर्णमासेष्टिकाले विशेषः**

वाजसनेयिभिः तु आवर्तनात् प्राक् सन्धावपि सन्धिदिने अन्वाधाय श्वोभूते इष्टिरनुष्ठेया । एवं च वाजसनेयिनाम् आवर्तनात् पूर्वमावर्तने ततः परं वा सन्धौ पूर्णमासस्य अन्वाधानमेव सन्धिदिने, इष्टिस्तु परदिने एव । तदुक्तम् –

"[11]आवर्तनादधः सन्धिर्यद्यन्वाधाय तद्दिने ।
परेद्युरिष्टिरित्याहुर्विप्रा वाजसनेयिनः ॥" इति ।

इदं च वाक्यं दर्शमपि विषयीकरोतीव भाति, परन्तु वक्ष्यमाणप्रमाणानुसारेण, आवर्तनात् परं सन्धावपि परदिने सूर्यास्तमयात् पूर्वं द्वितीयास्पर्शे बोधायनानां वाजसनेयिनां सन्धिदिने एव इष्टिरिति प्रतीतेः, आवर्तनात् पूर्वं सन्धौ तु कैमुतिकन्यायेन सन्धिदिने एव इष्टिरिति सिद्ध्यतीत्यतः वचनमिदं केवलं वाजसनेयिनां पूर्णमासविषये व्यवतिष्ठते ।

**वाजसनेयिनां बोधायनानां च दर्शेष्टिकाले विशेषः**

वाजसनेयिनां बोधायनानां च यस्मिन् दिने सायं चन्द्रो दृश्येत तस्मिन् दिने नैवेष्टिः । अतः प्रतिपद्यपि सायं सूर्यास्तात्प्राक् द्वितीयास्पर्शे सायं चन्द्रदर्शनसंभवेन न तद्दिने इष्टिः, किन्तु दिवा प्रतिपद्रहितेऽपि पूर्वस्मिन् अमावास्यादिने एव । अन्वाधानं दर्शश्राद्धं च नेष्टिदिने इति ततोऽपि पूर्वस्मिन् अहनि चतुर्दश्यामपि अन्वाधानं दर्शश्राद्धं च कर्तव्यम् । तथा च बोधायनवचनम् –

"[12]चतुर्दशी तु संपूर्णा द्वितीया क्षयकारिणी ।
चरुरिष्टिरमायां स्यात् भूते कव्यादिका क्रिया ॥" इति ।

स्मृत्यन्तरं च भवति –

"[13]अमावास्यास्य पूर्वेद्युरदृष्टेन्दुः प्रशस्यते ।
दृष्टचन्द्रे न कर्तव्यो यागस्तत्र परेऽहनि ॥ " इति ।

कात्यायनोऽप्याह –

"[14]सिनीवाल्यपराह्णे चेदृगापस्तम्बगामिनाम् ।
सायाह्ने द्वित्रनाडी चेत् सा बोधायनकण्वयोः ॥" इति ।

"सायाह्ने द्वित्रनाडी चेदि"ति सूयास्तात्पूर्वम् ईषदमासत्त्वस्य सूर्यास्तात् परमेवामावास्याप्रवेशस्य चोपलक्षणम् । पूर्वोक्तबोधायनवचनानुसारेण प्रतिपद्दिने सायं द्वितीयासंबन्धे पूर्वस्याममायामेव इष्टेः, चतुर्दश्यामेव सायममासहितायां दिवा अमासंबन्धरहितायामपि श्राद्धान्वाधनयोश्च कर्तव्यत्वप्रतीतेः ।

तिथिवृद्धिसत्त्वे तु (चतुदशीदर्शयोः तत्तद्दिने सूर्यास्तात् प्राक्समाप्तावपि तृतीयेऽहनि प्रतिपदः दिवाकालव्यापित्वे तु ) न पूर्वोक्तकात्यायनवचनानुसारेण सायं दर्शयुक्तचतुर्दश्यां कव्यान्वाधाने, किन्तु आपस्तम्बादीनामिव आपराह्णिकदर्शयुक्तदिने एव कव्यान्वाधाने, तदुत्तरदिने आदिनं प्रतिपत्सत्त्वेन चन्द्रदर्शनासंभवेन तत्रेष्ट्यनुष्ठाने बाधकाभावेन ततः पूर्वदिने अमायामेव कव्यान्वाधानयोरनुष्ठेयत्वेन चतुर्दश्यां तयोरनुचितत्वात् । प्रतिपदि सायं द्वितीयासंबन्धप्रयुक्तचन्द्रदर्शनं हि इष्टेः पूर्वत्र (अमायाम्) आकर्षणे हेतुः, इष्ट्याकर्षणं च कव्यान्वाधानयोः चतुर्दश्यामाकर्षणे हेतुः । तदिदं "[15]अमायां तु दिवा युक्ता प्रतिपद्धटिकाऽपि वा । तत्रैवेष्टिसमाप्तिः स्यात् तिथिवृद्धिर्भवेन्न चेत् ॥" इति स्मृतौ "तिथिवृद्धिर्भवेन्न चेदि"ति कथनात् सिद्धम् ।

**सन्दर्भसूची**


1. आपस्तम्बश्रौतसूत्रम् – 1.1.1
2. जैमिनिसूत्रम् – 5.4.22
3. तत्तिरीयसंहिता – 2.6.3
4. शतपथब्राह्मणम् – 11.1.3.6
5. स्मृतिमुक्ताफले तिथिनिर्णयकाण्डे इष्टिकालनिर्णये उद्धृतानि गोभिलवचनानि
6. स्मृतिमुक्ताफले भाष्यार्थसंग्रहवचनम्
7. स्मृतिमुक्ताफले कालादर्शवचनम्
8. तैत्तिरीयसंहिता – 1.6.7
9. स्मृतिमुक्ताफले उद्धृतं कात्यायनवचनम्
10. स्मृतिमुक्ताफले उद्धृतं लोकाक्षिवचनम्
11. स्मृतिमुक्ताफले उद्धृतं कालादर्शवचनम्
12. स्मृतिमुक्ताफले उद्धृतं बोधायनवचनम्
13. स्मृतिमुक्ताफले उद्धृतं स्मृत्यन्तरम्
14. स्मृतिमुक्ताफले उद्धृतं कात्यायनवचनम्
15. स्मृतिमुक्ताफले उद्धृतं स्मृत्यन्तरवचनम्

# ध्वन्यात्मभूते शृङ्गारे यमकादिविवेचनम्

**डा. कोम्पेल्लि विनयकुमारः**
सहायकाचार्यः साहित्यविद्याशाखा
केन्द्रीयसंस्कृतविश्वविद्यालयः
राजीवगान्धीपरिसरः, शृङ्गेरी

**Keywords**

- **ध्वनेः उपक्रमः**
- **विवक्षितान्यपरवाच्यध्वनौ असंलक्ष्यक्रमव्यङ्ग्ये प्रभेदे शृङ्गाररसध्वनेः अन्तर्भावः**
- **ध्वनौ अलङ्कारसमीक्षा**
- **शृङ्गाररसस्य प्रभेदेषु नानुप्रासव्यञ्जकत्वम्**
- **विप्रलम्भशृङ्गारे यमकादीनां प्रतिषेधः**
- **ध्वनौ रसाक्षिप्ततया अलङ्काराणाम् उपनिबन्धनम्**
- **ध्वनौ रसाक्षिप्ततया आगतस्य अलङ्कारस्य उदाहरणम्**
- **सङ्ग्रहश्लोकानाम् उपनिबन्धनं तद्व्याख्यानं च**

**Abstract**

काव्ये रसादिः यदा अन्येभ्यः काव्याङ्गेभ्यः प्रधानं भवति, तदा असौ ध्वनिकाव्यम् इति उच्यते। अयमेव रसादिः तदानीम् अलङ्कार्यः इति कथ्यते। शृङ्गाररसः यदा अलङ्कार्यः अथवा ध्वनिः भवति, तस्मिन् काव्ये अनुप्रासालङ्कारः न प्रयुज्यते। अनुप्रासस्य योजने कवेः शब्दविशेषान्वेषणरूपः पृथक् प्रयासः आवश्यकः। एवमेव यमकादीनां शब्दालङ्काराणां प्रयोगोऽपि शृङ्गारादिषु सुकुमाररसेषु प्रयोक्तुं न शक्यते। सम्भोगशृङ्गारापेक्षया विप्रलम्भशृङ्गारः, तदपेक्षया करुणश्च अतिशयेन मधुरः भवति[1]। अतः एतेषु शब्दालङ्काराणां बाहुल्येन प्रयोगः रसविरोधाय भवति। रससमाहितचेतसः कवेः मनसि यदि पृथग्यत्नेन विना शब्दालङ्काराः आगच्छन्ति, तदा तेषां रसविरोधित्वं न भवति। वस्तुतः रसध्वनौ अपृथग्यत्ननिर्वर्त्या एव अलङ्कारा भवन्ति। **'कपोले पत्राली करतनिरोधेन मृदिता'** इति श्लोके प्रियायाः कोपस्य प्रियोत्कर्षरूपः व्यतिरेकालङ्कारः अपृथग्यत्ननिर्वृत्तः विप्रलम्भशृङ्गारम् उपकरोति।

दुष्कराणां यमकादीनां रसाभिव्यक्तौ बहिरङ्गत्वमेव। यत्र च रसानुगुणानि यमकादीनि दृश्यन्ते, तत्र तेषामेव अङ्गित्वम्, रसादेश्च अङ्गत्वमेव। रसाभासे यमकादीनाम् अलङ्काराणाम् अङ्गत्वमपि अविरुद्धं भवति। रसः अङ्गी चेदपि यमकादीनाम् अङ्गत्वं नोपपद्यते। तेषां निबन्धने पृथग्यत्नः अपेक्षितः इति हेतोः। तस्मात् अङ्गितया प्रतीयमाने रसे यमकादेः अङ्गत्वमपि रसदोषाय एव भवति इति ध्वनिवादिनां सिद्धान्तः।

---

[1] शृङ्गार एव मधुरः परः प्रह्लादनो रसः।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ।। ध्वन्यालोकः – द्वि.उ. का. सं.7
शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ।। ध्वन्यालोकः – द्वि.उ. का. सं.8

**ध्वनेः उपक्रमः**

लोकोत्तरवर्णनानिपुणकविकर्मरूपस्य रसाद्यङ्गभूतव्यञ्जनाव्यापारप्रधानस्य ललितोचित-सन्निवेशचारुशब्दार्थयुगलकाव्यस्य आत्मा ध्वनिः इति ध्वनिसम्प्रदायस्य प्रवर्तकेण आनन्दवर्धनेन विरोधिमतखण्डनपुरस्सरं सयुक्तिकं स्वकीये ध्वन्यालोके प्रतिष्ठापयाञ्चक्रे।

ध्वनेः मुख्यतया द्वौ भेदौ स्तः – अविवक्षितवाच्यध्वनिः (लक्षणामूलध्वनिः), विवक्षितान्यपरवाच्यध्वनिः (अभिधामूलध्वनिः) इति।

अविवक्षितवाच्यध्वनौ (लक्षणामूलध्वनौ) वाच्यार्थस्य विवक्षा प्रयोजनं वा न भवति। व्यङ्ग्यार्थः लक्ष्यार्थम् आश्रित्य अवतिष्ठते। अस्यापि द्वौ भेदौ – अर्थान्तरसङ्क्रमितवाच्यध्वनिः, अत्यन्ततिरस्कृतवाच्यध्वनिः इति। अर्थान्तरसङ्क्रमितवाच्यध्वनौ वाच्यार्थः स्वार्थं बोधयन्नपि अर्थान्तरं सङ्क्रामति। अत्यन्ततिरस्कृतवाच्यध्वनौ वाच्यार्थः सर्वथा तिरस्क्रियते। एवं लक्षणामूलध्वनिः[1]।

विवक्षितान्यपरवाच्यध्वनौ (अभिधामूलध्वनौ) व्यङ्ग्यार्थः वाच्यार्थम् आश्रयते। अस्यापि द्वौ भेदौ – संलक्ष्यक्रमव्यङ्ग्यध्वनिः, असंलक्ष्यक्रमव्यङ्ग्यध्वनिः इति[2]। संलक्ष्यक्रमव्यङ्ग्यध्वनौ व्यङ्ग्यार्थप्रकाशस्य पौर्वापर्यक्रमः लक्ष्यते। असंलक्ष्यक्रमङ्ग्यध्वनौ शतपत्रभेदनन्यायेन पौर्वापर्यं न लक्ष्यते। तत्र सत्यपि पौर्वापर्ये यौगपद्यात् न तत्र क्रमज्ञानम्। द्वयोरपि एतयोः अनेके भेदा वर्ण्यन्ते।

**विवक्षितान्यपरवाच्यध्वनौ असंलक्ष्यक्रमव्यङ्ग्ये प्रभेदे शृङ्गाररसध्वनेः अन्तर्भावः**

विवक्षितान्यपरवाच्यध्वनौ (अभिधामूलध्वनौ) असंलक्ष्यक्रमव्यङ्ग्ये प्रभेदे रसादिध्वनेः आनन्त्यं निरूपितमस्ति[3]। रसाः शृङ्गारादयः। तत्र शृङ्गारस्य सम्भोगः विप्रलम्भः इति द्वौ भेदौ स्तः। संयुक्तौ भुञ्जाते सम्भोगशृङ्गारः सुखप्रकर्षस्वरूपः। विप्रयुक्तौ भूञ्जाते इति असौ विप्रलम्भशृङ्गारः दुःखप्रकर्षस्वरूपः। सम्भोगशृङ्गारस्यापि परस्परदर्शन-प्रेम-आलिङ्गनादिविविधप्रकाराः। एकैकोऽपि प्रभेदः विभावानुभावव्यभिचारिणां भेदेन अनेकप्रभेदैः बहुविधः।

विप्रलम्भशृङ्गारोऽपि पञ्चप्रकारको वर्तते। अभिलाषविप्रलम्भः, विरहविप्रलम्भः, ईर्ष्याविप्रलम्भः, प्रवासविप्रलम्भः, शापहेतुकविप्रलम्भः इति। गुणश्रवणजन्यः, स्वप्नदर्शनजन्यः इत्यादिः अभिलाषविप्रलम्भोऽपि अनेकप्रकारकः। नायिकानिष्ठः नायकनिष्ठो वा अयं भविष्यति। नायिकाऽपि मुग्धा मध्या प्रगल्भा वा इत्यादिबहुधा दृश्यते। नायकोऽपि धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्तेत्यादिभिः भेदैः बहुविधः। एकैकस्यापि नायकप्रभेदस्य नायिकाप्रभेदस्य वा पुनरपि अवान्तरभेदाः दृश्यन्ते। एते नायिकानायकादयः विभावाः कथ्यन्ते।

---

[1] अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ।
अविक्षितवाच्यस्य ध्वनेर्वाच्यं द्वधा मतम् ।। ध्वन्यालोकः – द्वि.उ. का. सं.1

[2] असंक्ष्यक्रमद्योतः क्रमेण द्योतितः परः ।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ।। ध्वन्यालोकः – द्वि.उ. का. सं.2

[3] तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये।
तेषामानन्त्यमन्योन्यसम्बध्परिकल्पने ।। ध्वन्यालोकः – द्वि.उ. का. सं.12

अनुभावानां भुजक्षेपकटाक्षप्रभृतीनां भेदेनापि रसः बहुविधः दृश्यते। व्यभिचारिणोऽपि बहवः। एवं विभावानुभावव्यभिचारिणां विविधप्रकाराणां सङ्करेण रसानाम् अनन्ताः भेदाः।

एते सर्वेऽपि भेदाः देशभेदेन कालभेदेन अवस्थाभेदेन पुनरपि भिद्यन्ते। बाल्यावस्थायां या पार्वती कालिदासेन वर्णिता सा यौवनावस्थायां भिन्ना अस्ति। तपस्यन्त्याः पार्वत्याः स्वरूपवर्णने विवाहार्थम् अलङ्कृतायाः पार्वत्याः स्वरूपवर्णने च भेदः दृश्यते। एवमेव हिमवतो वर्णनं पर्वतरूपेणापि देवतात्मारूपेणापि कमारसम्भवे दृश्यते। देशभेदेन भेदस्तु प्रसिद्ध एव।

एवं विवक्षितान्यपरवाच्यध्वनिः अनन्तप्रभेदो भवति। एतेषां सर्वेषां भेदप्रभेदानां निरवशेषतया स्वरूपोदाहरणादिप्रदर्शनं दुष्करमेव।

**ध्वनौ अलङ्कारसमीक्षा**

रसादिः यत्र अङ्गितया व्यङ्ग्यो भवति स एव ध्वनेः विषयः। अयमेव रसादिः अलङ्कार्यः इति उच्यते। रसादेः अलङ्कार्यस्य अलङ्काराः के भवेयुः इति विचारस्य विषयः। यः कोऽपि अन्यं कमपि अलङ्करोति स एव अलङ्कारः खलु । अत्र रसादेः अलङ्कार्यं यः अलङ्करोति स एव अलङ्कारपदवाच्यो भवति। अलङ्कार्यस्य सर्वथा प्राधान्यं भवति, अलङ्काराः अलङ्कार्यापेक्षया अप्रधानानि भवन्ति। यदि अलङ्काराः प्रधानानि भवन्ति, तर्हि ते अलङ्कार्यपदवाच्याः भवन्ति, न तु अलङ्कापदवाच्याः। काव्ये रसादेः अलङ्कार्यस्यैव सर्वाधिकं प्राधान्यम् अस्ति। तेषां निबन्धने एव कवेः महान् प्रयत्नः स्यात्। अलङ्काराश्च रसादिध्वनेः शोभाधायकाः भवन्ति। यदि अलङ्काराणां विचित्ररूपाणां निबन्धने कविः अतिशयेन प्रयत्नवान् भवति, तर्हि रसादिध्वनेः विनिबन्धने कवेः अनवधानता जायते। अतः काव्ये पृथग्यत्नं विना ये अलङ्काराः आगच्छन्ति ते एव आदर्शभूता भवन्ति। यदि कवयः अलङ्कारेषु आकृष्टाः सन्तः तेषां निबन्धने अतिशयेन प्रयत्नवन्तः भवन्ति, तर्हि रसादिध्वनेः निबन्धने अनवधानतया तत्र दोषाः भविष्यन्ति इति स्वाभाविकः। अतः ध्वनिकाव्येषु रससमाहितचेताः कविः अलङ्काराणां विनिवेशनं समीक्ष्यैव कुर्यात्। एते समीक्षाप्रकाराः अत्र निर्दिश्यन्ते।

**शृङ्गाररसस्य प्रभेदेषु नानुप्रासव्यञ्जकत्वम्**

सम्भोग-विप्रलम्भशृङ्गारयोः अनुप्रासालङ्कारः न व्यञ्जकः। अनुप्रासेन अलङ्कारेण द्वयोरपि शृङ्गारयोः प्रकाशः न भवतीत्यर्थः। अङ्गद्वारा अङ्गिनः उपकारकाः ये भवन्ति ते एव अलङ्काराः भवन्ति रसादिध्वनौ काव्ये। अनुप्रासस्तु ध्वनेः उपकारकः न प्रतीयते। तदेवोच्यते –

**शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवान्।**
**सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः**[1]।। इति।।

अनुप्रासनामा शब्दालङ्कारः प्रसिद्धः। स च प्रायेण एकरूपाणां शब्दानां प्रयोगेण निबध्यते। एकरूपाणां शब्दानाम् अन्वेषणे कवेः विशेषः प्रयत्नः अपेक्षितः। अनेन च कवेः रसनिबन्धने एकाग्रतायां शैथिल्यं जायते। अनेन च कारणेन अयम् अनुप्रासः रसादिध्वनेः व्यञ्जकः न भवति इत्यर्थः। यदि एकरूपम् अनुबन्धं त्यक्त्वा

[1] ध्वन्यालोकः – द्वि.उ. का. सं. 14

विचित्रः अनुप्रासः निबध्यमानः न दोषाय इति प्रकाशयितुमेव कारिकायाम् एकरूपानुबन्धवान् इति पदं प्रयुक्तम्। अपि च यदि शृङ्गारः अङ्गभूतः, तर्हि तत्र अनुप्रासः यथेच्छं प्रयोक्तुं शक्यते इति च नियमः।

**विप्रलम्भशृङ्गारे यमकादीनां प्रतिषेधः**

कविः सर्वदा रसनिबन्धने एव अवधानवान् भवेत्। रसनिबन्धनसमये ये अलङ्काराः सरलतया पृथक् प्रयत्नेन विना आगच्छन्ति ते एव काव्ये कविना प्रयोक्तव्याः। एष च नियमः ध्वनिकाव्ये सर्वत्र सामान्यः। शृङ्गाररसे च अस्य विशेषः अस्ति। यतो हि शृङ्गाररसः सुकुमारो वर्तते। अतः शृङ्गाररसस्य निबन्धने कविना अतिशयेन सावधानेन भव्यम्। नोचेत् शृङ्गाररसः काव्ये न शोभेत। एकरूपानुबन्धवान् अनुप्रासः शृङ्गारे न प्रकाशकः भवति। यमकालङ्कारस्य कोऽपि भेदः शृङ्गाररसे न प्रकाशकः इति वदति अस्यां कारिकायाम् -

**ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम्।**
**शक्तावपि प्रमादित्वं विप्रलम्भे विशषतः**[1]।। इति।।

अर्थात् अनुप्रासालङ्कारापेक्षया यमकालङ्कारप्रकाराणां स्थापनं शृङ्गाररसप्रधाने काव्ये अधिकं रसविरोधं जनयति। अतः यमकप्रकाराणाम् अलङ्काराणां शृङ्गारे नियमात् स्थापनं न कर्तव्यम् इति।

काकतालीयन्यायेन (यदृच्छया) कदाचित् काव्यमध्ये यमकालङ्कारः प्रयुक्तोऽपि, बाहुल्येन यमकालङ्कारस्य अन्येषाम् अलङ्काराणाम् इव स्थापनं न कर्तव्यम्। **'विप्रलम्भे विशेषतः'** इति कारिकायां कथनेन विप्रलम्भशृङ्गारः सम्भोगशृङ्गारापेक्षया सुकुमारतरः भवति इति आगच्छति। अतः तस्मिन् काव्ये यदा विप्रलम्भशृङ्गारः प्रकाशते, तदा यमकप्रकाराणाम् काव्याङ्गभूतानाम् अलङ्काराणां प्रयोगः निश्चयेन न करणीयः इति।

विशेषतः विप्रलम्भशृङ्गारे, करुणरसेऽपि चित्तद्रुतेः हेतुभूतं माधुर्यं प्रकर्षवत् भवति। प्रतिभासम्पन्नेनापि कविना विशिष्य विप्रलम्भशृङ्गारे निबद्धः यमकादिरलङ्कारः रसविरोधी भवत्येव इति कारिकायाः अर्थः। कारिकायां **'शक्तावपि प्रमादित्वम्'** इति कथनेन कवेः यमकालङ्कारप्रयोगसामर्थ्यसत्त्वेऽपि प्रमादः एव। **'प्रमादोऽनवधानता'** इति अमरकोशः।

**ध्वनौ रसाक्षिप्ततया अलङ्काराणाम् उपनिबन्धनम्**

यमकादीनाम् अलङ्काराणां रसादिध्वनौ प्रयोगः नियमेन न कर्तव्यः इति पूर्वं प्रतिपदितम्। तर्हि सन्देहो जायते यत् – रसादिध्वनौ के अलङ्काराः भवितुमर्हन्ति ? इति। समाधानं तु - यस्मिन् रसादिध्वनौ काव्ये रसादिनिबन्धनेन सहैव पृथक् यत्नं विना अलङ्कारा आगच्छन्ति त एव स्वाभाविका अलङ्काराः। रसनिबन्धने अवहितचित्तस्य कवेः अलङ्कारनिबन्धनार्थं पृथक् यत्नः अपेक्षितः चेत् रसनिबन्धने शैथिल्यम् अवश्यमेव प्रसज्येत। अतः अत्र ध्वनिकाव्ये अलङ्काराणां निबन्धने सुस्पष्टः नियमो वर्तते। अनया वक्ष्यमाणया कारिकया आचार्यः आनन्दवर्धनः स्फुटयति यथा –

**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।**
**अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः**[2]।।इति।।

---

[1] ध्वन्यालोकः – द्वि.उ. का. सं. 15

[2] ध्वन्यालोकः – द्वि.उ. का. सं.16

यस्मिन् काव्ये रसनिबन्धनार्थं यः प्रयत्नः अपेक्षितः ततः पृथक् प्रयत्नेन विनैव यावान् अलङ्कारः आगच्छति, स एव वस्तुतः तस्मिन् काव्ये आदर्शभूतः अलङ्कारः। कवेः सम्पूर्णः प्रयासः रसनिबन्धने एव स्यात्। रसनिबन्धनार्थं प्रयत्नशीलस्य कवेः मनसि यदि कोऽपि अलङ्कारः निसर्गतया आगच्छति, सः रसपोषकः एव अवश्यं भविष्यति।

यस्य अलङ्कारस्य बन्धः रसाविनाभावेनैव, रसान्यथानुपपत्त्यैव वा कर्तुं शक्यो भवेत्, सः अपृथग्यत्नेन स्वयं निष्पन्नः, असंलक्ष्यक्रमव्यङ्ग्यध्वनौ अलङ्कारो मतः। अपृथग्यत्ननिर्वर्त्यस्यैव तस्य अलङ्कारस्य प्रधानं रसानुकूलत्वम् इत्यर्थः।

**ध्वनौ रसाक्षिप्ततया आगतस्य अलङ्कारस्य उदाहरणम्** –

इत्येवं शृङ्गाररसध्वनिकाव्ये कीदृशः अलङ्कारः अनुकूलतां भजते इति निरूप्य, सम्प्रति रसध्वनेः अनुकूलस्य अलङ्कारस्य उदाहरणं दर्श्यते। यथा

**कपोले पत्राली करतलनिरोधेन मृदिता**
**निपीतो निःश्वासैरयममृतहृद्योऽधररसः।**
**मुहुः कण्ठे लग्नस्तरलयति बाष्पस्तनतटीं**
**प्रियो मन्युर्जातस्तव निरनुरोधे ! न तु वयम्**।।इति।।

प्रियया क्रोधेन परित्यक्तस्य नायकस्य तां प्रति उक्तिरियम्। गण्डस्थले विरचितं प्रसाधनद्रव्यं करतलसम्मर्देन परिमार्जितम्। अयः अमृतवत् मनोरमः अधररसः निःश्वासवायुभिः नितरां पीतः। कण्ठप्रदेशे लग्नम् अश्रु कुचयोः तटप्रदेशं वारं वारं चालयति। हे अनुरोधशून्ये ! प्रिये! भवत्याः कोपः एव प्रियो जातः, न तु अहं भवत्याः प्रियः इति। अर्थात् अधुना भवत्याः प्रियः कोपो जात इव प्रतीयते इत्यर्थः।

अस्मिन्नुदाहरणे विप्रलम्भशृङ्गारः मुख्यो रसः। सोऽपि ईर्ष्याविप्रलम्भः। अपि च अत्र प्रियायाः कोपस्य प्रियोत्कर्षरूपः व्यतिरेकः कवेः पृथग्प्रयत्नं विना रसपोषकरूपेण समापतितः। अत एव अयमलङ्कारः विप्रलम्भशृङ्गारम् अतिशयेन पोषयति।

यदि असौ अलङ्कारः रसस्य अङ्गभूतः तदानीमेव अस्य अपृथग्यत्ननिर्वर्त्यत्वम्। तदानीमेव अस्य रसं स्थापयितुम् अध्यवसितस्य कवेः अलङ्कारत्वं भवितुमर्हति। कविः रसनिबन्धनव्यापारात् विरतः सन् पृथग्यत्नेन अलङ्कारान् निबध्नाति चेत् सः अलङ्कारः नैव रसाङ्गं भवति। यमकालङ्कारे च कवेः पृथक् प्रयत्नः अवश्यम् अपेक्ष्यते। यतो हि यमकालङ्कारे शब्दविशेषान्वेषणरूपः प्रयत्नः अवश्यं भवति। स च प्रयत्नः रससमाहितचेतसः कवेः एकाग्रतायां शैथिल्यं जनयति। अतः यमकालङ्कारः रसप्रधाने काव्ये नैव शोभां ददाति। अन्येषाम् अलङ्काराणाम् एषा दशा नास्ति। प्रतिभावतः कवेः मनसि विवक्षितरसानुकूलतया दुर्घटना अलङ्कारा अपि निसर्गतया अहम्पूर्विकया परापतन्ति। अतः तेषाम् अलङ्काराणां रसध्वनौ विशेषतः शृङ्गारे करुणे वा निबन्धनं नैव दोषाय कल्पते। अयमेव नियमः कविना अनुकरणीयः अलङ्कारसन्निवेशविषये।

बाणभट्टविरचिते कादम्बर्याख्ये प्रबन्धे **“चन्दनविलेपनामनङ्गरागिणीं च बालां मन्मथजननीं च, मृणालिनीम् अभ्यर्थिततुषारस्पर्शां च कादम्बरीं चन्द्रपीडो व्यलोकयत्[1]”** इति विरहोत्कण्ठितायाः कादम्बर्याः विरहविप्रलम्भवर्णनावसरे रसमाहितचेतसः बाणस्य अपृथग्यत्ननिर्वर्तिताः अलङ्काराः अहमहमिकया परापतिताः दृश्यन्ते।

एवमेव सेतुबन्धे महाकाव्ये प्राकृतभाषायां विरचिते, इन्द्रजिता छित्वा प्रदर्शितानि रामादीनां शिरांसि विलोक्य विह्वलायाः सीतायाः वर्णने च अलङ्काराः समापतिताः दृश्यन्ते। एतत्सर्वमपि अत्यन्तं युक्तमेव। यतः रसाः अभिधया प्रतिपाद्यमानैः अर्थविशेषैरेव आक्षेप्तव्या भवन्ति।

वाच्यार्थस्य प्रतिपादनाय प्रवृत्तैरेव शब्दैः वाच्यविशेषाः रूपकादयः अलङ्काराः जायन्ते। अतः एतेषां रूपकादीनाम् अलङ्काराणां रसाभिव्यक्तौ बहिरङ्गत्वम् = अनपेक्षिततत्वं नास्तीत्यर्थः। यत्र कुत्रापि अपवादरूपेण कानिचित् यमकादीनि अलङ्करणानि रसानुकुणानि दृश्यन्ते, तत्र सर्वत्र रसादीनाम् अङ्गत्वं यमकादीनां च अङ्गिता स्वीक्रियते। रसाभासे यमकादीनाम् अङ्गत्वे न कोऽपि विरोधः। तस्मात् अङ्गितया प्रतीयमाने रसे यमकादेः अङ्गत्वमपि रसदोषाय एव भवति इति ध्वनिवादिनां सिद्धान्तः।

**सङ्ग्रहश्लोकानाम् उपनिबन्धनं तद्व्याख्यानं च**

रसः यदि अलङ्कार्यः तर्हि तत्र अलङ्काराणां निबन्धनम् अत्यन्तं सावधानतया भवेत्। अनुप्रासयमकादयः शब्दलङ्काराः काव्ये समावेश्यन्ते चेत् तदर्थं कवेः पृथग्यत्नः अपेक्षितः। अतः एते रसध्वनौ बद्धु न शक्यन्ते। एतत्सर्वं विस्तरेण यत् प्रतिपादितं तत्सङ्ग्रहेण कतिपयैः श्लोकैः आनन्दवर्धनेन इत्थं निरूप्यते। यथा –

**रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित्।**
**एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः[2]।।**
**यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते।**
**शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते[3]।।**
**रसाभासाङ्गभावस्तु यमकादेर्न वार्यते।**
**ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते[4]**।। इति।।

एतैः त्रिभिः श्लोकैः पूर्वोक्तः अर्थः एव सङ्गृहीतः।

कुत्रचित् कालिदासप्रभृतीनां प्रतिभाधनानां काव्येषु रसानुगुणानि अलङ्करणानि दृष्टिगोचरीभवन्ति। तानि च पृथग्यत्नेन विनैव निबद्धानि अवलोक्यन्ते। यमकादीनाम् अलङ्कारप्रकाराणां निबन्धने तु प्रतिभावतोऽपि कवेः पृथक् प्रयत्नः निश्चयेन अपेक्ष्यते। अतः ध्वन्यान्मभूते शृङ्गारे यमकादीनां निबन्धनं नैव प्रशस्यते। अत्र तु यमकादिनिबन्धने कवेः प्रमादित्वम् अवश्यमेव भवति। काव्ये रसाभासादीनाम् अङ्गित्वे तु यमकादीनाम् अलङ्कारप्रकरणानां निबन्धनं न दोषाय कल्पते इति आनन्दवर्धनः सङ्ग्रहश्लोकत्रयेऽस्मिन् प्रतिपादयामास।

---

[1] कादम्बरी –

[2] ध्वन्यालोकः – द्वि.उ. का. सं. 16 अ

[3] ध्वन्यालोकः – द्वि.उ. का. सं. 16 आ

[4] ध्वन्यालोकः – द्वि.उ. का. सं. 16 इ

## Bibliography


**1** ध्वन्यालोकः - बालानन्दिनीव्याख्यया आन्ध्रभाषाव्याख्याया अलङ्कृतः, व्याख्याता – पुल्लेल श्रीरामचन्द्रः

2 ध्वन्यालोकः - श्रीमदाचार्याभिनवगुप्तविरचितया व्याख्यानुगतः

3 ध्वन्यालोकः - श्रीमदभिनवगुप्तविरचित‘**लोचन**’व्याख्यासहितः


## Endnotes

1 शृङ्गार एव मधुरः परः प्रह्लादनो रसः।

तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ।। ध्वन्यालोकः – द्वि.उ. का. सं.7

शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।

माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ।। ध्वन्यालोकः – द्वि.उ. का. सं.8

2 अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ।

अविक्षितवाच्यस्य ध्वनेर्वाच्यं द्वधा मतम् ।। ध्वन्यालोकः – द्वि.उ. का. सं.1

3 असंक्ष्यक्रमद्योतः क्रमेण द्योतितः परः ।

विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ।। ध्वन्यालोकः – द्वि.उ. का. सं.2

4 तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये।

तेषामानन्त्यमन्योन्यसम्बधपरिकल्पने ।। ध्वन्यालोकः – द्वि.उ. का. सं.12

5 ध्वन्यालोकः – द्वि.उ. का. सं. 14

6 ध्वन्यालोकः – द्वि.उ. का. सं. 15

7 ध्वन्यालोकः – द्वि.उ. का. सं.16

8 कादम्बरी –

9 ध्वन्यालोकः – द्वि.उ. का. सं. 16 अ

10 ध्वन्यालोकः – द्वि.उ. का. सं. 16 आ

11 ध्वन्यालोकः – द्वि.उ. का. सं. 16 इ

# न वेत्ति हितमात्मनः

**डॉ. दयानिधि शर्मा**
सहायकाचार्यः, शिक्षाशास्त्रविद्याशाखा
राजीवगान्धीपरिसरः, शृङ्गेरी

**बीजशब्दाः -** तत्त्वज्ञानम्, उन्मार्गगामिनः, तारयति, व्याधिस्थः, मधुरार्थभाषिणी ।

**सारांशः -** दार्शनिकम् अध्ययनं जीवनस्य समस्यानां समाधानार्थम् उपयोगि भवति । प्रत्येकं मानवः समस्यानां परिहाराय सदा यत्नशीलो दृश्यते । जगति तादृशानि बहूनि तत्त्वानि वर्तन्ते यानि अस्मान् प्रेरयन्ति । तेषु मनः ज्ञानं जीवनस्य परिणामः दुःखं सुखादीनि च प्रभावपूर्णानि वर्तन्ते । एतेषां विश्लेषणं कर्तुं दर्शनशास्त्रं सर्वान् दिशति । तदनुसारं संसारे जनाः तेषां हितसन्दर्भे चिन्तयन्ति । अतः एव आनन्दप्राप्तिरेव जीवनस्य परमं लक्ष्यं विद्यते ।

संसारे मानवाः तेषां स्वभावानुसारमेव जीवनं यापयन्ति । ते विचार्य अविचार्य च लोके व्यवहरन्ति । साधुत्वं मनसि निधाय कार्यकरणेन बहवः जगति प्रशंसाभाजाः भवन्ति । वस्तुतस्तु जीवनमिदं रहस्यमयं वर्तते । जीवनस्य रहस्यं येन केनापि स्पष्टतया ज्ञातं, सः सुखम् अनुभवति । रहस्यम् अविज्ञाय ये जगति अस्मिन् आचरन्ति ते बहुधा कष्टमनुभवन्ति । अत एव प्रत्येकं मनुष्येण तत्त्वज्ञानं करणीयम् । एतस्य मुख्यं कारणमिदं विद्यते यत् मनुष्यजन्मनि एव तत्त्वज्ञानस्य अवकाशः लभ्यते । अस्मिन् विषये गरुडपुराणे कथ्यते ;

**चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् ।**
**न मानुषं विनान्यत्र तत्त्वज्ञानं तु लभ्यते [1]॥**

अस्मिन् जगति सर्वत्र असुखमेव दृश्यते अनुभूयते च । असुखम् इमं लोकं प्राप्य कः सुखी वर्तते ? कस्य च अत्र रुचिः भवेत् ? कः सुखं प्राप्तुं समर्थः वर्तते ? यः मानवशरीरं प्राप्य सदाचाररतः वर्तते तस्य एव जीवनं सफलताम् एति । केवलं देह-दण्डनमात्रेणात्र कार्यं नैव सिद्ध्यति । जीवनमुक्तेः साधनं तु तत्त्वज्ञानमेव । अविवेकिनां तु कदापि मुक्तिः नैव भवति ;

**देहदण्डनमात्रेण का मुक्तिरविवेकिनाम् ।**
**वल्मीकताडनादेव मृतः किन्नु महोरगः [2]॥**

शिक्षितस्य मनुष्यस्य कृते समाजः सदा गौरवं यच्छति । समाजं विना मनुष्यस्य गतिः नास्ति । समाजे भूत्वा निवसन् च सः सर्वदा समाजस्य आत्मनः च हिताय चिन्तयेत् । ज्ञानं प्राप्य यदि ज्ञानवान् नास्ति तर्हि तस्य जीवनस्य कोऽर्थः ? ज्ञानी सर्वदा उत्तमरूपेण समाजे व्यवहरेत् यतो हि तस्य व्यवहारमेव समाजः अनुसरति । शास्त्रेभ्यः बहुविषयेभ्यश्च उत्तमान् अंशान् विज्ञाय सः लोकहिताय सदा रतो भवेत् । अस्मिन् विषये उच्यते यत् ;

**हिताहितं न जानन्तो नित्यमुन्मार्गगामिनः ।**
**कुक्षिपूरणनिष्ठा ये ते नरा नारकाः खगाः [3]॥**
**निद्राभीमैथुनाहाराः सर्वेषां प्राणिनां समाः ।**
**ज्ञानवान् मानवः प्रोक्तो ज्ञानहीनः पशुः स्मृतः [4]॥**

प्रायशः कामपरायणाः जनाः अविचार्य भूमौ विचरन्ति । ते आत्मतत्त्वं न ज्ञात्वा एव जीवनं यापयन्ति । बहुधा क्रोधपरायणाः भूत्वा अपि ते अधमं कार्यं कुर्वन्ति । तादृशाः जनाः शिक्षिताः सन् अपि भूमौ निन्दनीयाः वर्तन्ते । तेषां जनानां का गतिः ? कथं ते उत्कृष्टं कार्यं कर्तुं सन्नद्धाः भवन्ति ? कथं तेषां मतिः प्रवर्तते ? एतत् सर्वं तु विचारणीयं विद्यते । यथाह ;

**अत्र जन्मसहस्राणां सहस्रैरपि कोटिभिः ।**
**कदाचित् लभते जन्तुः मानुष्यं पुण्यसञ्चयात् [5]॥**
**सोपानभूतं मोक्षस्य मानुष्यं प्राप्य दुर्लभम् ।**
**यः तारयति नात्मानं तस्मात् पापतरोऽत्र कः [6]॥**

प्रतिक्षणं जीवनस्य कालः धावति । यः जीवनस्य उपयोगितां न चिन्तयति सः दुःखेन मनसा पीडाम् अनुभवति । धावमानः मानवः स्वस्य हितस्य विषये कदाचित् एव विचारयति । आयुषः कालः शीघ्रमेव गच्छन् वर्तते । विद्यां सम्यक् अधीत्य जनेषु प्रीतिभावं संस्थाप्य सः पुण्यभाक् भवेदेव । यतो हि नानाकार्यैः संसारसम्भवैः कालो न ज्ञायते । तत्फलेन निद्रालस्यैः जीवनमपि अर्द्धमेव सञ्जायते । बाल्यकाले रागादिभिः अपि दुःखमेव आप्नोति । अस्मिन् विषये कथ्यते ;

**यावत् तिष्ठति देहोऽयं तावत् तत्त्वं समभ्यसेत् ।**
**सन्दीप्तकोणभवने कूपं खनति दुर्मतिः [7]॥**

जीवने आर्तान् दुःखितान् च विलोक्य बहवः भयं नानुभवन्ति । ग्रामः पुनः पुनः प्राप्यते । धनं पुनः पुनः प्राप्यते । गृहं पुनः पुनः प्राप्यते । शुभाशुभं च कर्म पुनः पुनः प्राप्यते परन्तु मानवशरीरं पुनः पुनः नैव प्राप्यते । विद्वान् बहु विचिन्त्य जीवनस्य हितं चिन्तयेत् । कुत्र लाभः ? कुत्र शान्तिः ? कुत्र सद्गतिः ? कुत्र सदाचारशीलता ? एतेषां वाक्यानां विषये गभीरतया विमर्शः करणीयः । अतः शरीररक्षणोपायान् कृत्वा उत्तमं जीवनं जीवेत् । यतो हि कुष्ठादिरोगिणः अपि शरीरं त्यक्तुं नेच्छन्ति । अस्मिन् विषये उच्यते ;

**इहैव नरकव्याधेः चिकित्सां न करोति यः ।**
**गत्वा निरौषधं देशं व्याधिस्थः किं करिष्यते [8]॥**
**सत्सङ्गश्च विवेकश्च निर्मलं नयनद्वयम् ।**
**यस्य नास्ति नरः सोऽन्धः कथं न स्यादमार्गगः [9]॥**

जगत् इदं सर्वेषां दुःखानाम् आलयं वर्तते । सकलापदाम् एतत् वासस्थानं विद्यते । सर्वेषां पापानामपि इदम् आश्रयम् । विविधस्नेहपाशैः मनुष्यः बद्धः वर्तते । यथा पुत्रदारमयैः पाशैः तु विशिष्टरूपेण बद्धः अस्ति । तदानीमपि सः मनसः प्रियान् सम्बन्धान् कुरुते । वारं वारं यत् न करणीयं तदेव सः कर्तुम् उद्युक्तो भवति । कोऽपि मृतः पुनः समागतः एतत् नैव दृश्यते । राजा यतिः द्विजपुङ्गवः वा भवेत् । यदि धार्मिकः कश्चन वर्तते तर्हि सः अवश्यमेव ऊर्ध्वलोकं प्रति यति । एतस्य मुख्यं कारणं तस्य प्रज्ञाचक्षुरेव विद्यते । तेन चक्षुषा सः जगतः व्यवहारं मनसि निधाय उत्तमं कर्तुम् अग्रे सरति । स्वयं भगवान् विष्णुः निगदति ;

**दानप्रभावेण विमानसंस्थितो**
**धर्मः पिता मातृदयानुरूपिणी [10]।**

**वाणी कलत्रं मधुरार्थभाषिणी**
**स्नानं सुतीर्थे च सुबन्धुवर्गः [11]॥**

निष्कर्षरूपेण वक्तुं शक्यते यत् जीवनस्य हितं यः वेत्ति सः एव विद्वान् । यः संसाररोगस्य चिकित्सां कर्तुं प्रभवति तस्य कृते तु भेषजं वर्तते । आत्मनियन्त्रणं कृत्वा प्रत्येकं छात्रः, शिक्षकः सामाजिकश्च जीवनस्य औचित्यं जानीयात् । मधुरवचसा सर्वदा व्यवहरन् पुण्यकर्माणि कृत्वा शनैः शनैः नीतिमार्गं प्रति सरेत् । धर्मवान् संभूय सत्याचरणं कृत्वा आत्मानं सदा उद्धरेत् । संसारवासनां परित्यज्य, इन्द्रियचापलं च विहाय तत्त्वकथां सदा जानीयात् । अनेन सह गुरुमुखात् अपि रहस्यं विश्रूय मुक्तिं प्राप्नुयात् ।

**द्वे पदे बन्धमोक्षाय ममेति न ममेति च ।**
**ममेति बद्ध्यते जन्तुः न ममेति प्रमुच्यते [12]॥**
**तत् कर्म यन्नबन्धाय सा विद्या या विमुक्तिदा ।**
**आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् [13]॥**

## सन्दर्भाः (References)


1. कौण्डिन्यायन, शिवराज (2004). गरुडपुराणम् (अनु.), चौखम्बा विद्याभवन, वाराणसी, पृ० 491
2. तदेव, पृ० 498
3. तदेव, पृ० 496
4. तदेव, पृ० 496
5. तदेव, पृ० 491
6. तदेव, पृ० 491
7. तदेव, पृ० 493
8. तदेव, पृ० 492
9. तदेव, पृ० 497
10. तदेव, पृ० 487
11. तदेव, पृ० 487
12. तदेव, पृ० 502
13. तदेव, पृ० 502

# श्राद्धविमर्शः

**डा. प्रमोदभट्टः**
सहायकाचार्यः, व्याकरणविद्याशाखा
केन्द्रीयसंस्कृतविश्वविद्यालयः
राजीवगान्धीपरिसरः, शृङ्गेरी

**लेखोपनिबद्धाः बिन्दवः -**
पार्वणश्राद्धम्, एकोद्दिष्टश्राद्धम् , नान्दीश्राद्धम्, सपिण्डीकरणश्राद्धम्, श्राद्धविधयः, श्राद्धदेशे वर्ज्याः पदार्थाः, श्राद्धे गुणान्विताः पाककर्तारः ।

**सारांशः -**
भारतीयसनातनसंस्कृतौ श्राद्धं कर्म एकं विशिष्टं स्थानं भजते इति सर्वैः विदितमेव । श्रद्धया क्रियमाणं कर्म एव श्राद्धम् इत्युच्यते । श्राद्धमिति पारिभाषिकं पदम् । पार्वणश्राद्धम्, एकोद्दिष्टश्राद्धम् , नान्दीश्राद्धम्, सपिण्डीकरणश्राद्धम् इति प्रसिद्धानि चत्वारि श्राद्धानि सन्ति, एतदतिरिच्य षण्णवतिनित्यश्राद्धानि पुनः सन्ति एव । धनहीनेन दरिद्रेण श्राद्धं कथं कर्तव्यम् ? । श्राद्धे अष्टादशाधिकाः विधयः आचमनादयः भवन्ति । श्राद्धदेशे वर्ज्याः पदार्थाः के, श्रेष्ठाः पदार्थाः के ? । श्राद्धे पाककर्तारः कीदृशाः भवेयुः इत्येते विचाराः अत्र प्रबन्धे निरूप्यन्ते ।

**श्राद्धविमर्शः**

भारतीयसनातनसंस्कृतेः मूलाधाराः वर्तन्ते चत्वारो वेदाः । ते मानवकुलश्रेयसे मार्गदर्शकाः भवन्ति । अपौरुषेयत्त्वाच्च ते परमपवित्रास्सन्ति । अतीन्द्रियविषये वेदाः प्रमाणम् । सम्प्रत्यस्माभिः यदनुभूयते सुखं दुःखं वा तयोः कारणीभूतं विद्यते गतजन्मनः पुण्यं पापं वा । अतः सुखप्राप्तये दुःखनिवृत्तये च मानवैः पुण्यसम्पादनमवश्यमेव कर्तव्यम् इति वेदाः, शास्त्राणि, पुराणानि, इतिहासाश्चोपदिशन्त्यस्मान् । पुण्यसम्पादनायानेके मार्गाः अनेकविधकर्तव्यकर्माणि तैरुपदिष्टानि सन्ति । तानि चावश्यकर्तव्यानि कर्माणि मुख्यतया त्रिधा विभक्तानि । नित्यकर्माणि, नैमित्तिककर्माणि, काम्यकर्माणि चेति । नित्यकर्मणः, नैमित्तिककर्मणश्च पापपरिहार एव फलम् । विहिते देशे विहिते कालेऽवश्यं कर्तव्यं कर्म नित्यकर्मेत्युच्यते । तद्यदि न क्रियते तर्हि पापाय । नित्यकर्माणि यथा संध्योपासनम्, अग्निकार्यम्, अग्निहोत्रादीनि, तथैवाधिकारिभ्यः श्राद्धकर्म । नित्यकर्मेत्युक्ते प्रतिदिनं कर्तव्यकर्म इत्येव न किन्तु विहितकाले कर्तव्यमपि कर्म नित्यकर्मेत्युच्यते । तद्यदि न क्रियते तर्हि प्रत्यवायः । एतेषु कर्मसु श्राद्धकर्म अन्यतमं भवति ।

श्राद्धमिति पारिभाषिकं पदम् । “श्रद्धया दीयते यस्मात्” इति व्युत्पत्त्या श्रौतस्मार्तादीनि सर्वाण्यपि कर्माणि श्रद्धयैव क्रियन्ते चेदपि दानादिसर्वं कर्म श्राद्धमिति न व्यवह्रियते । श्रद्धा इति सर्वश्रौतस्मार्तादिवैदिककर्मसु अवश्यं भवेदेव अतः श्रद्धा श्रौतस्मार्तादिकर्मणः अङ्गं भवति । धर्मशास्त्रे तु श्राद्धसामन्यलक्षणं तु इत्थं प्रतिपादितं वर्तते यत् “पित्रादीन् मृतान् उद्दिश्य विहिते काले देशे पक्वान्नामान्नहिरण्यान्यतमद्रव्यस्य विधिना दानं श्राद्धमिति” । श्राद्धे प्रधानतया त्रयः विभागास्सन्ति यथा १.

अग्नौकरणम्, २. पिण्डप्रदानम्, ३. ब्राह्मणभोजनमिति । प्रदर्शितश्राद्धत्रयमपि कर्तुमसमर्थश्चेदपि अधिकारी शास्त्रोक्तरीत्या केवलब्राह्मणभोजनं वा कुर्याच्चेदपि श्राद्धमेव भवति तत् । तथा हि उक्तं शास्त्रकारैः

**होमश्च पिण्डदानञ्च तथा ब्राह्मणभोजनम् ।**

**श्राद्धशब्दाभिधेयं स्यात् एकस्मिन्नौपचारिकम्** ॥ इति ॥ (धर्मसिन्धुः)

श्राद्धं प्रधानतया चतुर्धा विभक्तम् । १. पार्वणश्राद्धम्, २. एकोद्दिष्टश्राद्धम्, ३. नान्दीश्राद्धम्, ४. सपिण्डीकरणश्राद्धमिति ।

१.१ **पार्वणश्राद्धम् –**

"पित्रादित्रयोद्देशेन विहितं पिण्डत्रययुतं पार्वणम्", अर्थात् पिता, पितामहः, प्रपितामहः अथवा माता, पितामही, प्रपितामही इत्येतान् त्रीन् उद्दिश्य पिण्डप्रदानं यत्र क्रियते तत्पार्वणश्राद्धमित्युच्यते । सपिण्डीकरणानन्तरं मासिकश्राद्धम् एवं प्रतिवर्षं मृततिथौ क्रियमाणं सांवत्सरिकश्राद्धमपि पार्वणश्राद्धविधावेव अन्तर्भवति ।

१.२ **एकोद्दिष्टश्राद्धम् –**

"एकोद्देशेन क्रियमाणम् एकपिण्डयुतं श्राद्धम् एकोद्दिष्टश्राद्धमिति", अर्थात् केवलमृतजीवम् उद्दिश्य एकमेव पिण्डप्रदानं यत्र क्रियते तदेकोद्दिष्टश्राद्धमित्युच्यते । मृततिथिमारभ्य एकादशदिनपर्यन्तं क्रियमाणं श्राद्धम् अर्थात् सपिण्डीकरणात् प्राक् क्रियमाणं मासिकश्राद्धम् एकोद्दिष्टश्राद्धम् ।

१.३ **नान्दीश्राद्धम् –**

"पुत्रजन्मविवाहादौ क्रियमाणं वृद्धिश्राद्धं नान्दीश्राद्धमिति" अर्थात्, पुत्रजन्मनि, उपनयनविवाहादौ क्रियमाणं श्राद्धं नान्दीश्राद्धम् । एतत् पुत्रजन्मादिमङ्गलकार्यारम्भे पितृगणमुद्दिश्य तेषामाशीर्वादप्राप्त्यर्थं क्रियमाणपूजादिविधिरेव नान्दीश्राद्धम् । नान्दीसमाराधानं इति नान्दीश्राद्धस्यापरन्नाम ।

१.४ **सपिण्डीकरणश्राद्धम् –**

"मृतस्य द्वादशाहादिकाले पिण्डार्घ्यासंयोजनादिरूपं सपिण्डीकरणम्", अर्थात् मृतं पितृगणे विधिवत्संयोजनमेव सपिण्डीकरणमित्युच्यते । मृतदिनात् द्वादशदिने, सार्धैकमासि, अष्टममासि, दशममासि वर्षान्ते वा सपिण्डीकरणश्राद्धं कर्तुं शक्यते इति अनेके कालाः निर्दिष्टाः सन्ति ।

पुत्रादिभिः मातापितृमृततिथौ तावुद्दिश्य क्रियमाणं श्राद्धं पुत्राणां नित्यं कर्म । यदि नित्यं कर्म न क्रियते तर्हि प्रत्यवायः । अतः श्राद्धाधिकारिभिः स्वपित्रादिकर्म स्वशक्त्यनुसारं कर्तव्यमेव । ये मातृपित्रादयः मृताः तान् उद्दिश्य श्राद्धं कर्म कर्तव्यमिति श्रद्धया श्राद्धं क्रियते पुत्रादिभिः । श्राद्धसमये अधिकारिभिः यद्दीयते पितृन् उद्दिश्य पिण्डतिलोदकादि तत्सर्वं किं पितरः स्वीकुर्वन्ति, यतो हि मरणानन्तरं ते स्वपूर्वशरीरं त्यक्त्वा अर्जितपुण्यपापाद्यनुगुणं पितृलोके वसेयुः, अथवा पशुपक्षिमनुष्यदेवादिशरीरं वा प्राप्नुयुः अतः श्राद्धकरणेन किं प्रयोजनम् इति चेत् स्मृतिपुराणेतिहासादिषु श्राद्धस्य उद्देशफलादिनिरूपणावसरे प्रसङ्गात् उक्तं यत् अधिकारिभिः पितृन् उद्दिश्य श्राद्धकाले नामगोत्रमन्त्रादि यदुच्चार्य हविःपिण्डजलतिलादिदानं कृतं तान्यवश्यमेव तत्तत्पितरः स्वीकुर्वन्त्येव इति । तत्कथमिति चेत् पित्रादयः देवतास्वरूपं प्रापुः यदि, तर्हि तत् पुत्रदत्तं पिण्डान्नजलादि अमृतस्वरूपेण पितृन् प्राप्नोति । यदि पशुरूपशरीरं प्राप्तवन्तः स्युः तत्तृणरूपेण पितृन् प्राप्नोति, यदि सर्पशरीरं

प्राप्तवन्तः तर्हि वायुरूपेण, यदि राक्षसादिशरीरं तदा मांसरूपेण, यदि मनुष्यशरीरं तर्हि अन्नादिरूपेण ते स्वीकुर्वन्ति । श्राद्धदिनं यदि सन्निहितं तर्हि मनोवेगेन पितरः आगत्य वायुरूपेणोपस्थाय आवाहितब्राह्मणैस्सह भोजनं कुर्वन्ति । तथा चोक्तम्

**तस्य ते पितरश्श्रुत्त्वा श्राद्धकालमुपस्थितम् ।**

**अन्योऽन्यं मनसा ध्यात्त्वा संपतन्ति मनोजवाः ।**

**तैः ब्राह्मणैः सहाश्नन्ति पितरो वायुरूपिणः ॥ इति ॥**(धर्मसिन्धुः)

श्राद्धार्थं यदि ब्राह्मणाः न लब्धाः तदा दर्भेषु ब्राह्मणम् आमन्त्र्य पिण्डं दद्यात् । श्राद्धोपयुक्तपदार्थाः न लब्धाश्चेत् पक्वान्नेन पितृसूक्तद्वारा होमं कुर्यात् । पुनः इतोऽप्यशक्तश्चेत् श्राद्धदिने त्यक्ताहारः भूत्वा ब्राह्मणेभ्यः किञ्चिद्धिरण्यं, धान्यं, तिलमथवा जलपात्रं दद्यात् । तत्राप्यशक्तश्चेत् गोभ्यः आहाररूपेण तृणं दद्यात् । तृणमप्यलब्धं यदि एकमुष्टितृणं राशीकृत्य भस्मसात् कुर्यात् । अथवा संकल्पादिकं कृत्त्वा सम्पूर्णश्राद्धप्रयोगं पठेदधिकारी । सर्वाभावे अरण्यं गत्त्वा हस्तद्वयम् उपरि उत्थाप्य

**न मेऽस्ति वित्तं न धनं न च अन्यत् ।**

**श्राद्धोपयोगी स्वपितृन् नतोऽस्मि ॥**

**तृप्यन्तु भक्त्या पितरो मयैतौ ।**

**भुजौ कृतौ वर्त्मनि मारुतस्य ॥** (निर्णयसिन्धुः-द्वितीयपरिच्छेदः)

एतच्श्लोकं पठित्त्वा अन्तःकरणपूर्वकं पितृन् स्मृत्त्वा रोदनश्राद्धमाचरेत् । एतत्सर्वमापत्पक्षे एव । एवञ्चेत्थं श्राद्धकर्म न कदापि त्यजेत् अधिकारी ।

मनुष्यलोके यच्चान्द्रमानमेकं वर्षं तत् पितृणाम् एकं दिनम् । अतः इह वार्षिकं श्राद्धं कृत्त्वा पितृभ्यः आहारं यदि समर्पयति तर्हि पितृलोके एकं दिनं पितृभ्यः आहारः दत्तः भवति । अधिकारी मृतपित्रोः श्राद्धं यथा मृततिथौ करोति तद्वत् वर्षे षण्णवतिकृत्त्वः नित्यकर्मरूपेण श्राद्धमाचरेत् । तानि १२ संक्रान्तिश्राद्धानि, १२ अमावास्याश्राद्धानि, १६ महालयश्राद्धानि, १४ मन्वन्तरश्राद्धानि, १२ अष्टकाश्राद्धानि, ४ युगादिश्राद्धानि, १३ व्यतीपातश्राद्धानि, १३ वैधृतिश्राद्धानि आहत्य षण्णवतिश्राद्धानि सन्ति । एतेषु सामान्यतया श्राद्धप्रतिनिधिरूपेण तिलतर्पणं वा कर्तव्यमिति शिष्टसम्प्रदायः । श्राद्धाचरणं न केवलं पुत्रादीनां कर्तव्यमेव, अपि तु पुत्राः भूत्त्वा पित्रोः सेवापि । पितृऋणात् मुक्तो भवितुमपि श्राद्धाचरणम् एकमङ्गम् । श्राद्धदिने पितरः वायुशरीरिणः भूत्त्वा गृहमागच्छन्ति । यदि पुत्रैः श्राद्धाचरणं न क्रियते तर्हि शापं दत्त्वा निर्गच्छन्ति । अतः अधिकारी श्राद्धं समाचर्य पितृन् सन्तोषयेत् । तदुक्तम्

**श्राद्धाभावे स्वभवनं शापं दत्त्वा व्रजन्ति ते ।**

**अतो मूलैः फलैर्वापि तथाप्युदकतर्पणैः ।**

**पितृतृप्तिं प्रकुर्वीत नैव श्राद्धं विवर्जयेत् ॥** इति ॥

(निर्णयसिन्धुः-द्वितीयपरिच्छेदः)

सर्वे जन्तवः सुखापेक्षिणः । सुखप्राप्तये मनुष्यप्रयत्नेन सह दैवानुग्रहोऽपि आवश्यकः । विना दैवानुग्रहं पुरुषप्रयत्नः अफलो भवति । देवतार्चनकर्मभिः दैवानुग्रहः अत्यावश्यकः इति वेद एव वदति, तथा हि "देवा अवन्तु शोभायै पितरोऽनुमदन्तु" इति ।

**१.५ श्राद्धविधयः -**

1. आचमनम्
2. पवित्रधारणम्
3. पुनराचमनम्
4. यवोदकम् / तिलोदकम्
5. दर्भेण ब्राह्मणानाम् आमन्त्रणम्
6. आहूतब्राह्मणानां पादप्रक्षालनम्
7. ब्राह्मणेभ्यः आसनदानम्
8. अर्घ्यदानम्
9. ब्राह्मणान्तर्यामिपितृपूजा
10. आवाहनम्
11. पाणिहोमः
12. ब्राह्मणभोजनम् – पत्रे भक्ष्यभोज्यादिकं संस्थाप्य अन्नसूक्तं पठित्वा गायत्र्या अन्नप्रोक्षणम् । ब्राह्मणानां भोजनसमये कर्ता कठोपनिषत्, श्रीसूक्तपारायणम्, पद्मपुराणान्तर्गतौर्ध्वदैहिकश्रीरामस्तोत्रपारायणम्, मार्कण्डेयपुराणान्तर्गतं रुचिकृत-पितृस्तवम् इत्यादि पठेत् ।

13. पिण्डप्रधानम् -

ब्राह्मणानां भोजनानन्तरं कर्ता पितृन् उद्दिश्य पिण्डप्रदानं कुर्यात् । मासिकवार्षिकश्राद्धेषु पिण्डाकारः नारिकेलफलं यावत् तावत् । तीर्थदर्शश्राद्धेषु बिल्वफलपरिमाणकं पिण्डम्, महालयगयाश्राद्धेषु आमलकपरिमाणकम्

14. पिण्डपूजा –

14. पिण्डविसर्जनं काकाय / गोभ्यः

14. ब्राह्मणानां विसर्जनम्

14. ब्राह्मणाशीर्वादः

14. बान्धवैः सह यजमानभोजनम्

श्राद्धकर्मणि सद्यः समाहृताः प्रशस्ताः कुशाः अपेक्षिताः । पितृणां यानि कानिचित् कार्याणि तर्पणादीनि तानि द्विगुणैः दर्भैः, सप्तपत्रैः विशेषतः स्युः । सपिण्डीकरणं त्रधुदर्भैः कार्यम् । सपिण्डीकरणादूर्ध्वं दर्भसंख्या द्विगुणैः वर्धिता स्यात् ।

**शंखस्मृतौ दर्भविषये एवम् उक्तम् – तथा हि**

**अनन्तगर्भिणं साग्रं कौशं द्विदलमेव च ।**

**त्रदेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ 8|3|11**

**अन्यानि च पवित्राणि कुशादूर्ध्वात्मकानि च ।**

**हेमात्मकपवित्रस्य ह्येकां नार्दृति वैकल्याम् ॥ इति ॥**8|3|12

मत्स्यपुराणे -

**मध्याह्नः खङ्गपात्रं च तथा नेपालकम्बलः ।**

**रौप्यं दर्भास्तिला गावः दौहित्रं चाष्टमः स्मृतः ॥**

**पापं कुत्सितमित्याहुः तस्य सन्तापकारिणः ।**

**अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः ॥ इति ॥**

67|12१, १२२

स्कन्दपुराणे -

**अपत्यं दुहितुश्चैव खड्गपात्रं तथैव च ।**

**घृतं च कपिलायाः गोदौहित्रमिति कीर्तितम् ॥ इति ॥**

21|13

ब्रह्माण्डे -

**अमावास्यां गते सोमे यातु खादति गौस्तृणाम् ।**

**तस्याः गोर्यद्भवेत् क्षीरं तद्दौहित्रमुदाहृतम् ॥ इति ॥** 26|18

उच्छिष्टम्, शिवनिर्माल्यम्, वमनम्, मृतकर्पटम्, दौहित्रः, कुतपः, तिलाः इति श्राद्धे सप्त पवित्राणि इति स्मृतिसंङ्ग्रहे उक्तम् ।

**१.६ श्राद्धदेशे वर्ज्याः पदार्थाः –**

पादुकोपानहौ, छत्रम्, चित्रम्, रक्तांबरम्, रक्तपुष्पम्, मार्जारः, घण्टानिनादः, हयसन्निधानम्, शम्बूकशङ्खौ, कदलीदलम्, उन्मत्तजात्यर्कारिजानि श्राद्धदेशे वर्ज्यानि भवन्ति । गृह्याग्निशिशुदेवानां ब्रह्मचारितपस्विनां कृते पिण्डदानात् प्राक् भक्ष्यम्, भोज्यं वा न किञ्चित् दातव्यम् । तदुक्तं पराशरस्मृतौ

**गृह्याग्निशिशुदेवानां ब्रह्मचारितपस्विनाम् ।**

**तावन्न दीयते किञ्चित् यावत्पिण्डान्न निर्वपेत् ॥इति ॥** १३- ४८

**१.७ श्राद्धे गुणान्विताः पाककर्तारः –**

श्राद्धकर्मणि समानप्रवरः, मित्राणि, सपिण्डानि, कृतोपकारिणः गुणान्विताः पाकं कुर्वन्ति चेत् पाकः प्रशस्तो भवति । तदुक्तम् स्कन्दपुराणे –

**समानप्रवरैर्मित्रैस्सपिण्डैश्च गुणान्वितैः ।**

**कृतोपकारिभिश्चैव पाककार्यं प्रशस्यते ॥ इति ॥**१२१ - ४८

अपि च

**गृहिणी चैव सुस्नाता पाकं कुर्यात्प्रयत्नतः ।**

**निष्पन्नेषु च पाकेषु पुनः स्नानं समाचरेत् ॥ इति ॥** १२१ - ५३

स्नाता, रजस्वला, वन्ध्या, विधवा, अन्यगोत्रजा, मातृपितृवंशजभिन्ना श्राद्धकर्मणि पाकं न कुर्यात् । तदुक्तं स्कन्दे –

**स्नातां रजस्वलां वन्ध्यां विधवां चान्यगोत्रजाम् ।**

**वर्जयेत्श्राद्धपाकार्थममातृपितृवंशजाम् ॥ इति ॥** १२१ - ५१

पैत्रकमन्नम् अयोमयस्थालीषु कदापि न पचनीयम् । अयसः दर्शनादेव पितरः गृहं त्यक्त्वा निर्गच्छन्ति । किन्तु ताम्रमयेषु भाण्डेषु भक्त्या पचेत् । एवं पचति चेत् यजमानं पितरः घोरात् पितृदुःखमहार्णवात् समुद्धरन्ति । तदुक्तं स्कन्दपुराणे –

**न कदाचित्पचेदन्नमयस्थालीषु पैतृकम् ।**

**अयसो दर्शनादेव पितरो विद्रवन्ति हि ॥ इति ॥१२१ - ६३**

**पचमानस्तु भाण्डेषु भक्त्या ताम्रमयेषु च ।**

**समुद्धरति वै घोरात्पितृदुःखमहार्णवात् ॥ इति ॥१२१ - ६४**

**तैजसानामभावेषु पिठरे मृन्मयेऽपि च ।**

**नवे शुचौ प्रकुर्वीत पाकं पित्रर्थमादरात् ॥ इति ॥१२१ - ६५**

यमस्मृतौ तावत् –

**विवाहे प्रेतकार्ये च मातापित्रोः क्षयेऽहनि ।**

**नवभाण्डानि कुर्वीत यज्ञकालं विशेषतः ॥ 6/18**

**प्रातर्होमं तु निर्वर्त्य समुद्धृत्य हुताशनम् ।**

**शेषं महानसे कृत्वा ततः पाकं समाचरेत् ॥ 6/14**

**पाकान्ते अग्निं समाहृत्य गृह्याग्नौ तु पुनः क्षिपेत् ।**

**ततोऽस्मिन् वैश्वदेवादि कर्म कुर्यादतन्द्रितः ॥ इति ॥ ६ - १५**

उपयुक्तग्रन्थानां सूची

| **क्र. सं.** | **ग्रन्थनाम** | **ग्रन्थकर्ता / सम्पादकः** | **प्रकाशनम्** | **प्रकाशित-वर्षम्** |
|---|---|---|---|---|
| १. | कूर्मपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| २. | गरुडपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| ३. | पद्मपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| ४. | पद्मपुराणम् | महादेव चिमणाजी आपटे पुण्तपत्तनम् | आनन्दाश्रममुद्रणालयः | १८९४ |
| ५. | ब्रह्मपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |

| | | | | |
|---|---|---|---|---|
| ६. | ब्रह्मवैवर्तपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| ७. | ब्रह्माण्डपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| ८. | भविष्यपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| ९. | भागवतपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| १०. | मत्स्यपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| ११. | मनुस्मृतिः | जयन्तकृष्ण हरिकृष्ण देव | भारतीयविद्याभवन मुम्बई | १९७२ |
| १२. | मार्काण्डेयपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| १३. | लिङ्गपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| १४. | वराहपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| १५. | वायुपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| १६. | विष्णुपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |
| १७. | श्रीमद्वाल्मीकिरामायणम् | नारायणाचार्य | भारतदर्षनमुद्रणालयः, बेङ्गलूर | २००० |
| १८. | श्रीमन्महाभारतम्, कन्नड | नारायणाचार्य | भारतदर्षनमुद्रणालयः, बेङ्गलूर | २००२ |
| १८. | स्कान्दपुराणम् | व्यासमहर्षिः | आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम् | १८९४ |

# राष्ट्रियपाठ्यक्रमस्य संरचनायाः (2005) उद्देश्यानि

डा. पि. अरविन्दकुमारसोमदत्तः
सहायकाचार्यः
राजीवगान्धीपरिसरः श्रृंगेरी।

**कुञ्चिकाशब्दाः**

राष्ट्रियएकतायाः विकासः, शिक्षणविधयः, सामाजिकएकता, संस्कृतेः संरक्षणम्, प्रभावशिक्षणम्, मानसिकशारीरिकसमन्वयनम्, मानवीयमूल्यानि।

**शोधसारः**

राष्ट्रियशिक्षानीते 1986 संवत्सरे प्रतिवेदनं समर्पितमासीत्। एतदाधारेण 2005 संवत्सरे विविधप्रक्रयायाः रचनां कृतवन्तः। अस्यां प्रक्रियायां राष्ट्रियएकातायाः विकाससम्पादनविषये विवरणं दत्तम्। एवं संस्कृतेः संरक्षणं कथं सम्पादयेत्। प्रभावशिक्षणस्य उद्देश्यं किम् इति विवरणम् दत्तम्। शिक्षणविधीनाम् उपयोगः कुत्र भवेत्, स्तरः कः इति निर्दारिताः।

प्रत्येकराष्ट्रस्य वैशिष्ट्यार्थं पाठ्यक्रमस्य अवसरः वर्तते। अतः भारते पाठ्यक्रमस्य परिकल्पना जाता। अस्मिन् पाठ्यक्रमे शिक्षायाःव्यवस्था गुणात्मक परिवर्तनम् आनेतुं प्रयासः क्रियते। भारते विभिन्न संस्कृतिः, धर्माः, जातयः साम्प्रदायश्च प्राचीनकालात् सन्ति। अतः राष्ट्रिय पाठ्यक्रमस्य आवश्यकता प्राचीनकालात् अनुभूता वर्तते। एतादृशसन्दर्भे प्रथमवारं प्रयासेन राष्ट्रिय शिक्षानीतौ 1986 संवत्सरे एकं प्रतिवेदनं समर्पितमासीत्। अस्मिन् प्रतिवेदने राष्ट्रियपाठ्यक्रमस्य संरचनायाः आश्यकता महत्वं विशेषरूपेण प्रदर्शितमासीत्। अनन्तरं 1988 परिणामात्मकरूपेण राष्ट्रियपाठ्यक्रमस्य संरचनाप्रस्तुतिं कृतमासीत्। अस्यां संरचनायां विद्यालयस्य पाठ्यक्रमस्य चर्चा विशेषरूपेण जाता आसीत् । 2005 राष्ट्रियपाठ्यक्रमरूपरेखायां 1968, 2000 विद्यमानविषयेषु विचारस्य, विमर्शस्य च आरम्भः जातः।

**उद्देश्यानि –**

**१) राष्ट्रिय एकतायाः विकासः**

राष्ट्रियपाठ्यक्रम 2005 संरचनायां देशस्य एकता, अखण्डतायाः च सम्बन्धित विषये अधिकमहत्वं दत्तम् । भारते विभिन्न धर्माः भाषाश्च प्रचलिताः सन्ति। किन्तु, भारतीय परिस्थितिषु राष्ट्रियम् ऐक्यम् आवश्यकम् । अतः पाठ्यक्रमे राष्ट्रिय एकतायाः विषये अधिकमहत्वं दत्तवन्तः ।

**२) स्तरानुकूलशिक्षणविधयः [1]**

राष्ट्रियपाठ्यक्रमे स्तारानुगुणं शिक्षणविधीनां प्रयोगस्य महत्वं दत्तवन्तः। प्राथमिकस्तरे पूर्वप्राथमिकस्तरे सामान्यरूपेण शिक्षणविधीनां प्रयोगः कर्तव्यः। व्याख्यानविधेः, कथनविधेः माध्यमिक स्तरे प्रयोगः कर्तव्यः।

**३) मानसिक-शारीरिकविकासस्य समन्वयनम्**

[1] पाठ्यक्रम विकास एवं अनुदेशन, Page No. 162

छात्रस्य शारीरिक- मानसिकविकासः इति पक्षद्वयं वर्तते। अस्मिन् पठ्यक्रमे शारीरिक मानसिक दृष्ट्या विकासार्थम् अनुकूलत्वं दत्तवन्तः।

**४) सामाजिकस्य एकता**[1]

प्रत्येकं व्यक्तिः स्वस्य अधिकारः, कर्तव्यः स्वास्थ्यसामाजिकपरम्परायाः च पालनं संरक्षणंच करोति। तदा सामाजिकस्य एकतायाः विकासः वर्धते। पाठ्यक्रममाध्यमेन दुष्परिणामस्य ज्ञानं प्राप्य समाजस्य कृते एकरूपतां दर्शयति स्थापयति च।

**५) राष्ट्रियविकासः**

शैक्षिरूपेण पाठ्यक्रमः एकता नासीदिति कारणतः राष्ट्रियविकासे प्रमुखाः बाधाः दरीदृश्यन्ते। पाठ्यक्रमे, शिक्षाव्यवस्थायां च एकरूपता भवति चेत् राष्ट्रिय विकासः वर्धते।

**६) संस्कृतेः संरक्षणम्**

सम्पूर्णविश्वे भारतीयसंस्कृतिः एका आदर्शसंस्कृतिः दृश्यते। तस्याः संस्कृतेः संरक्षणं राष्ट्रियपाठ्यक्रमस्य (2005) प्रमुखं उद्देश्यं वर्तते। भारतीयसंस्कृतौ नैतिक, मानवीय मूल्यानि बहूनि सन्ति। एतानि सर्वाणि पाठ्यक्रमे विद्यमानविषयेण सिध्यति। प्रत्येकं स्तरे एतादृशपाठ्यक्रममाध्यमेन भारतीय संस्कृतेः मनवीय, नैतिकमूल्यानि संरक्षणम् एवं विकासः च कर्तव्यः।

**७) प्रभावशिक्षकणस्य उद्देश्यम्**

राष्ट्रियपाठ्यक्रमे(2005) शिक्षकाणां शिक्षणप्रक्रियायाम् उपलब्धयः मानवीय, भौतिकसंसाधनानि पूर्णरूपेण विचारः कृतः । तदा राष्ट्रियपाठ्यक्रमस्य रूपरेखां प्रास्तौत्, अतः जायते प्रभावशिक्षणस्य अन्यतमम् उद्देश्यम् ।

**८) छात्राणां अध्ययनं प्रति रुचेः विकासः**

स्तरानुकूलपाठयक्रमाधारेण छात्राणां पाठ्यक्रमे रुचिः वर्धते । छात्रः अध्ययनं कृत्वा रुचिं सम्पादयति प्रत्येक स्तारे छात्राणां रुचेः, क्षमतायाः च उपरि ध्यानं दत्त्वा पाठ्यक्रमस्य स्वरूपं निश्चितं कृतवन्तः।

**९) मानवीयमूल्यानां विकासः**

2005 पाठ्यक्रमस्य संरचनाया प्रमुखं उद्देश्यम् एतत्। प्रत्येकछात्रस्य प्रेम, सहयोगः, दानम्, परोपकारः, सहिष्णुता च इत्यादि मानवीय गुणानां विकासः कर्तव्यः।

**१०) अभिभावकानां आकाङ्क्षायाः पूर्तिः**

अभिभावकाः छात्रं विद्यालयं प्रति प्रेषणानन्तरं काश्चन अपेक्षाः पूर्तिनिमित्तं विद्यालयव्यवस्था, विद्यालयपाठ्यक्रम् वा अधारितः भवति। अभिभावकानां आकाङ्क्षाः पूर्तेः उपरि ध्यानं दत्त्वा पाठ्यक्रमस्य(2005) निर्माणं कृतवन्तः।

**<u>सन्दर्भग्रन्थाः</u>**

1. पाठ्यक्रम अनुदेशन एवं मूल्याङ्कन, R. Lal Book Depot Merut.
2. Curriculum and School Management , R. Lal Book Depot Merut 2011.
3. पाठ्यचर्या विकास एवं विद्यालयः, Rakhi Prakashan Private limited, Agra.

[1] पाठ्यक्रम और विद्यालय प्रबन्ध page no.46

# संहितास्कन्धस्य उपादेयता

(महत्त्वम्, तत्रोक्तपदार्थानां प्राधान्यम्, लोकोपकारकत्वम्, सार्वकालिकता च)

**डा. रमानन्द भट्टः एन्**

सहायकाचार्यः (संविदा)

केन्द्रीयसंस्कृतविश्वविद्यालयः, राजीवगान्धीपरिसरः, शृङ्गेरी

**Keywords**

स्फुटगणितम्, राहुः, कालपुरुषः, वेलाहीम्, अतिवेलम्, ग्रहणम्, संहिता ।

**Abstract**

संहितास्कन्धस्य प्राधान्यं तत्रोक्तविचाराणां वर्तमानेऽपि अनुभवः कथं भवतीत्यनेन निरूपितम् । कृत्स्ने संहितास्कन्धे प्रतिपादितानां विचाराणां महत्त्वं किम्?, सार्वकालिकता का ?, कथं वर्तमानेऽपि समन्वयः इत्याद्यंशाः प्रतिपादिताः ।

**Article**

अथ च कृत्स्नस्य ज्योतिश्शास्त्रस्य कथनं यत्र वर्तते तदङ्गं संहितेत्युच्यते । तस्मिन् अङ्गे प्रतिपाद्यत्वेन समुदायस्य पुष्टिक्षयादिकारणरूपाणां दिनकरादिग्रहचार-संस्थान-समागम-ग्रहभक्ति-नक्षत्रकूर्म-परिवेषादिनिरूपणेन सह श्वाश्वागजादिलक्षणम्, वृक्षायुर्वेद-वास्तु-ग्रहगोचरफलनिरूपणम् इत्यनेके विषयाः निरूपिताः । एवं मुनिश्रेष्ठैः नारदादिभिः ग्रथितग्रन्थानामवलोकनेन अस्य अङ्गस्य महत्वम्, वैशिष्ट्यम्, सर्वकालेऽपि उपादेयत्वं च सुस्पष्टं व्यक्तं भवति । तासां मुनिकृतकृतीनाम् अलाभेऽपि मुनिमताश्रिता उपलभ्यमाना मिहिरायमानस्य मिहिरस्य अद्भुतरम्यरचना बृहत्संहिता एव तदध्येतॄणां पूर्वोक्तम् अनुभवं ददाति । अतः तदाश्रित्यैव संहितामहत्वख्यापनाय स्थालीपुलाकन्यायेन केचनांशाः विलिख्यन्ते ।

१. लोके अस्माभिः दृश्यते, बहवो हि जनाः आदेशप्रधानं शास्त्रम् अज्ञात्वैव अन्येन क्रमेण कुहकादिना जनान् प्रति आदेशं कृत्वा लोकवञ्चनमेव स्वीयाम् आजीविकाम् इत्यङ्गीकृत्य लब्धप्रतिष्ठाः विराजन्ते । अथवान्ये केचन ज्योतिषम् अज्ञात्वा अथवा तदैकदेशं ज्ञात्वा ज्योतिश्शास्त्रज्ञत्वं स्वस्मिन् आरोप्य लोकस्य शास्त्रस्य च द्रोहं कुर्वन्ति । अतः एतादृक्षु विश्वासः न कार्यः इति कथयति मिहिरः –

**कुहकावेशपिहितैः कर्णोपश्रुतिहेतुभिः ।**
**कृतादेशो न सर्वत्र प्रष्टव्यो न स दैववित्**[1] **॥**

कुहकेन = इन्द्रजालेन, आवेशेन देवतादिदेहप्रवेशेन, पिहितः प्रच्छन्नशरीरः कुत्रचित् सुषिरे भित्यादिके अभ्यन्तरस्थिततया अव्यक्ततया वाचा सम्भाषते । कर्णोपश्रुतिः = कर्णपिशाचमन्त्रविशेषेण । एतादृशानाम् आदेशः न सार्वकालिकः, स च न दैववित् इति मिहिरस्याभिप्रायः ।

२. प्राचीनैः उत्पातैरपि ग्रहणज्ञानम् उक्तम् । किन्तु ग्रहणं केवलं स्फुटगणितेन ज्ञातुं शक्यते । निमित्तद्वारा न शक्यते । यतः निमित्तानि अन्यस्मिन् कालेऽपि सम्भवन्ति, न केवलं ग्रहणसमये । तदाह –

---

[1] बृहत्संहिता – सांवत्सरसूत्राध्यायः – १५ ।

**न कथञ्चिदपि निमित्तैर्ग्रहणं विज्ञायते ।**

**अन्यस्मिन्नपि काले भवन्त्यथोत्पातरूपाणि[1] ॥**

वेलाहीन-अतिवेलपर्वणी इति ग्रहणविशेषद्वयं सफलम् उक्तं दृश्यते कैश्चित् । यदा ग्रहणकालः गणितद्वारा ज्ञातः तस्मात् कालात् पूर्वमेव गहणं यदि जायते तर्ह्य तद्ग्रहणं वेलाहीनमिति, तं समयम् अतिक्रम्य यदि जायते तर्हि तद्ग्रहणम् अतिवेलमित्युच्यते । किन्तु मिहिराभिप्रायेण एदादृशं ग्रहणं कदापि न सम्भवति । यदि ग्रहणगणितं स्फुटम्, गणकोऽपि स्फुटं गणितं वेत्ति तर्हि तेन गणकेन कृतादेशः कथञ्चिदपि अन्यथा न भवति । तदुक्तम् -

**वेलाहीने पर्वणि गर्भविपत्तिश्च शस्त्रकोपश्च ।**

**अतिवेले कुसुमफलक्षयो भयं सस्यनाशश्च[2] ॥**

**हीनातिरिक्तकाले फलमुक्तं पूर्वशास्त्रदृष्टत्वात् ।**

**स्फुटगणितविदः कालः कथञ्चिदपि नान्यथा भवति[3] ।**

एवं ग्रहणविषयसंशयाः अपि संहिताद्वारा छिन्नाः ।

३. गृहनिर्माणभूमौ शस्ताः ओषधयः सन्ति चेत्, भूमिः मधुरा सुगन्धा स्निग्धा समा असुषिरा च चेत् तत्र वासः अत्यन्तं प्रशस्तः । यथा मार्गे श्रान्तानाम् एतादृशस्थले किञ्चिन्निवासेनापि श्रमनिवारणं भवति, तथैव शाश्वतमन्दिरे तत्र वसताम् अवश्यं श्रीर्लभत एव । तदत्यन्तं मनोहररूपेण कथयति –

**शस्तौषधिद्रुमलता मधुरा सुगन्धा**

**स्निग्धा समा न सुषिरा च मही नराणाम् ।**

**अप्यध्वनि श्रमविनोदमुपागतानां**

**धत्ते श्रियं किमुत शाश्वतमन्दिरेषु[4] ॥**

४. वर्तमाने काले देवतायतननिर्माणावसरे वृक्षादिनाशः प्रकृतिनाशश्च लोके संदृश्यते । किन्तु तदकार्यम् इति वराहः अस्मान् जागरयति । अदृष्टरूपं फलं मार्गाभ्यां प्राप्यते इष्टेन अपूर्तेन च । किन्तु एकेन कर्मणा एकमेव फलं लभ्यते । अर्थात् यज्ञादिना इष्टरूपं फलम्, जलाशयादिनिर्माणेन अपूर्तरुपं फलम् । एतद्द्व्यमपि देवतायतननिर्मानेन लभ्यते । यतः देवालयनिर्माणे तदङ्गत्वेन जलाशयोद्यानादिनिर्माणम् अवश्यं कार्यम् । अनेन उभयमपि फलं प्राप्यते । तादृशस्थले एव देवताः वसन्ति । अतः सलिलाद्युक्तस्थले अथवा सलिलोद्यानादिकं कृत्वैव देवालयः कर्तव्यः । तदाह -

**इष्टापूर्तेन लभ्यन्ते ये लोकास्तान् बुभूषता ।**

**देवानामालयः कार्यो द्वयमप्यत्र दृश्यते[5] ॥**

**सलिलोद्यानयुक्तेषु कृतेष्वकृतकेषु च ।**

---

[1] बृहत्संहिता – राहुचाराध्यायः – १६ ।

[2] बृहत्संहिता – राहुचाराध्यायः – २४ ।

[3] बृहत्संहिता – राहुचाराध्यायः – २५ ।

[4] बृहत्संहिता – वास्तुविद्याध्यायः – ८६ ।

[5] बृहत्संहिता – प्रासादलक्षणाध्यायः – २ ।

**स्थानेष्वेतेषु सान्निध्यमुपगच्छन्ति देवताः[1] ॥**

५. वर्तमानकाले स्त्रीणां निन्दा, अवमाननम्, वा स्त्रीरूपगर्भस्य नाशः चेत्यादीनि अन्याय्यकर्माणि वर्धमानानि दृश्यन्ते । ये तथा कुर्वन्ति तेषामशुभमेव इति स्त्रीप्रशसां कुर्वन्नाह मिहिरः -

**जाया वा स्याज्जनित्री वा सम्भवः स्त्रीकृतो नृणाम् ।**
**हे कृतघ्नास्तयोर्निन्दां कुर्वतां वः कुतः शुभम्[2] ॥**

६. ग्रहणे ग्राहकः कः इत्ययं प्रश्नः जनमानसं बहोः कालादेव चिन्तया वा अन्यथाज्ञानेन पीडयन् वर्तते । स्वर्भानुरेव ग्रहणे कारणमिति वेदपुराणादिषु दृश्यते । किन्तु संहितायां मिहिरः वेदपुराणसंहितासु एकवाक्यतां साधयन् चन्द्रभूभयोः कारणत्वं कथयन् शास्त्रस्य परमार्थं कथयति ग्रहणे राहुः अकारणम् इति । तदुक्तम् –

**राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः ॥**
**योऽसावसुरो राहुस्तस्य वरो ब्रह्मणायमाज्ञप्तः ।**
**आप्यायनमुपरागे दत्तहुतांशेन ते भविता ॥**
**तस्मिन् काले सान्निध्यमस्य तेनोपचर्यते राहुः ।**
**याम्योत्तरा शशिगतिर्गणितेऽप्युपचर्यते तेन[3] ॥**

७. आधुनिककाले सम्भाविवृष्ट्यादिकस्यादेशार्थं यथा पवनविज्ञानविभागः (Meteorological Department) वर्तते तथैव प्राचीने काले तादृशघटनानां ज्ञापनार्थं दैवज्ञाः एव नियुक्ताः आसन् । तदर्थं संहितायां गर्भविज्ञानम्, भूकम्पः चेत्यादीनां स्पष्टं निरूपणं वर्तते । तदर्थम् अवहितचित्तेन दैवज्ञेन भाव्यम् इत्यादिशति मिहिरः -

**दैवविदविहितचित्तो द्युनिशं यो गर्भलक्षणे भवति ।**
**तस्य मुनेरिव वाणी न भवति मिथ्याम्बुनिर्देशे ॥**

८. जलाशयनिर्माणं कथं कार्यमिति कथितं संहिताकारेण । जलाशयानां प्रान्तेषु वृक्षादीनाम् आरोपणं कर्तव्यम् इति तत्र उक्तम् । तस्मात् जलं स्थिरं भवति, वर्धते च । तथा मृदपि दृढरूपेण तिष्ठति । वृक्षसद्भावात् वृष्टिरपि विशिष्टा भवति । तथा जलाशयस्य सौन्दर्यमपि वर्धते । अत आह मिहिरः –

**प्रान्तच्छायाविनिर्मुक्ता न मनोज्ञा जलाशयाः ।**
**यस्मादतो जलप्रान्तेष्वारामान् विनिवेशयेत्[4] ॥**

९. राष्ट्ररक्षणम् अपि ज्योतिश्शास्त्रद्वारा भवति । कथितलक्षणवान् नानाचोद्यप्रश्नोपलब्धजनितवाक्सारः निकषसन्तापाभिनिवेशैः कनकस्येव अधिकतरममलीकृतस्य शास्त्रस्य वक्ता तन्त्रज्ञो[5] दैवज्ञः एव राज्यस्य वा

[1] बृहत्संहिता – प्रासादलक्षणाध्यायः – ३ ।
[2] बृहत्संहिता – स्त्रीप्रशंसाध्यायः – ११ ।
[3] बृहत्संहिता – राहुगोचराध्यायः – १३-१५ ।
[4] बृहत्संहिता – वृक्षायुर्वेदाध्यायः – १ ।
[5] बृहत्संहिता – सांवत्सरसूत्राध्याये ।

राष्ट्रस्य याः आपदः सम्भवितारः तासां निराकरणे वा निवारणे वा अल्पहानये कारणं भवति । तेन राष्ट्ररक्षणं भवति । अत आह -

**तस्माद्राज्ञाधिगन्तव्यो विद्वान् सांवत्सराग्रणीः ।**
**जयं यशः श्रियं भोगान् श्रेयश्च समभीप्सता[1] ॥**

राज्यापत्प्रदानि अशुभानि निमित्तानि दैववशात् सम्भवन्ति । तज्ज्ञानार्थं पार्थिवेन दैवज्ञः नियोज्यः । "शुभाशुभानि निमित्तानि सामान्यानि च जगतः प्रतिपुरुषं पार्थिवे च प्रतिक्षणम् अनन्यकर्माभियुक्तेन दैवज्ञेन चिन्तयितव्यानि । न चैकाकिना शक्यते अहर्निशम् अवधारयितुं निमित्तानि । तस्माद् सुभृतेनैव दैवज्ञेन अन्येऽपि तद्विदः चत्वारः कर्तव्याः । तत्रैकेन ऐन्द्री चाग्नेयी च दिगवलोकयितव्या । याम्या नैरृती चान्येनैवं वारुणी वायव्या चोत्तरा चैशानी चेति । यस्मादुल्कापातादीनि शीघ्रमपगच्छन्तीति । तस्याश्चाकारवर्णस्नेहप्रमाणादिग्रहर्क्षोपघातादिभिः फलानि भवन्ति[2]" ॥

अतः उल्कापातादीनां निमित्तानाम् अशुभनिवारणाय दैवज्ञः नियोजितव्यः ।

नक्षत्रकूर्माध्यायेऽपि भारतवर्षं मध्यपूर्वादिभेदेन नवधा विभज्य आग्नेयादिनक्षत्रैः क्रूरग्रहपीडितैः तत्तद्देशनृपालानां प्रजानां च आपदः उक्ताः । तद्वाक्यं च -

**नक्षत्रत्रयवर्गैराग्नेयाद्यैर्व्यवस्थितैर्नवधा ।**
**भारतवर्षे मध्यप्रागादिविभाजिता देशाः[3] ॥**

एवं विभक्तानां देशानाम् आपदो रक्षणार्थे दैवज्ञाः नियोज्याः । तथैव ग्रहभक्त्ययुद्धादिना अपि ग्रहाधिपत्ययुक्तवस्तूनां देशानां च नाशः अभिहितः । तदेवम् –

**अभिहितविपरीतलक्षणे क्षयमुपगच्छति तत्परिग्रहः ।**
**डमरभयगदातुरा जना नरपतयश्च भवन्ति दुःखिताः[4] ॥**

१०. प्रायः अज्ञात्वा वा एकदेशज्ञानेन अल्पज्ञानेन वा ज्योतिषं कथयन्ति ते प्रायः प्रधानरूपेण गोचरफलमाश्रित्य तत्रापि शनेः स्थितिम् आश्रित्य फलानि कथयन् जनान् भीषयन्ति । किन्तु गोचरफले फलनिर्धारणे बहवो हि नियमाः सन्ति । तत्र विशेषरूपेण कथयति वराहः दशायाः शुभत्वे अशुभगोचरफलं न विशेषपरिणामकारि । दशायाः अशुभत्वे शुभगोचरफलमपि नि विशिष्टं परिणामयति । पुनः तत्र पात्रत्वमपि चिन्त्यम् इति । तथा च तद्वाक्यम् –

**अपि कालमपेक्ष्य च पात्रं शुभकृद्विदधात्यनुरूपम् ।**
**न मधौ बहु किं कुडवे वा विसृजत्यपि मेघवितानः[5] ॥**

[1] बृहत्संहिता – सांवत्सरसूत्राध्यायः – १० ।
[2] बृहत्संहिता – सांवत्सरसूत्राध्यायः – संहितापदार्थकथनवेलायाम् ।
[3] बृहत्संहिता – नक्षत्रकूर्माध्यायः – १ ।
[4] बृहत्संहिता – ग्रहभक्तियोगः – ४० ।
[5] बृहत्संहिता – ग्रहगोचराध्यायः – ४६ ।

एवं संहितासु आधुनिककाले विज्ञानत्वेन प्रथिताः दकर्गलाख्यजलान्वेषणक्रमः, वृक्षायुर्वेदः, सस्यलक्षणम्, अङ्गलक्षणम्, रत्नपरीक्षा, वास्तुविद्या, वज्रलेपः इत्यादयः बहवो हि विषयाः स्पष्टतया निरूपिताः । तत्सर्वं तदध्यनेनैव ज्ञेयम् । लुप्तगुरुशिष्यपरम्पराकारणतः तद्बोधनव्यवस्थायाः पूर्वकाले नाशनेन च तज्ज्ञाः न्यूना एव सन्ति । तथापि संहितानां विशेषाध्यनेन तस्य सर्वस्य ज्ञानस्य उपयोगं प्राप्तुं वयं समर्थाः भवेम । इत्यन्ते च मिहिरवचनं स्मरन् लेखनाद्विरमामि -

**अप्यर्णवस्य पुरुषः प्रतरन् कदाचि**
**दासादयेदनिलवेगवशेन पारम् ।**
**न त्वस्य कालपुरुषाख्यमहार्णवस्य**
**गच्छेत्कदाचिदनृषिः मनसापि पारम्[1] ॥**

## Bibliography


1. बृहत्संहिता – आचार्यवराहमिहिरकृता, भट्टोत्पलविवृतिसहिता, डा. कृष्णचन्द्रद्विवेदी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी – १९९७ ।
2. बृहत्संहिता – आचार्यवराहमिहिरकृता, आङ्लभाषान्तरम्, वि, सुब्रह्मण्यशास्त्री, बेङ्गलूरु – १९४६ ।
3. बृहत्संहिता – आचार्यवराहमिहिरकृता, आङ्लभाषान्तरम्, एन्, चिदम्बरम् ऐय्यर् – १८८४ ।


[1] बृहत्संहिता – उपनयनाध्यायः – ३ ।

# दार्शनिकग्रन्थेषु शास्त्रान्तरेषु च निबद्धेषु मङ्गलश्लोकेषु काव्यतत्त्वानि

**डा श्रीकरः वि**
सहायकाचार्यः (संविदा), साहित्यविद्याशाखा
केन्द्रीयसंस्कृतविश्वविद्यालयः, राजीवगान्धी परिसरः, श्रृङ्गेरी

**(पारिभाषिकशब्दाः)-**

मङ्गलश्लोकाः,न्यायदर्शनम्,अद्वैतवेदान्तदर्शनम्, व्याकरणशास्त्रम्, मीमांसादर्शनम्, ध्वनिः, अलङ्कारः, रसः,भावध्वनिः,काव्यतत्त्वानि ।

**सारांशः-** शास्त्राणि तावद् समस्तमानवकुलस्य कल्याणाय रचितानि सन्ति । तेषाम् अध्ययनम् अध्यापनं तत्तच्छास्त्रदृष्ट्या एव भवति । तथापि तेषां ग्रन्थेषु निबद्धानि मङ्गलपद्यानि काव्यशास्त्रदृष्ट्या अत्यन्तं वैशिष्ट्यमावहन्ति । तत्र रसगुणालङ्कारवक्रोक्त्यादीनि काव्यतत्त्वानि ग्रन्थप्रणेतुः स्वाभीष्टदेवताविषयकं भावमभिव्यनक्ति । न केवलं तावदेव किन्तु काव्यशास्त्रे ये काव्यविभागा उक्ताः आलङ्कारिकैः, तेषु उत्तमकाव्यस्यैव उदाहरणानि तानि भवन्ति बाहुल्येन । भावध्वनिस्तत्र विराजते । अतः तादृशमङ्गलपद्यानामध्ययनं काव्यलोकस्य एकं महद्योगदानं भवति ।

भारतीयवाङ्मयपरम्परायां तावद् प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं मङ्गलाचरणं सम्प्रदायः । शास्त्रकाराः कवयश्च अमुं शिष्टाचारम् अनुसृतवन्तः । अनिष्टनिवर्तकः इष्टप्रापकः कर्तव्यकर्मविशेषः मङ्गलम् । भारतीयसंस्कृतौ सर्वमपि शुभकार्यं मङ्गलेनैव आरभ्यते । मङ्गलशब्दः कल्याणस्य वाचकः[1] । मगि गत्यर्थक इत्यतो इदित्वान्नुमि मङ्गेरलच् इत्यनेन अलचि, अम् प्रत्ययेन मङ्गलमिति शब्दसिद्धिः । येन आचरणेन अस्माकं कल्याणं जायते, जीवनं सुखमयं भवति, प्रारब्धं कार्यं सुखेन समाप्तिं गच्छति तदेव मङ्गालाचरणमित्युच्यते । शास्त्रकारा अपि ग्रन्थस्य आरम्भे मध्ये अन्ते च मङ्गलमाचरन्ति । तत्र 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इत्येतन्महाभाष्यकारवचनमाधारभूतम् । तेन तैर्विरच्यमाणस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तिः भवति । तस्य ग्रन्थस्य प्रचारः भवति, अध्येतॄणां च कल्याणं जायते । कालान्तरे शिष्या अपि मङ्गलाचरणस्य शिक्षां प्राप्नुवन्ति ।

'समाप्तिकामो मङ्गलमाचरेत्' इत्युक्तिः प्रसिद्धैव वर्तते । अपि च शिष्टाः सर्वे मङ्गलम् आचरन्ति । मङ्गलं विघ्नानां नाशे कारणम् । मङ्गलेन विघ्ने नष्टे समाप्तिस्तु स्वतःसम्भवेत् । अत एव आस्तिकाः सर्वत्र कर्मसु आदौ मङ्गलमाचरन्ति । यदस्मकम् उद्दिष्टे कार्ये विघ्नाः कदाचित् भवेयुः । विघ्नाः उद्दिष्टकार्ये प्रतिबन्धका इति आरब्धस्य कार्यस्य समाप्तिर्न भवेत् । अतः विघ्नानां नाशः आवश्यकः । विघ्नविघाताय मङ्गलमेव कारणमिति कार्यारम्भे मङ्गलाचरणं कुर्वन्ति ।

काव्यतत्त्वानि रसालङ्कारादीनि काव्यस्य जीवातुभूतानि भवन्ति । तानि न केवलं महाकाव्यादिषु एव, किन्तु दार्शनिकग्रन्थेषु अपि निबद्ध्यन्ते मङ्गलश्लोकरूपदेवतास्तुतिव्याजेन । 'स्तुतिप्रिया हि देवताः' इत्युक्तेरनुसारं स्वेष्टदेवतां स्तुवन्तः शास्त्रकाराः मङ्गलश्लोके स्वेषां कवित्वं प्रदर्शितवन्तः । अतः तादृशान् मङ्गलश्लोकान् अहमत्र काव्यशास्त्रीयतत्त्वानामाधारेण व्याख्यातुमिच्छामि ।

---

[1]श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् –अ. को-१-४-२५

**न्यायदर्शने -**

विश्वनाथपञ्चाननविरचितायां कारिकावल्यां मङ्गलपद्यम्

**नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।**
**तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥**[1]

अत्र ग्रन्थकारः श्रीकृष्णं स्तौति । वर्षाकालारम्भे जलपूर्णः नूतनः मेघः यथा अत्यन्तं कृष्णवर्णः सन् शोभते, तादृशीमेव शोभां वहति श्रीकृष्णः । गोपवधूनां दुकूलं चोरितवानिति गोपवधूटीदुकूलचौरः । सम्पूर्णस्य संसारवृक्षस्य मूलकारणमिति संसारमहीरुहस्य बीजम् ।

अत्र प्रयुक्तानि श्रीकृष्णस्य विशेषणानि साभिप्रायाणि वर्तन्ते । मेघो यथा वृष्टिप्रदानेन जनसमूहस्य मोदं जनयति तथा श्रीकृष्णोऽपि । स्वभक्ताभिलाषपूर्त्या स्वभक्तानां मोदं जनयत्वित्यभिप्रायः । गाः पान्तीति गोपाः, गोपानां वधूट्यो गोपवधूट्यः, गोपवधूटीनां दुकूलानि गोपवधूटीदुकूलानि, चोरयति य इति चौरः, गोपवधूटीदुकूलानां चौरः, तस्मै, अथवा गा इन्द्रियाणि पान्तीति गोपा जीवात्मानस्तेषां वधूट्यो दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानि, ता एव दुकूलानि, मोक्षावस्थाऽऽच्छादकत्वात्, तेषां चौरः स्वसहितयावत्तत्त्वविषयकश्रवणमनननिदिध्यासनद्वारा नाशकः, तस्मै । यथा श्रीकृष्णभगवान् गोपवधूटीदुकूलचौर्यं कृतवान् तथा मदीयमिथ्याज्ञानचौर्यमपि करोत्वित्यभिप्रायः ।

संसारः-जन्मस्थितिलयशीलं जगत् , स एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणाय जगज्जन्मादिकर्त्रे-इत्यर्थः। यो हि संसारस्योत्पादकः संरक्षकश्च तस्य मन्मनोरथपूरणे कियानायास इत्यभिप्रायः।केचित्तु-तच्छब्दः सामान्यतः सकलजनप्रसिद्धत्वसूचनायेति वदन्ति । प्रसिद्धाय तस्मै-'तत्पदस्य बुद्धिस्थप्रकारावच्छिन्ने शक्तत्वात् प्रकृते बुद्धिस्थप्रकरो यत् 'इष्टसिद्धिप्रदातृत्वम्' तद्विशिष्टायेत्यर्थः । कृष्णाय कर्षति सदानन्दरूपत्वात् स्वश्रितानां सकलदुःखान्युन्मूलयतीति कृष्णः, तस्मै सदानन्दस्वरूपाय वसुदेवतनुजन्मने-इत्यर्थः । गोपवधूट्यः अत्र जीवात्मानं सूचयन्ति । तेषां ज्ञानाच्छादकम् अज्ञानरूपं वस्त्रं चोरयित्वा ज्ञानं दत्त्वा मुक्तिभाजः करोतीति गोपवधूटीदुकूलचौराय इत्यनेन विशेषणेन श्रीकृष्णस्य भक्तजनदुःखहारित्वं ध्वनितम् ।

**अद्वैतवेदान्तदर्शनम्**

अद्वैतवेदान्तप्रतिपादितरीत्या यद्यपि आत्मपरमात्मनोः भेदो नास्ति, तेन, केन कः स्तोतव्य इति हेतोः मङ्गलाचरणं नावश्यकमेव तथापि वेदान्तिनोऽपि मङ्गलमाचरन्तीत्यनेन मङ्गलाचरणस्य महत्त्वमितोऽपि वर्धते । न केवलमेतावदेव, किन्तु तत्र काव्यशात्रीयविचारा अपि भवन्तीति तदेकमत्र व्याख्यायते मया -

**सर्ववेदान्तसिद्धान्तगोचरं तमगोचरम्।**
**गोविन्दं परमानन्दं सद्गुरुं प्रणतोऽस्म्यहम् ॥**

अयं मङ्गलश्लोकः विवेकचूडामणौ वर्तते । अस्यार्थः भवति समस्तोपनिषदर्थतात्पर्यविषयीभूतं, इन्द्रियैः व्याख्यातुम् अशक्यं, आनन्दस्वरूपं भगवान्तं गुरुञ्च नमस्करोमि इत्यर्थः ।

विवेकचूडामणौ विद्यमाने मङ्गलश्लोके विरोधाभासालङ्कारः दृश्यते । यदि गोविन्दः गोचरश्चेत् अगोचरः कथं भवतीति विरोधः । अस्य परिहारस्तु, सः उपनिषद्भिः ज्ञातुं शक्यते परन्तु बाह्येन्द्रियैः साक्षात्कर्तुं न शक्यते इति ।

---

[1] न्यायसिद्धान्तमुक्तावली १

तथैव उपदेशसाहस्र्याम्-

**चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।**

**यत् सर्वविषयातीतं तस्मै सर्वविदे नमः ।**

अत्र सर्वशब्दस्य पुनरावर्तनेन शब्दालङ्कारः स्पष्टः ।

**पूर्वमीमांसादर्शनम्**

पूर्वमीमांसादर्शनेऽपि दर्शनेऽपि ग्रन्थारम्भे मङ्गलाचरणं कुर्वन्ति एव । तत्र शालिकनाथमिश्रकृते ऋजुविमलायां वर्तमानम् एकम् उदाहरणम् -

**सृष्ट्वाऽज्ञाननिशाध्वंसिनिबन्धमयवासरम् ।**

**उज्जासितजगज्जाड्यं नमस्यामः प्रभाकरम्॥**

बृहत्याः निबन्धरूपवासरेण अज्ञानरूपा या निशा ध्वंस्यते । जगज्जाड्यम्, जगतः जाड्यं, जैमिनिसूत्रविषयकाज्ञानोज्जासिताय अपाकृते प्रभाकराय गुरवे नमस्कारं समर्पयामः । अत्र प्रभाकरपदवाच्यस्य सूर्यस्य प्रभाकरगुरोश्च अभेदोऽभिप्रेतः । तेन रूपकालङ्कारः ।

अपरमुदाहरणम्- न्यायप्रकाशे आपदेवस्य यथा-

**यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् ।**

**प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम् ।**

**अनन्त-गुणसम्पन्नमनन्तभजनप्रियम् ।**

**अनन्तरूपिणं वन्दे गुरुमानन्दरूपिणम् ॥**[1]

अत्र अनन्तशब्दस्य अनुवृत्तिकारणात् शब्दालङ्कारः स्पष्टतया ज्ञायते ।

**व्याकरणशास्त्रम्**

व्याकरणशास्त्रे एकस्य मङ्गलश्लोकस्य काव्यशास्त्रीयव्याख्यानमत्र प्रस्तूयते -

**श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।**

**स्फोटरूपं यतः सर्वं जगदेतद् विवर्तते ॥**[2]

श्रीः शोभा तया सहिता या लक्ष्मीः, तस्या रमणः पतिः तम् । यद्वा श्रीसहितः लक्ष्मीरमणः श्रीलक्ष्मीरमणः तम् अथवा श्रीः सरस्वती, लक्ष्मीः रमा तयोः रमणः श्रीलक्ष्मीरमणः तम् ।गौर्या रमणः पतिः; तस्य रूपं स्वरूपम् अस्यास्तीति गौरीरमणरूपी, तं गौरीरमणरूपिणं नमस्करोमि इत्यर्थः ।

कौण्डभट्टानां मङ्गलश्लोके अत्र शङ्कर-नारायणयोः अभेदः ध्वनितः वर्तते । लोके जनैः तयोः विषये भेदबुद्धिः न कर्तव्या इति भावः प्रतिपादितः दृश्यते । यथा श्रूयते-

**शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ।**

**विष्णुरुद्रान्तरं यच्च यो ब्रूते मूढधीस्तु सः ॥**

---

[1] आपदेव मीमांसान्यायप्रकाशः ।

[2] वैयकरणभूषणसारः

अयमेव भावः पूर्वतनश्लोकेऽपि अभिव्यक्तः विद्यते । जगतः शब्दार्थरूपत्वं विवर्तरूपत्वं च निरूपितं वर्तते।

**अशेषफलदातारं भवाब्धितरणे तरिम् ।**
**शेषाऽशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ॥**[1]

शेषाऽशेषलाभार्थम्-शेषस्य शेषनागस्य महाभाष्यकृतः पतञ्जलेः अशेषाः कृत्स्नाः स्फुटाश्च येऽर्था महाभाष्यस्थास्तेषां लाभार्थं ज्ञानाय शेषभूषणम् अलङ्कारत्वेन पर्यङ्कत्वेन वा भूषणं यस्य तं शिवं शेषशायिनं विष्णुं वा प्रार्थये इत्यर्थः ।

अस्मिन् श्लोके 'शेषभूषणम्' इति पदं श्लिष्टमस्ति । शेषनागो भूषणं यस्याऽसौ इति करणेन शिवरूपार्थः, शेषभूषणस्तम् इति विग्रहं दर्श्यते चेत् विष्णुरूपार्थः भवति । अनेनापि शिवविष्ण्वोः अभेदः अभिव्यञ्जितः वर्तते ।

अशेषार्थलाभाय भाष्यकारः भगवान् पतञ्जलिः खलु प्रार्थनीयः शिवः विष्णुर्वा किमर्थं स्तवनीय इति जिज्ञासायामुच्यते - 'अशेषफलदातारमिति पदेन सर्वेऽपि भगवदधीनाः इति सूचितं वर्तते ।

ग्रन्थकर्ता भगवतः सकाशात् मोक्षस्यापि इच्छां करोति, न तु केवलं ग्रन्थसमाप्तिमेव यतोऽहि ग्रन्थसमाप्तिः मोक्षात् अल्पसुखकरं भवति इति भवाब्धितरणे तरिम्, इति पदेन अवगम्यते । यथा शङ्कराचार्याः प्रश्नोत्तर्यां कथितवन्तः सन्ति ।

**असारसंसारसमुद्रमध्ये सम्मज्जतो मे शरणं किमस्ति ?**
**गुरो! कृपालो कृपया वदैतद् विश्वेशपादाम्बुजदीर्घनौका ॥**

एवमेव सांख्य-योग-जौतिषादिशास्त्रेषु बहवः मङ्गलश्लोकाः काव्यशास्त्रदृष्ट्या महत्त्वपूर्णाः वर्तन्ते ।

**निष्कर्षः-** शास्त्राणाम् अलङ्काशास्त्रदृष्ट्यापि अध्ययनं भवति चेत् अनेके नूतनविषयाः अस्माकं बुद्धौ स्फुरन्ति । येन शास्त्रेषु तलस्पर्शिज्ञानमवप्तुं शक्यते । सर्वाणि शास्त्राणि परस्परं पूरकाणि एव सन्ति । यथा उच्यते 'काणादं पाणीनीयं च सर्वशास्त्रोपकारकम्' । एवं प्रकारेण पश्यामश्चेत् दर्शनेषु तेषां व्याख्यानग्रन्थेषु च बहवः मङ्गलश्लोकाः आलङ्कारिकपद्धत्या न विवेचिताः । शास्त्रकाराः मङ्गलश्लोकलेखनावसरे आलङ्कारिकपक्षेऽपि पर्याप्ततया दृष्ठिपातम् अकार्षुः इति सप्रमाणं साधितमस्ति ।

**(Bibliography) सन्दर्भग्रन्थसूची**


1. काव्यप्रकाशः – श्रीमम्मटभट्टविरचितः, विद्याभवन प्राच्यविद्या ग्रन्थमाला ५९, चौखम्बाविद्याभवनम्, वाराणसी, द्वितीयसंस्करणम् -१९९४
2. काव्यादर्शः – दण्डीविरचितः, शास्त्री श्रीशिवनारायण, परिमलसंस्कृतग्रन्थमाला २७, परिमल पब्लिकेशन्स् दिल्ली
3. गादाधरी, झा ,श्रीकीर्त्यानन्द,श्रीसत्कारिशर्मा,चौखम्बा संस्कृत सीरीज्,वाराणासी द्वितीयसंस्करणम्,१९७०


[1] वैयाकरणभूषणसार

4. बृहती(तर्कपादान्त),प्रभाकर(शालिकनाथमिश्रकृतऋजुविमलाटीकासहिता)सं शे.कृ. शास्त्री, रामनाथ, मद्रपुरीयविशविद्यालयः, १९३४
5. भाट्टरहस्य,खण्डदेवभट्ट,सम्पा शास्त्री,श्रीसुब्रमण्य,मोतिलाल् बनारसीदास् प्रकाशन दिल्ली,१९८०
6. महाभाष्यम् पतञ्जलिः,सम्पा मीमांसकः युधिष्ठिरो,रामलाल् कपूर् ट्रूस्ट्,रेवली,सोनिपत् १९९२
7. मानमेयोदयः ,नारायणभट्ट सं सी झा, कुन्हनररा एवं एस् एस् सूर्यनारायणशास्त्री,अड्यार् लैब्ररी एन्ड् रीसर्च् सेंटर् मद्रास्,१९७५
8. विवेकचूडामणिः आदिशङ्कराचार्यः,सम्पूर्णान्दसंस्कृतविशविद्यालयः,वारणासी,१९९५
9. वैयाकरणभूषणसारः सुबोधिनी सहितः कौण्डभट्ट,सं पं त्रिपाठी, रामप्रसाद चौखम्बा सस्कृतसिरिज् प्र सं १९५२
10. वैय्याकरणसिद्धान्तकौमुदी बालमनोरमा सहिता भट्टोजिदीक्षितः सं वा प्रथमसंस्करणं वासुदेवदीक्षितः,१९६१

# कृत्स्नप्रसक्त्यधिकरणम्

**विद्वान् निरञ्जन भट्टः**
सहायकाचार्यः (संविदा), अद्वैतवेदान्तविद्याशाखा
राजीवगान्धी परिसरः, शृङ्गेरी

**Keywords:**
चेतनं ब्रह्म, जगत्कारणम्, निरवयवं ब्रह्म, प्रधानकारणवादः, ब्रह्मकारणवादः

**Abstract:**

वेदान्तशास्त्रस्य आधारभूते प्रस्थानत्रयान्तर्गते परमर्षिबादरायणप्रणीते सूत्रप्रस्थानत्वेन प्रसिद्धे ब्रह्मसूत्रे द्वितीयाध्यायस्य प्रथमपादे नवमम् अधिकरणमिदं कृत्स्नप्रसक्त्यधिकरणम् । परपक्षिभिः उत्थापितस्मृतिन्यायविरोधपरिहाराय, प्रधानादिवादानां श्रुत्यसम्मतत्वं प्रदर्शयितुं सर्वेषु च वेदान्तेषु सृष्ट्यादिप्रक्रियायाः निर्दोषत्वमित्यादिविषयाणां प्रतिपादनाय अयं द्वितीयोऽध्यायः आरब्धः

अत्राधिकरणे तावत् तथा च "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इति प्रथमसूत्रेण एकम् अद्वितीयं चेतनं ब्रह्म बाह्यसाधनानाम् अपेक्षां विना जगत्कारणमिति स्थिते ब्रह्मणः निरवयवत्वात् कृत्स्नमेव ब्रह्म कार्यरूपेण परणमते इति पूर्वपक्षः प्राप्यते । यथा पृथिव्यादीनां सावयवानाम् एकदेशस्यैव कार्याकारेण परिणामो भवति तद्वत् यदि ब्रह्म सावयवम् अभविष्यत् तर्हि तस्यापि एकदेश एव परिणामः अभविष्यत् । किन्तु श्रुतयस्तु निरवयवमेव ब्रह्म सर्वविशेषप्रतिषेधपूर्वकं प्रतिपादयन्ति – "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्", "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः", "इदं महद्भूतमनन्तमपारं विज्ञानघन एव", "स एष नेति नेत्यात्मा", "अस्थूलमनणु" इत्येवमादिना । तस्मात् निरवयवस्य एकदेशपरिणामः न सम्भवतीत्यतः कृत्स्नपरिणामप्रसक्तिः आपद्यते । तस्मात् निरवयवं चेतनं ब्रह्म जगत्कारणमिति पक्षः न घटते इति पूर्वपक्षः प्राप्तः ।

एवमाक्षेपे प्राप्ते सिद्धान्तयति भगवान् सूत्रकारः "श्रुतेस्तु शब्दमूतत्वात् " इति । सूत्रार्थः तावत् – श्रुतेः कारणात् निरवयवस्यापि ब्रह्मणः कृत्स्नप्रसक्तिः नास्तीति । श्रुतिश्च "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपव्याकरवाणि" इत्यनेन ईक्षणीयव्याकर्तव्यकार्यरूपप्रपञ्चात् ईक्षितृत्वेन व्याकर्तृत्वेन च भिन्नम् ईश्वरसत्त्वं बोधयति । पृथिव्यादिविकारस्य इन्द्रियगोचरत्वात् ब्रह्मणस्तु "न चक्षुषा पश्यति " इत्यादिना च इन्द्रियगोचरत्वप्रतिषेधात् वागाद्यविषयत्वाच्च अविकृतं ब्रह्म विकारव्यतिरिक्तम् अस्तीति ज्ञायते । एतावता कृत्स्नप्रसक्तिदोषः प्रत्याख्यातः । श्रुतिस्तु ब्रह्मणः कृत्स्नप्रसक्तिं विनापि जगत्कारणत्वं निरवयनत्वं च प्रतिपादयति । तस्मात् एवं श्रूयमाणत्वादेव कारणत्वात् सावयवत्वं ब्रह्मणः उपपादयितुम् अशक्यम् । वेदान्तपक्षे तु एते दोषाः श्रुतियुक्तिदृष्टान्तादिभिः परिहृताः इत्यतः दोषसाम्योक्तिः सिद्धान्तपक्षे तु भवितुं नार्हति इति निर्णेतुं शक्यते ।

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टहारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥

वेदान्तशास्त्रस्य आधारभूते प्रस्थानत्रयान्तर्गते परमर्षिबादरायणप्रणीते सूत्रप्रस्थानत्वेन प्रसिद्धे ब्रह्मसूत्रे द्वितीयाध्यायस्य प्रथमपादे नवमम् अधिकरणमिदं कृत्स्नप्रसक्त्यधिकरणम् । परपक्षिभिः

उत्थापितस्मृतिन्यायविरोधपरिहाराय, प्रधानादिवादानां श्रुत्यसम्मतत्वं प्रदर्शयितुं सर्वेषु च वेदान्तेषु सृष्ट्यादिप्रक्रियायाः निर्दोषत्वमित्यादिविषयाणां प्रतिपादनाय अयं द्वितीयोऽध्यायः आरब्धः। तत्र प्रथमपादे तावत् स्मृतियुक्त्याद्यविरोधप्रदर्शनमुखेन प्रधानकारणवादस्य निराकरणं कृत्वा श्रुतिप्रतिपादितचेतनब्रह्मकारणवादः प्रतिपाद्यते । तस्मिन्नेव क्रमे षष्ठे उपसंहाराधिकरणे लोके कुलालादीनां घटादिकार्यनिर्माणे मृद्दण्डाद्यनेककारकाणाम् उपसंहारपूर्वकं कार्यकरणं दृश्यते। किन्तु वेदान्ताभिमतं ब्रह्म साधनान्तरस्य उपसङ्ग्रहं विना असहायमेव कथं स्रष्टृत्वम् उपपद्यते इति पूर्वपक्षयित्वा यथा क्षीरं जलं वा स्वयमेव दधिभावेन हिमभावेन वा परिणमते, यथा च महाप्रभावाः चेतनाः देवादयश्च अनपेक्ष्य बाह्यसाधनम् ऐश्वर्यविशेषयोगाद् अभिध्यानमात्रेण अनेकानि शरीरादीनि कार्याणि सम्पादयन्तीति उपलभ्यते तद्वद् एकम् अद्वितीयं चेतनं ब्रह्मापि अनपेक्ष्य बाह्यसाधनं स्वयमेव प्रपञ्चं सृजति इति सिद्धान्तितम्। पूर्वत्र क्षीरदृष्टान्तेन जगत्कारणत्वं ब्रह्मणः समर्थितम्। तस्माद्धेतोः क्षीरवत् ब्रह्मापि परिणमते इति भ्रमोत्पत्त्या पूर्वपक्षः प्राप्तः। तस्य प्रत्याख्यानेन विवर्तरूपशास्त्रार्थस्य निरूपणार्थमिदमधिकरणम् आरब्धमिति पूर्वाधिकरणेन अस्याधिकरणस्य हेतुहेतुमद्भावसङ्गतिः ।

तथा च "**कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा**[1]" इति प्रथमसूत्रेण एकम् अद्वितीयं चेतनं ब्रह्म बाह्यसाधनानाम् अपेक्षां विना जगत्कारणमिति स्थिते ब्रह्मणः निरवयवत्वात् कृत्स्नमेव ब्रह्म कार्यरूपेण परणमते इति पूर्वपक्षः प्राप्यते। यथा पृथिव्यादीनां सावयवानाम् एकदेशस्यैव कार्याकारेण परिणामो भवति तद्वत् यदि ब्रह्म सावयवम् अभविष्यत् तर्हि तस्यापि एकदेशे एव परिणामः अभविष्यत्। किन्तु श्रुतयस्तु निरवयवमेव ब्रह्म सर्वविशेषप्रतिषेधपूर्वकं प्रतिपादयन्ति – "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्[2]", "दिव्यो ह्यमूर्तः पुरुषःसबाह्याभ्यन्तरो ह्यजः[3]", "इदं महद्भूतमनन्तमपारं विज्ञानघन एव[4]", "स एष नेति नेत्यात्मा[5]", "अस्थूलमनणु[6]" इत्येवमादिना। तस्मात् निरवयवस्य एकदेशपरिणामः न सम्भवतीत्यतः कृत्स्नपरिणामप्रसक्तिः आपद्यते। तथा सति कार्याकारेण परिणतात् व्यतिरिक्तं ब्रह्म न विद्यते इति कार्यस्य तु अप्रयत्नेनैव द्रष्टुं शक्यत्वात् मूलोच्छेदप्रसक्तिः सम्भवति। एवं च ब्रह्मणः 'द्रष्टव्यः' इत्याद्युपदेशस्य आनर्थक्यमेव आपद्यते। किञ्च अस्य दोषस्य परिहाराय यदि ब्रह्मणः सावयवत्वम् अङ्गीक्रियते तदा "अजो नित्यः[7]" इत्यादिनिरवयवबोधकानां शब्दानां विरोधोऽपि सम्भवति । सावयवानां पदार्थानाम् अनित्यत्वाभ्युपगमात् ब्रह्मणोऽपि सावयवस्य अनित्यत्वम् आपद्यते। तस्मात् निरवयवं चेतनं ब्रह्म जगत्कारणमिति पक्षः सर्वथा न घटते इति पूर्वपक्षः प्राप्तः ।

एवमाक्षेपे प्राप्ते सिद्धान्तयति भगवान् सूत्रकारः "**श्रुतेस्तु शब्दमूतत्वात्**[8]" इति । चेतनम् अद्वितीयं निरवयवं ब्रह्म जगत्कारणमित्यत्र सिद्धान्तपक्षे न दोषोऽस्ति इति द्योतयितुं सूत्रे 'तु' इति शब्दः योजितः। सूत्रार्थः

---

[1] ब्रह्मसूत्रम् – २.१.२६

[2] श्वेताश्वतरोपनिषत् – ६.१९

[3] मुण्डकोपनिषत् – २.१.२

[4] बृहदारण्यकोपनिषत् – २.४.१२

[5] बृहदारण्यकोपनिषत् – ३.९.२६

[6] बृहदारण्यकोपनिषत् – ३.८.८

[8] ब्रह्मसूत्रम् – २.१.२७

तावत् वर्ण्यते यथा – श्रुतेः कारणात् निरवयवस्यापि ब्रह्मणः कृत्स्नप्रसक्तिः नास्तीति । श्रुतिश्च "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपव्याकरवाणि[1]" इत्यनेन ईक्षणीयव्याकर्तव्यकार्यरूपप्रपञ्चात् ईक्षितृत्वेन व्याकर्तृत्वेन च भिन्नम् ईश्वरसत्त्वं बोधयति । एवमेव कारणस्य ईश्वरस्य कार्यस्य च प्रपञ्चस्य न्यूनाधिकभावप्रदर्शनमुखेनापि ईश्वरस्य कार्यप्रपञ्चात् पृथक् सत्त्वं प्रदर्शयति श्रुतिः यथा – "तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि[2]" इति । 'पादोऽस्य सर्वा भूतानि' इति अंशांशिभावेनापि उभयोः भेदव्यपदेशः कृतो भवति ।

इतः "स वा एष आत्मा हृदि[3]" इति श्रुत्या ब्रह्मणो हृदयायतनत्ववचनात् कार्यात्मकात् प्रपञ्चात् भेदव्यपदेशो युक्तः । पुनश्च यदि कृत्स्नं ब्रह्म कार्यात्मकतया परिणतं स्यात् तर्हि अविकृतस्य ब्रह्मणः अभावात् विकृतेन च ब्रह्मणा नित्यमेव सम्पत्तिरस्ति इत्यतः "सता सोम्य तदा सम्पन्नो भवति[4]" इत्यत्र तदा इति सुषुप्तिकालस्य विशेषणस्य वैयर्थ्यं स्यात् । अतः सत्सम्पत्तिवचनाच्चेति हेत्वन्तरं प्रदर्शयन्ति भाष्यकाराः उभयोरपि भेदव्यपदेशं समर्थयितुम् । पृथिव्यादिविकारस्य इन्द्रियगोचरत्वात् ब्रह्मणस्तु "न चक्षुषा पश्यति[5]" इत्यादिना च इन्द्रियगोचरत्वप्रतिषेधात् वागाद्यविषयत्वाच्च अविकृतं ब्रह्म विकारव्यतिरिक्तम् अस्तीति ज्ञायते । एतावता कृत्स्नप्रसक्तिदोषः प्रत्याख्यातः ।

पुनरपि इदं च ब्रह्म नेन्द्रियप्रमाणकं भवति, किन्तु शब्दप्रमाणादेव अवगन्तव्यम् । श्रुतिस्तु ब्रह्मणः कृत्स्नप्रसक्तिं विनापि जगत्कारणत्वं निरवयनत्वं च प्रतिपादयति । तस्मात् एवं श्रूयमाणत्वादेव कारणत्वात् सावयवत्वं ब्रह्मणः उपपादयितुम् अशक्यम् । किन्तु निरवयवत्वमेव अभ्युपगन्तव्यं श्रुतिप्रामाण्यादित्यतः निरवयवत्वशब्दकोपरूपस्यापि आक्षेपस्य प्रत्याख्यानं भवति । किञ्च अतीन्द्रियविषयणां स्वरूपाधिगमस्तु शब्दप्रमाणेनैव भवितुमर्हति । मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तादीनां वैचित्र्यात् विरुद्धाः अनेककार्यवत्यः शक्तयः दृश्यन्ते । ताश्च शक्तयोऽपि विषयप्रयोजनोपकरणादिविषयाः उपदेशं विना केवलेन तर्केण ज्ञतुम् अशक्याः । एवं सति अचिन्त्यस्वभावस्य ब्रह्मणः तर्केण अप्रतिपाद्यत्वेन शब्दमात्रप्रतिपाद्यत्वमेव सिद्ध्यति । पौराणिकानामपि वचनमत्र प्रमाणं भवति यथा –

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्[6] ॥

इति ।

पुनरेकः आक्षेपः उद्भाव्यते निरवयवं ब्रह्म परिणमते किन्तु न कृत्स्नमिति शब्दोऽपि विरुद्धमर्थं ज्ञापयितुं न समर्थः । निरवयवं चेद् ब्रह्म नैव परिणमेत । अथवा कृत्स्नमेव परिणमेत । किन्तु केनचिद्रूपेण परणमते

[1] छान्दोग्योपनिषत् – ६.३.२
[2] छान्दोग्योपनिषत् – ३.१२.६
[3] छान्दोग्योपनिषत् – ८.३.३
[4] छान्दोग्योपनिषत् – ६.८.१
[5] कठोपनिषत् – २.३.९
[6] ब्रह्मसूत्रभाष्यम् – २.१.९.२७

केनचिद्रूपेण अवतिष्ठते इति रूपभेदकल्पना कृता इत्यतः सावयवमेव ब्रह्म प्रतिपादितं भवति । क्रियाविषये तु क्रियायाः पुरुषतन्त्रत्वात् विरोधप्रसक्तौ विकल्पाश्रयणं सम्भवति । यथा “अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति” इत्यत्र विकल्पः अश्रीयते । ब्रह्मणि तु वस्तुतन्त्रत्वात् विकल्पाश्रयणमपि न सम्भवतीत्यतः निरवयवस्य कृत्स्नप्रसक्तिं विना जगत्कारणत्वं न सम्भवति इति ।

तत्र समाधानं यथा – अविद्याकल्पितरूपभेदाभ्युपगमात् दोषो नास्ति इति । यथा तिमिरदोषयुक्तनेत्रस्य अनेकचन्द्रदर्शनं भवति इति चन्द्रस्तु न अनेको भवति । तद्वत् अविद्याकल्पितरूपभेदेन ब्रह्म सावयवं न सम्भवति । अविद्याकल्पितः यो रूपभेदः नामरूपात्मकः व्याकृताव्याकृतात्मकः तेन च तत्त्वान्यत्वाभ्यामनिर्वचनीयेन रूपेण परिणामादिसर्वव्यवहारविषयं ब्रह्म भवति । पारमार्थिकेन रूपेण तु सर्वव्यवहारातीतमेव ब्रह्म अवतिष्ठते । अविद्याकल्पितश्च नामरूपभेदः वाचारम्भणश्रुतेः मिथ्यैव इत्यतः ब्रह्मणः निरवयवत्वं न विरुध्यते । अपि च इयं ब्रह्मणः परिणामश्रुतिः परिणामे न तात्पर्यवती, परिणामप्रतिपत्तौ च फलानवगमात् । किन्तु सर्वव्यवहारातीतब्रह्मणः प्रतिपादनेन फलावगमात् सर्वव्यवहारातीतब्रह्मात्मतायामेव तात्पर्यवती भवति । तदुक्तं बृहदारण्यके – “स एष नेति नेत्यात्मा” इत्युपक्रम्य “अभयं वै जनक प्राप्तोऽसि[1]” इति । अतः वेदान्तमते तु निरवयवस्य ब्रह्मणः परिणामपक्षे दोषो नास्ति ।

एकस्मिन् ब्रह्मणि स्वरूपोपमर्दं विना अनेकाकारा सृष्टिः कथं स्यात् इति संशयसम्भवात् तत्र समाधानार्थं सूत्रान्तरम् आरचयत् भगवान् सूत्रकारः **“आत्मनि चैवं विचित्राश्च हि[2]”** इति । पूर्वावस्थानाशानन्तरम् अवस्थान्तरप्राप्तिः परिणामः, यथा क्षीरस्य दधिभावः । पूर्वरूपस्य अनुपमर्देन अवस्थान्तरप्राप्तिः विवर्तः, यथा शुक्तेः रजतभावः । स्वप्नसाक्षिदृष्टान्तेन ब्रह्मणः विवर्तोपादानत्वं द्रढयितुमेव इदं सूत्रम् आरब्धम् । तत्र दृष्टान्तो यथा – “न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते[3]” इति एकस्मिन्नेव आत्मनि स्वप्नसाक्षिणि स्वरूपनाशं विनैव अनेकाकारा सृष्टिः पठ्यते । यथा च लोके देवादीनां मायाव्यादीनां च स्वस्वरूपस्य उपमर्दं विनैव हस्त्यश्वादिसृष्टिः दृश्यते । तथा एकस्मिन्नेव निरवयवे ब्रह्मणि स्वरूपोपमर्दं विनैव अनेकाकारा विचित्रा सृष्टिः भवितुमर्हति।

ये च दोषाः परपक्षिभिः साङ्ख्यादिभिः वेदान्तमतोक्ते ब्रह्मकारणवादे उपक्षिप्ताः ते च दोषाः परपक्षेऽपि प्रधानादिकारणवादे समानाः एव इत्यतः वेदान्तमतस्योपरि तेषां दोषाणां प्रक्षेपः अयुक्तः इत्यभिप्रेत्य भगवता सूत्रकारेण सूत्रमिदम् व्यरचि **“स्वपक्षदोषाच्च[4]”** इति । तदर्थश्च यथा साङ्ख्यमते सावयवस्य परिच्छिन्नस्य शब्दादिमतः जगद्रूपकार्यस्य अवयवरहितम् अपरिच्छिन्नं शब्दादिरहितं प्रधानं कारणमिति परेषां स्वपक्षः । तन्मतेऽपि निरवयवस्य प्रधानस्य कृत्स्नप्रसक्त्यादयः दोषाः समानाः उद्भावयितुं शक्यन्ते । यदि सत्त्वरजस्तमांसि त्रयो गुणाः प्रधानस्य अवयवाः उच्यन्ते तदानीमपि त्रयाणामपि गुणानां प्रत्येकं निरवयवत्वेन एकैकोऽपि गुणः इतरद्वयसहकृतः प्रपञ्चस्योपादानमिति उक्ताः दोषाः न वार्यन्ते । प्रधानस्य कार्यवैचित्र्यानुमिताः तद्गताः शक्तयः

---

[1] बृहदारण्यकोपनिषत् – ४.२.३

[2] ब्रह्मसूत्रम् – २.१.९.२८

[3] बृहदारण्यकोपनिषत् – ४.३.१०

[4] ब्रह्मसूत्रम् – २.१.९.२

एव अवयवाः इत्युच्यते चेत् ब्रह्मकारणवादेऽपि मायाशक्तिभिः ब्रह्म सावयवं भवितुमर्हति इति समानमित्यतः दोषाभावः ।

ये च परमाणुकारणवादिनः वैशेषिकाः तेषां पक्षेऽपि अणोः निरवयवत्वाभ्युपगमात् अण्वन्तरेण संयोगस्य यदि व्यप्यवृत्तित्वं तर्हि तस्य कार्यं द्व्यणुकं परमाणुमात्रमेव अवशिष्यते । ततः द्रव्यं अधिकपरिमाणकं न सम्भवति । यदि अव्याप्यवृत्तित्वं संयोगस्य तर्हि परमाण्वोः सावयवत्वापत्तिरिति साङ्ख्यवत् स्वपक्षे दोषाः समानाः । अतः एते स्वपक्षे समानाः दोषाः परेषु न उपक्षेप्तुम् अयुक्ताः । वेदान्तपक्षे तु एते दोषाः श्रुतियुक्तिदृष्टान्तादिभिः परिहृताः इत्यतः दोषसाम्योक्तिः सिद्धान्तपक्षे तु भवितुं नार्हति इति निर्णेतुं शक्यते ।

**Bibliography:**


१) ब्रह्मसूत्रभाष्यम्:, , मोतीलाल बनारसीदास, वाराणसी

२) मुण्डकोपनिषत्:, उपनिषद्भाष्यम्, दक्षिणामूर्तिमठ प्रकाशनम्, वाराणसी

**३)** बृहदारण्यकोपनिषत्:, उपनिषद्भाष्यम्, दक्षिणामूर्तिमठ प्रकाशनम्, वाराणसी

**४)** छान्दोग्योपनिषत्:, उपनिषद्भाष्यम्, दक्षिणामूर्तिमठ प्रकाशनम्, वाराणसी

**५)** कठोपनिषत्:, उपनिषद्भाष्यम्, दक्षिणामूर्तिमठ प्रकाशनम्, वाराणसी

ISSN : 2249-538X

# स्मार्तकर्मानुष्ठाने पदार्थानुसमयन्यायसञ्चारः

**आदर्श विनायक भट्टः**
सहायकाचार्यः(सं), वेदाङ्ग-वेदभाष्यविद्याशाखा, शृङ्गेरी
राजीवगान्धीपरिसरः, शृङ्गेरी

Keywords-
पदार्थानुसमयः, वाजपेययागः, पशुनियोजनम्, मीमांसा, जैमिनिसूत्रस्य अध्वरमीमांसाकुतूहलवृत्तिदिशार्थविवरणम्, ब्राह्मणसुवासिनीपूजा ।

Abstract सारांशः -
पूर्वमीमांसाशास्त्रस्य परमं प्रयोजनमेव धर्मानुष्ठानोपयागी चिन्तनम् । शास्त्रे तावत् प्रत्येकस्मिन्नप्यधिकरणे एकैको विषयः, संशयपूर्वपक्षादिरूपेण विचिन्त्य सिद्धान्तपक्षस्थापनेन निर्णीतो भवति । तथा निरूप्यमाणे उपयुज्यमानविधानेन, निरूपितेन सिद्धान्तवाक्यार्थज्ञानेन वा काचन युक्तिः निष्पद्यते । सैव न्यायपदेन अभिधीयते । तादृशन्यायानां संग्रहेण शास्त्रोक्तभिन्नस्थले, धर्मानुष्ठानपद्धतौ च विप्रतिपत्तिनिवारणं सम्भवति । अतः अस्मिन् प्रबन्धे मीमांसाशास्त्रे पञ्चमाध्यायस्य द्वितीयपादस्य प्रथमाधिकरणे (पदार्थानुसमयन्यायस्य) न्यायस्य निष्पत्तिः, तस्य शास्त्रोक्तभिन्ने स्मार्तप्रयोगे सोदाहरणं सञ्चारः, स्पष्टप्रतिपत्त्यर्थं च शास्त्रोक्तश्रौतकर्मानुष्ठाने सञ्चारश्च निगद्यते ।

पदार्थानुसमयन्यायः -

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यन्नत्वा कृतकृत्यास्स्युः तन्नमामि गजाननम् ॥

इह खलु जगति शरीरभृतां धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु प्रवृत्तिः सर्वसाधारणी एव । तत्र पुरुषार्थेषु आद्यो धर्मः । तादृशधर्मानुष्ठानेन पुरुषा इहामुत्र च लोके सुखमनुभवन्ति । तर्हि को नाम धर्मः? इति विवेचनार्थमेव परमकारुणिकेन भगवता महर्षिणा जैमिनिना पूर्वमीमांसाशास्त्रं प्रणीतम् । शास्त्रेऽस्मिन् द्वादशसु अध्यायेषु धर्मो विचारितः । तत्र द्वादशाध्यायाः सन्तीति द्वादशलक्षणी" इत्यपि नामान्तरं वर्तते । तच्च पूर्वमीमांसाशास्त्राध्ययनं वेदाध्ययनानन्तरमपि गुरुकुले एव स्थित्वा कर्तव्यमिति वैधं वा? अधीत्य स्नायात् इति स्मृत्या समावर्तनं कर्तव्यमिति अवैधं वा? इति विप्रतिपत्तौ स्वाध्यायोऽध्येतव्यः"[1] इत्यध्ययनविधिविहिताध्ययनस्य अर्थज्ञानपर्यन्तश्रवणात्, तदर्थज्ञानं च विचारशास्त्रमन्तरेण दुर्घटमित्यतः अध्ययनविधिरेव तमाक्षिपतीति शास्त्राध्ययनमिदं वैधमेवेति सिद्ध्यति । तच्च विचारशास्त्रं शबरस्वामि-कुमारिलभट्टपाद-खण्डदेवप्रभृतयो दार्शनिकाः लोकहिताय विस्तारयामासुः ।

तदनु शास्त्रस्यास्य अनुबन्धचतुष्टयं वक्तव्यम्। तत्र उपनयनसंस्कारसंस्कृतः अध्ययनविधिविहितगुरुमुखादधीतवेद एवाधिकारी । प्रतिपाद्यप्रतिपादकभावः संबन्धः । शब्दस्वरूपात्मकस्य अपौरुषेयस्य वेदस्य तात्पर्यार्थनिर्णयद्वारा यथा अनुष्ठानोपयोगित्वं स्यात् तथा धर्मस्यैव विचारात् स एव धर्मो

[1] तैत्तिरीयारण्यकम् २प्रश्ने १२ अनुवाकः

विषयः । धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्"[1] इति श्लोकवार्तिकोक्तरीत्या निखिलजगत्प्रतिष्ठाहेतोः धर्मस्य प्रामाण्यस्थापनद्वारा अनुष्ठानव्यवस्थासिद्धिरेवप्रयोजनम् ।

एवं च लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः इति न्यायेन "वेदज्ञाप्येष्टसाधनताकत्वं धर्मत्वम्"[2] इति धर्मलक्षणमुक्त्वा, तस्मिन् अलौकिकेधर्मे प्रत्यक्षादिलौकिकप्रमाणषट्कस्य अगम्यत्वं सुनिरूप्य विधि-अर्थवाद-मन्त्र-स्मृति-आचार-नामधेय-वाक्यशेष-सामर्थ्याख्यानाम् अष्टानां प्रामाण्यं निरूपितम् । तथा च एतावल्लक्षणप्रमाणादिप्रतिपाद्यत्वेन रूपेण सिद्धस्यधर्मस्य, एकत्वानेकत्वादिविषयाः द्वितीयाद्यध्यायेषु प्रपञ्च्यन्ते ।

यागादिरूपधर्मश्च श्रौतः स्मार्तश्चेति विधायकभेदात् भिद्यते । तत्रापि कर्मणां नित्यनैमित्तिककाम्यभेदादपि पुनस्त्रैविध्यं दृश्यते । तत्र हि श्रुतिविहितानाम् अग्निहोत्रादीनां, स्मृत्युक्तौपासनादीनां च कर्मणां प्राधान्येन धर्मत्वं पुष्टीकृतं भवति । तत्र नित्यकर्मणः संस्तुतिः मनुस्मृतौ एवं स्मर्यते-

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्॥[3]

अस्य श्लोकस्य अयमभिप्रायः श्रुतिविहितं स्मृतिविहितं च कर्मणामनुष्ठानं यः नित्यमनुतिष्ठति सः मानवः इह लोके कीर्तिं, परलोके सुखं च प्राप्नोति इति ।

कर्मणां विषये दार्शनिकेषु भेदो दृश्यते । तद्यथा न्यायवैशेषिकदृष्ट्या कर्म इत्येकः पदार्थः । तैः प्रतिपादितेषु द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाख्येषु सप्तसु पदार्थेषु तृतीयः पदार्थः । तत्र उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानिचेति कर्माणि पञ्चविधानि प्रोक्तानि।सात्विकराजसतामसभेदेनापि कर्मणां त्रैविध्यमिति केचिदाहुः । पुनः उपनिषदि-

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः[4]

इत्यत्र कर्माणि इत्यनेन अग्निहोत्रादीनि प्रतिपादितानि । किन्तु श्रुतिस्मृत्यादिषु नित्यनैमित्तिककाम्यप्रायश्चित्तनिषिद्धभेदात् पञ्चधा विभक्तकर्मणामेव प्राशस्त्यं बोध्यते । तत्रापि प्रायश्चित्त निषिद्धकर्मणामपि नित्यादित्रये एवान्तर्भावात् कर्मणां त्रैविध्यमेवेति शास्त्रकाराणामभिप्रायः ।

भगवता महर्षिणा जैमिनिना प्रणीतायां पूर्वमीमांसायां पञ्माध्यायस्य द्वितीयपादे प्रथममधिकरणम् - वाजपेयपशूनां सर्वेषाम् एकदा उपाकरणादि धर्मानुष्ठानाधिकरणम् इति। अधिकरणस्यास्य विषयो वर्तते, अनेकेषां प्रधानानाम् अङ्गानां वा एकेनैव प्रयोगविधिना विधाने कथं साहित्येन अनुष्ठानकरणम् इति । अत्र अयं संशयः साहित्येनानुष्ठाने कर्तव्ये किं सर्वाङ्गम् एकस्मिन् प्रधाने कृत्वा इतरत्र प्रधानेषु कर्तव्यमित्येवं क्रमेणानुष्ठानं वा, एकमङ्गं सर्वत्रप्रधानेषु कृत्वा द्वितीयमङ्गं यस्मात्प्रधानात् आरब्धं तत्प्रधानात् पुनः कर्तव्यमित्येवं क्रमो वा? इति । तत्र पूर्वपक्षसूत्रमेवं वर्तते, सन्निपाते प्रधानानाम् एकैकस्य गुणानां सर्वकर्मस्यात्[5] इति । अस्यायमर्थः,

---

[1] श्लोकवार्तिकम् १अधिकरणे ११श्लोकः

[2] भाट्टदीपिका १ अध्याये १ अधिकरणम्

[3] मनुस्मृतिः २प्रकरणे ९तमः श्लोकः

[4] ईशावास्योपनिषदि २ अध्याये १ मन्त्रः

[5] जैमिनि सूत्रम् - ५अध्याये २पादे १सूत्रम्

अनेकेषां प्रधानानाम् अङ्गानाञ्च साहित्येनानुष्ठाने कर्तव्ये, सर्वगुणकर्मणां काण्डानुष्ठानम् एकैकस्मिन् प्रधाने कृत्वा इतरत्रापि कार्यमित्यर्थः । यतो हि अङ्गानां युगपदनुष्ठाने क्रियमाणे एव अङ्गानामपि साहित्यं सिद्ध्यति इति। इत्येवं पूर्वपक्षाशयः । सिद्धान्तसूत्रमेवं वर्तते, सर्वेषां वैकजातीयं कृतानुपूर्वत्वात्[1] इति। अस्यायमर्थः, सर्वेषां प्रधानानां एकमङ्गम् अनुष्ठाय द्वितीयमङ्गमनुष्ठेयमिति । एकत्रैव सर्वाङ्गानुष्ठानं कृत्वा इतरत्र क्रियमाणे अङ्गानां साहित्यं सिद्ध्येत, किन्तु प्रधानानाम् अत्यन्तव्यवधानात् साहित्यं बाध्येत । एवं क्रियमाणे तु यावत्पदार्थाः सन्ति तावत्क्षणव्यवधानस्य अपह्नोतुमशक्यत्वात् तद्व्यवधानस्य अङ्गीकृततवात् एकैकमङ्गं प्रधानेषु अनुष्ठातव्यम्।एवमनुष्ठीयमाने सर्वत्रापि समानव्यवधानमेव भवति, अनुष्ठानमपि सहकृतो भवतीति सिद्धान्तः। अनेनाधिकरणेन पदार्थानुसमयन्यायस्य निष्पत्तिर्भवति । अस्य न्यायस्य उपयोगः श्रौतस्मार्तकर्मसु मृग्यमेव भवति । तत्र स्मार्तप्रयोगनिर्णये सञ्चारः एवं कर्तुं शक्यते -

क्षमापयेत् जगद्धात्रीं मुहुर्मुहुरतन्द्रितः ।
प्रतिश्लोकं च जुहुयात् पायसं तिलसर्पिषा[2] ।।

इत्यादि वाक्येन चण्डिकाहोमो विहितः । तदङ्गतया तत्रैव ब्राम्हणसुवासिनीपूजा च विहिता

‘पशुपुष्पार्घधूपैश्च गन्धदीपैस्तथोत्तमैः ।
विप्राणां भोजनैः होमैः प्रोक्षणीयैरहर्निशं’[3]।।

इत्यादिभिः वाक्यैः । तत्र प्रकृतौ पूजायां ध्यानावाहनादिषोडशोपचारधर्माः विहिताः । ते च चोदकादतिदिश्यन्ते। प्रकृते तु प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी।[4] इत्यादिवाक्येन नवसुवासिनीषु नवदुर्गावाहनं विधीयते । आवाहनानन्तरं षोडशोपचारपूजा कर्तव्या । एवं स्थिते ध्यानादिषोडशोपचारान् प्रथमब्राम्हणे सुवासिन्यां वा कृत्वा द्वितीयादिषु कार्यं वा? ध्यानमात्रं सर्वत्र ब्राम्हणेषु सुवासिनीषु च कृत्वा आवाहनाद्युपचारधर्मानुष्ठानं कार्यं वा? इति संशये प्राप्ते, प्रकृते नाम स्मार्ते सर्वपूजानां प्रकृतित्वेन पञ्चायतनपूजा वा महागणपतिपूजा वा गृह्यते । तत्र एकस्यैव पूजाकरणात् अथवा प्रत्येकं पूजाकरणाद्वा ध्यानाद्युपचाराणां क्रमेणैव अनुष्ठानम् एकक्षणव्यवधानेन भवितुमर्हति । अत्र तु तथानुष्ठानं नैव शक्यते, नवानां ब्राह्मणानां सुवासनीनां वा साहित्येन पूजा कर्तव्यत्वेन विहिता । अतः औपदेशिकनवसंख्याश्रवणात्, अष्टक्षणव्यवधानस्य अपरिहार्यात् आतिदेशिकस्य एकक्षणस्य औपदेशिकनवक्षणात् बाधो भवति । तर्हि कथं तत्र साहित्याविरोधेन प्रयोगो अनुष्ठेयः? इति प्राप्ते ,

पदार्थानुसमयन्यायेन ध्यानाख्योपचारं प्रथमब्राह्मणात् अथवा प्रथमसुवासिन्याः आरभ्य सर्वत्रकृत्वा आवाहनाख्यं द्वितीयोपचारम् अनुष्ठेयम् । एवमेव तृतीयादिषोडशोपचाराः सर्वे अनुष्ठेयाः । इत्युक्ते शैलपुत्र्याम्दारभ्य सिद्धिधात्रिपर्यन्तम् ध्यानाख्यमङ्गं कृत्वा द्वितीयपदार्थम् आवाहनाख्यमपि शैलपुत्र्याम्दारभ्यैव सिद्धिधात्रिपर्यन्तम् कार्यम् । अन्यथा अष्टक्षणादधिकक्षणव्यवधानापत्तिः स्यात् । एवं पदार्थानुसमयन्यायस्य स्मार्तप्रयोगनिर्णये सङक्षेपेण सञ्चारविमर्शः ।

स्पष्टप्रतिपत्त्यर्थं श्रौतप्रयोगनिर्णये सञ्चारविमर्शः -

---

[1] जैमिनि सूत्रम् - ५अध्याये २पादे २सूत्रम्

[2] श्रीमार्कण्डेय पुराणे , सूर्यसावर्णिके मन्वन्तरे वैकृतिके रहस्ये ३४ तमः श्लोकः

[3] श्रीमार्कण्डेय पुराणे , सूर्यसावर्णिके मन्वन्तरे १२ अध्याये २१ तमःश्लोकः

[4] श्रीमार्कण्डेय पुराणे , सूर्यसावर्णिके मन्वन्तरे, कवचे ३ तमः श्लोकः

वाजपेयेन स्वाराज्यकामो यजेत इति वाक्यविहिते वाजपेययागे सप्तदश प्राजापत्यान् पशूनालभते इति श्रुतम् । एवं सह पशूनालभेत इति तत्साहित्यमपि श्रुतम् । तत्र चोदकेन तद्धर्माः उपाकरणनियोजनादयोऽपि प्राप्यन्ते । इदानीं किमेकस्मिन्प्रधाने उपाकरणनियोजनादीन् सर्वान् धर्मान् कृत्वा द्वितीये पुनः उपाकरणादारभ्य सर्वधर्मानुष्ठानं कर्तव्यं वा? उपाकरणमात्रं सर्वप्रधानेषु कृत्वा नियोजनं सर्वत्र कार्यं वा? इत्येवं संशये प्राप्ते, आद्यः उपाकरणपदार्थः यस्मिन् पशौ येन क्रमेण कृतः तस्मिन्नेव पशौ तेनैव क्रमेण नियोजनादिद्वितीयपदार्थाः कर्तव्याः । अन्यथा प्रकृतिप्राप्तस्य उपाकरणनियोजनयोः अव्यवहितानन्तर्यस्य औपदेशिकपशुसाहित्यानुरोधेन षोडशक्षणव्यवधानादधिकक्षणव्यवधानापत्तेः । तस्मात् पदार्थानुसमयन्यायात् सप्तदशसु पशुषु आदौ उपाकरणाख्यमङ्गं कृत्वा नियोजनादिकं कार्यमिति श्रौते एतन्न्यायसञ्चारस्य विमर्शः ।

अनुशीलितग्रन्थाः -


- अध्वरमीमांसाकुतूहलवृत्तिः ।
- श्रीदुर्गासप्तशती ।
- भाट्टदीपिका ।
- श्लोकवार्तिकम् ।
- मनुस्मृति ।
- ईशावास्योपनिषत् ।
- बोधायनीयब्रह्मकर्मसमुच्चयः ।

# जातिशक्तिवादे व्यक्तिबोधप्रकारे मतभेदचिन्तनम्

**डा.गोविन्द.गोपालकृष्ण.हेगडे**
सहायकाचार्यः (अतिथि)
राजीवगान्धीपरिसरः,शृङ्गेरी

**सारांशः**- पूर्वमीमांसायां प्रथमाध्याये तृतीयपादे जातौ शक्तिः उत व्यक्तौ इति विचारः कृतः । "व्रीहीनवहन्ति"[1] इत्यादिना विहितावघातादिक्रियाणां लिङ्गकारकसंख्यादीनां च जातौ अयोग्यत्वात् व्रीह्यादिशब्दस्य व्यक्तिवाचित्वमेव । किञ्च गौश्शुक्ला इति शुक्लशब्दस्य गोशब्देन सामानाधिकरण्यनिर्देशात् उभयोः पदयोः व्यक्तिवाचित्वमेव । व्यक्तिवाचित्वे कथं जातिबोधः इति चेत् लक्षणादिना जातिबोधः । अथवा व्यक्तिशक्तिग्रहस्य कार्यतावच्छेदकं जातिविशिष्टव्यक्तिविषयकशाब्दबोधत्वमिति । अतः जातिबोधः भवति । ननु जातिव्यक्त्योरुभयोः शाब्दबोधे भानाङ्गीकारेण तयोर्मध्ये कस्य शक्यत्वं कस्य लक्ष्यत्वम् इत्यत्र नियामकाभावेन घटादिशब्दस्य घटत्वादिजातौ शक्तिः व्यक्तौ वा इत्यत्र विनिगमकं न किञ्चित्पश्यामः इति चेन्न । लाघवमेव नियामकम् । लाघवञ्च व्यक्तिवाचित्वपक्षे वर्तते । शक्तिग्रहस्य कारणत्वव्यवहारः शक्यत्वसम्बन्धेन घटपदवत्ताज्ञानस्यकारणत्वमादाय भवति । घटः घटपदवान् इत्यत्र घटः धर्मी, धर्मितावच्छेदकं घटत्वम् । तथा च घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदप्रकाकरस्य ज्ञानस्य घटः घटपदवान् इत्याकारकस्य विशेष्यतासम्बन्धेन विशिष्टशाब्दबुद्धित्वावच्छिन्नं प्रति कारणत्वम् । जातिशक्तिवादिनां मते तु घटत्वत्वं धर्मितावच्छेदकम् । घटत्वत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदप्रकारकस्य ज्ञानस्य घटत्वंघटपदवदित्याकारकस्य विशेष्यतासम्बन्धेन विशिष्टशाब्दबुद्धित्वावच्छिन्नं प्रति कारणत्वं वक्तव्यम् । अत्र घटत्वत्वस्य धर्मितावच्छेदकत्वात् कारणीभूतस्य ज्ञानस्य गौरवम् । घटत्वत्वं नाम निखिलघटवृत्तित्वे सति घटेतरावृत्तित्वम् । एवं च घटस्य घटेतरस्य चेति समस्तजगतः घटत्वत्वस्वरूपे प्रवेशात् एतादृशघटत्वत्व धर्मितावच्छेदककज्ञानस्य अत्यन्तं गुरुभूतत्वम् ।

व्यक्तिवाचित्वपक्षे शक्त्यानन्त्यदोषः प्रसज्यते खलु, व्यक्तीनामनन्तत्वात् प्रतिव्यक्ति शक्तिस्वीकारात् शक्त्यानन्त्यदोषः भवति इति चेन्न । तस्य फलमुखत्वात् । अतः कार्यकारणभावे लाघवात् व्यक्तावेव शक्तिः । जातिविशिष्टव्यक्तौ वा, न तु जातौ इति पूर्वपक्षः ।

सिद्धान्तस्तु – घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदवत्ताज्ञानस्य कारणत्वं तथैव पदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटवत्ताज्ञानस्य घटपदं घटवत् इत्याकारकस्यापि कारणत्वं सम्भवतीत्यतः विनिगमनाविरहेण अनेककार्यकारणभावकल्पनापत्तिः स्यात् । जातिशक्तिवादिनां मते तु घटपदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटत्ववत्तानिश्चयस्यैव घटपदं घटत्ववदित्याकारकस्य कारणत्वकल्पनात् लाघवम् । ननु अत्रापि विपरीतमापादयितुं शक्यं खलु ? यथा पदत्वं धर्मितावच्छेदकीकृत्य कार्यकारणभावः प्रतिपादितः, तथा घटत्वत्वं धर्मितावच्छेदकीकृत्य कार्यकारणभावकल्पने अनेककार्यकारणभावरूपदोषस्य तादवस्थ्यादिति चेन्न । घटत्वस्य धर्मित्वे तस्य स्वरूपेण धर्मित्वाभावात्

---

[1] आपस्तम्बश्रौतसूत्रम् -१-२१-७

घटत्वत्वेनैव तस्य धर्मित्वात् घटत्वत्वस्य च धर्मितावच्छेदकत्वस्वीकारे कारणीभूतज्ञानस्य गौरवं स्यादिति पूर्वपक्षिणा एव प्रतिपादितत्वात् न अनेककार्यकारणभावकल्पनम् । अतः घटत्वत्वावच्छिन्नघटत्वं शक्यत्वसम्बन्धेन घटपदवदित्याकारकं ज्ञानं न कारणं किन्तु घटपदं शक्तत्वसम्बन्धेन घटत्ववदित्याकारकं ज्ञानं कारणम् । ननु जातेः समवायेनान्यप्रकारत्वे एव स्वरूपेण प्रकारता न सम्बन्धान्तरेण इति नियमः इति चेन्न । एतादृशनियमे प्रमाणाभावात् परैरपि(नैय्यायिकैः) अनभ्युपगमाच्च । अतः घटत्वस्य स्वरूपेणैव प्रकारत्वात् घटत्वत्वस्य प्रकारतावच्छेदकरूपेणापि अप्रवेशात् लाघवेन घटत्वे एव शक्तिः । जातिशक्तिवादिनां मते च न शक्त्यानन्त्यादिदोषावकाशः । जातेः एकत्वात् सर्वानुगतत्वाच्च । अतः जातेः प्रथमोपस्थितत्वात् तत्रैव शक्तिः । एवम् "अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति"[1] इत्यत्र अरुणा शब्दस्य अरुणगुणे तन्निष्ठजातौ वा शक्तिः न अरुणगुणविशिष्टद्रव्ये । व्यक्तिस्तु "पशुना यजेत" इत्यादौ न पदाद्भासते । जातिगुणयोरेव व्यक्तिपरिच्छेदद्वारा करणत्वोपपत्तेः । लिङ्गसङ्ख्ययोरपि सामानाधिकरण्येन पार्ष्ठिकः जातिगुणसम्बन्धः । तत्र च सम्बन्धविधया एव व्यक्तिबोधः । द्वितीयादिस्थले व्यक्तेः लक्षणया बोधः ।

**प्रमुखशब्दाः** – प्रकृतिः,विकृतिः,जातिः, आकृतिः,अधिकरणम् ,

जातौ एव शक्तिस्वीकारे कथं व्यक्तिबोधः इत्यत्र न्यायसुधाकाराणामयमभिप्रायः - जातेः व्यक्त्या सह अभेदः अभ्युपगम्यते । यथा पटे पटत्वं इह शुक्लत्वम् इत्यादि प्रतीत्या अयुतसिद्धयोः भेदः तथा अयं गौः, अयं शुक्लः इत्यादि प्रसिद्ध्या अभेदोऽपि वक्तुं शक्यः । न च जातेः व्यक्त्या सह अभेदे जातेरपि अनित्यत्वापत्तिः इति वाच्यम् । जात्यात्मना जातेः नित्यत्वेऽपि व्यक्त्यात्मना अनित्यत्वम् अस्माकमपि इष्टमेव । अतः घटादिपदानां जातिवाचित्वेऽपि व्यक्त्यभेदात् जातेः, जात्यैव व्यक्तिप्रतीतिसिद्धिः । ननु जातिव्यक्त्योरभेदाङ्गीकारे व्यक्तेरपि वाच्यत्वापत्तेः अधिकरणवैयर्थ्यापत्तिः इति चेन्न । व्यक्तेः वाच्यत्वेऽपि न व्यक्त्यात्मना वाच्यत्वम् । अपि तु जात्यात्मना व्यक्तेः वाच्यत्वमित्यतः अधिकरणस्य सार्थक्योपपत्तिः ।

भवदेवस्तु जातिव्यक्त्योः अभेदेऽपि जातिशक्तेरेव साक्षाद्विषयतासम्बन्धेन जातिसम्बन्धेऽपि उद्देश्यताख्यविषयतया व्यक्त्यापि सम्बन्धः वर्तते इति अभिप्रैति । सर्वैः व्यक्तिप्रतीतिमुद्दिश्यैव शब्दप्रयोगात् । यथा यजेत स्वर्गकामः इत्यत्र एकैव यागकृतिः यागविषयिणी स्वर्गोद्देश्यका च भवति । तथैव घटपदशक्तिः घटत्वविषयिणी घटोद्देश्यिका च भवतीत्यतः न तस्यां भेदः । अतः शक्तिज्ञानस्यैव कार्यतावच्छेदकं जातिशाब्दबोधत्ववत् व्यक्तिशाब्दबोधत्वमपि इति ।

अन्ये तु इत्यनेन कौस्तुभे पक्षान्तरं प्रदर्शितम् । तदभिप्रायस्तु इत्थं वर्तते । कार्यतावच्छेदकद्वयकल्पने गौरवात् जातिव्यक्तिबोधस्य क्रमिकत्वाननुभवात् घटत्ववत्ताज्ञानरूपस्य कारणस्य घटत्वविशिष्टशाब्दबोधत्वमेव कार्यतावच्छेदकम् । अतश्च एकया एव शक्त्या जातिव्यक्त्योः बोधः उपपद्यते ।

खण्डदेवाचार्यास्तु पशुना यजेत इत्यादि तृतीयादिस्थले जातौ एव शक्तिः । व्यक्तौ लक्षणा इति कथयन्ति ।

---

[1] तैत्तिरीयसंहिता-६-१-६

**प्रतिपादितेषु पक्षेषु औचित्यविमर्शः –**

घटत्वादिपदस्य घटत्वे शक्तिः व्यक्तेः बोधः लक्षणया भवति इत्ययं पक्षस्तु न समीचीनः । पशुना यजेत, पशुम् आनय उभयत्रापि व्यक्तिवाचकपशुपदे वैलक्षण्यं किमपि न पश्यामः । पशुना यजेत इत्यत्र तृतीयास्थले व्यक्तेः शक्त्याबोधः । पशुमानय इत्यत्र द्वितीयास्थले लक्षणया बोधः इति वैलक्षण्यानुभवाभावात् अयं पक्षः उपेक्षितः । अतः जातौ एव शक्तिः व्यक्तिबोधस्तु जातिविशिष्टव्यक्तिशाब्दबोधत्वस्य कार्यतावच्छेदकत्वस्वीकारात् भवतीत्येवं स्वीकर्तव्यम् । अथवा जातिव्यक्त्योः अभेदः मीमांसकैः स्वीकृतः । तथा च अभेदेनैव व्यक्तिबोधः इति । एवं स्वीकारे काश्चन अनुपपत्तयः दर्शिताः मीमांसाकौस्तुभे । ताः अनुपपत्तयः एवं परिहर्तव्याः । जातिविशिष्टव्यक्तिबोधस्वीकारे “चतुरो मुष्टीन् निर्वपति”[1] इत्यत्र चतुस्संख्यायाः चतुस्संख्याविशिष्टः इत्यर्थः । स च मुष्टिरूपः । सप्तदशशरावश्चरुः इत्यत्र निर्वापे जघन्यमुष्टिलोपेन प्रथमोपस्थितचतुस्संख्यानुग्रहः दशमे सिद्धान्तितः । स च सिद्धान्तः न सिद्ध्येत् । यद्यपि जघन्यः मुष्टिः तथापि प्राधान्यात् तस्यैवानुग्रहः ज्यायः । अतः मुष्ट्यनुग्रहः एव न्याय्यः स्यात् । तत्रेदं वक्तव्यम् – चतुरो मुष्टीन् निर्वपति इत्यत्र मुष्टित्वेन व्यक्तिः नोक्ता अपि तु चतुस्संख्यावत्वेन व्यक्तिः उक्ता । मुष्टिरूपव्यक्तिः मुष्टिपदेन बोध्यते । चतुस्संख्याविशिष्टव्यक्तिस्तु न मुष्टिपदेन बोध्यते अपि तु चतुःपदेन । अतः मुष्टिपदेन उक्त व्यक्त्यपेक्षया चतुस्सांख्यया उक्ता व्यक्तिः भिन्ना इति वक्तुं शक्यते इत्यतः चतुःपदेन चतुस्संख्याविशिष्टव्यक्तेः बोधेऽपि न मुष्ट्यनुग्रहः कर्तव्यः किन्तु चतुस्संख्याविशिष्टस्यैव अनुग्रहः कर्तव्यः । तथा च सप्तदशशरावश्चरुः इत्यत्र मुष्टिलोपसिद्धान्तः दशमोक्तः न भज्यते । एवं च जातिशक्तिस्वीकारपक्षे व्यक्तिबोधः अभेदेन भवति । यदा तु जातिव्यक्त्योः भेदः इत्याग्रहः तदा कार्यतावच्छेदकमेव जातिविशिष्टव्यक्तिशाब्दबोधत्वमिति । तथा च न्यायसुधाकारपक्षः अथवा अन्ये तु इत्यनेन प्रतिपादितः पक्षः एव व्यक्तिबोधविषयकमतभेदे युक्तः प्रतिभाति ।

**अनुशीलितग्रन्थसूची –**


- ❖ भाट्टदीपिका ।
- ❖ मीमांसाकौस्तुभः ।
- ❖ तौतातितमततिलकम्।
- ❖ मीमांसाश्लोकवार्तिकम् ।


[1] आपस्तम्बश्रौतसूत्रम्-१-१८-२

# आत्मानुसन्धानम्

डा. राघवेन्द्र पी आरोल्ली
सहायकाचार्यः(Guest Faculty), न्यायविद्याशाखा
केन्द्रीयसंस्कृतविश्वविद्यालयः, राजीवगान्धीपरिसरः शृङ्गेरी

Kye Words :
(आत्मा, आत्मनः सद्भावे प्रमाणम्, आत्मास्तित्वविषये शङ्कापरिहारौ, आत्मनः शरीराद्यतिरिक्तत्वव्यवस्थापनम्, बन्धमोक्षव्यवस्था, दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् )

**लेखनसारः**

[महर्षिणा गौतमेन उपदिष्टेषु प्रमेयेषु आत्मा शरीरादिप्रमेयानुषक्तो हेयो भवति, स एव तत्त्वज्ञानेन आत्यन्तिकदुःखध्वंससहित उपादेयो भवति। आत्मनः उपादेयतासम्पादनार्थम् आत्मानुसन्धानमावश्यकम्। तस्य च सद्भावे प्रत्यक्षादीनि प्रमाणानि सन्ति । आत्मनः असत्त्वशङ्का तु न युक्ता, यस्यासत्त्वं सन्दिह्यते तस्यासद्भावासम्भवात् । आत्मनः तुच्छत्वे बन्धमोक्षव्यवस्था नोपपद्येत । शरीराद्यतिरिक्तस्यात्मन उपगमे एव बन्धमोक्षव्यवस्था उपपद्यते । मिथ्याज्ञाननाशपूर्वकम् आत्यन्तिकदुःखध्वंसरूपं परमपुरुषार्थम् अर्जयितुम् आत्मानुसन्धानम् अनिवार्यमेव ।]

अथ सच्चिदानन्दं परम् आत्मानम् उपदिशन्ति "सत्यं ज्ञानम् अनन्तं ब्रह्म", "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादीनि उपनिषद्वाक्यानि । तस्यानुग्रहेणैव तत्त्वज्ञानात्मकेन प्लवेन संसारसागरन्तीर्त्वा वेदनासामान्यशून्यं परमपुरुषार्थसाम्राज्यं प्रविशन्ति मनीषिणः। तत्रोपायः तत्त्वज्ञानम्। तच्च आत्मनः यथार्थज्ञानमित्यतः आत्माऽत्र विचारयिष्यते।

**आत्मानुसन्धानस्यावश्यकता**

परमकारुणिकेन गौतममुनिना प्रमाणादयः षोडश पदार्थाः अपवर्गप्राप्त्युपायत्वेन उपदिष्टाः वर्तन्ते। तत्र प्रत्यक्षादीनां चतुर्णां प्रमाणानाम् आत्मादिप्रमेयसाधकानां परीक्षापूर्वकं प्रतिपादनं कृत्वा आत्मादीनां द्वादशानां प्रमेयाणां प्रतिपादनं विहितमस्ति । यद्यपि द्रव्यादीन्यपि प्रत्यक्षादिप्रमाविषयाणि प्रमेयाणि काणादादितन्त्रेषु प्रमाणप्रदर्शनपूर्वकं प्रतिपादितानि सन्ति तथापि अत्र प्रमाविषयात्मकानि सर्वाणि प्रमेयाणि न सङ्गृहीतानि। अपि तु मोक्षोपायत्वेन प्रसिद्धान्येव प्रमेयाणि प्रतिपादितानि सन्ति। तदुक्तं जयन्तभट्टैः -

ज्ञातं सम्यगसम्यग्वा यन्मोक्षाय भवाय वा।
तत् प्रमेयमिहाभीष्टं न प्रमाणार्थमात्रकम् ॥[1] इति।

तथा च आत्मादीनि प्रमेयाणि हेयोपादेयभेदेन द्विविधानि वर्तन्ते । तत्र आत्मनो भोगार्थम् उपकल्पितानि शरीरेन्द्रियमनांसि, भोगात्मिका बुद्धिः, प्रवृत्तिदोषौ शरीरोत्पादकौ, शरीरोत्पत्तिः प्रेत्यभावः, सुखदुःखात्मकानि फलानि, विवेकतः सर्वं दुखमेवेति शरीरादिदुःखान्तानि सर्वाण्यपि प्रमेयाणि हेयान्येव । आत्मा तु सुखदुःखादिभोक्तृत्वेन शरीरादिप्रमेयानुषक्तो हेयो भवति। स एव यदा तत्त्वज्ञानेन आत्यन्तिकदुःखध्वंससहितो

1 न्यायमञ्जरी - सप्तमम् आह्निकम्

भवति तदा अपवर्गवानुपादेयो भवति । तस्मात् आत्मनः उपादेयत्वसम्पादनार्थम् आत्मानुसन्धानमतीवावश्यकं विद्यते ।

**आत्मनः सद्भावे प्रमाणम्**

आत्मनः सद्भावे किं प्रमाणमिति चिन्तायां प्रत्यक्षमेव प्रमाणं तत्र प्रसिद्ध्यति । 'अहं सुखी' इत्यादिसार्वजनीनानुभवस्य सत्त्वात् । न हि कस्यचित् अहमस्मि न वा इति सन्देहो जायते । एवमनुमानमपि प्रमाणं प्रदर्शयितुं शक्यते । तत्र आक्षपादसूत्रम् - "इच्छाद्वेषप्रयत्नसुखदुःखान्यात्मनो लिङ्गम्"[1] इति । तथा हि - 'योऽहं घटमद्राक्षं सोऽहं स्पृशामि' इत्यादिषु अनुभवेषु दर्शनस्पर्शनयोः यो घटो विषयः एकः भवति तद्वत् तयोः आश्रयः देवदत्तादिरपि एकः इति ज्ञायते । अन्यथा अन्येन देवदत्तादिना दृष्टस्य घटादेः अन्यस्मिन् यज्ञदत्तादौ स्पार्शनप्रत्यक्षप्रसङ्गः । स चानिष्टः अनुभवविरुद्धश्च । एवमिच्छादिरपि । इच्छा तावत् पूर्वानुभूतसजातीयस्य सुखसाधनस्य सुवर्णादेः ज्ञानेन जायते । सेयमिच्छा पूर्वापरानुसन्धानसमर्थम् आश्रयमुपस्थापयति । एवमेव द्वेषादिरपि । तस्मादेव इच्छादीनि आत्मनः सद्भावे चिह्नानि भवन्ति । तदुक्तम् -

ज्ञानेच्छासुखदुःखादि किलेदं लिङ्गमात्मनः ।
एकाश्रयतया ज्ञातमनुसन्धातृबोधकम् ॥[2]

तत्रैवमनुमानम् - 'पूर्वापरानुसन्धानसमर्थम् इच्छादि क्वचिदाश्रितम् कार्यत्वात् घटवत्', 'पूर्वापरानुसन्धानसमर्थम् इच्छादि किञ्चिद्द्रव्याश्रितं गुणत्वात् रूपवत्' इति वा । घटादिकार्याणां स्वसमवायिकारणे आश्रितत्वं दृष्टम् । एवमेव इच्छादीनामपि उत्पत्तेः कार्यत्वे अवगते तेषां कश्चन आश्रयः सिद्ध्यति । स आत्मा इति उच्यते । अथवा रूपादीनां गुणानां यथा पटादिद्रव्याश्रितत्वं दृश्यते तद्वत् इच्छादीनामपि गुणत्वात् किञ्चिद्द्रव्यम् आश्रयः इति सिद्ध्यति । तच्च द्रव्यमात्मा भवति । एवमेव "आत्मा वा अरे द्रष्टव्यः"[3] इत्याद्यात्मदर्शनोपायप्रतिपादक आगमोऽपि आत्मनः सद्भावे प्रमाणं भवति ।

**आत्मास्तित्वविषये शङ्कापरिहारौ**

इत्थं प्रत्यक्षादिभिः प्रमाणैः सिद्धः आत्मा किं देहेन्द्रियमनोबुद्ध्यतिरिक्तः आहोस्विन्नेति संशय्य विचारः कृतः श्रीमता वार्तिककारेणोद्योतकरेण । नन्वत्रायं संशय एव न युक्तः । तथा हि - संशयोत्पत्तौ धर्मिणः निश्चयः नियमेन अपेक्ष्यते । यथा 'भूतलं घटवन्न वा' इति संशयोत्पत्तेः प्राक् भूतलज्ञानं नियमेन भवेत् । प्रकृते तु प्रदर्शिते आत्मधर्मिकसंशये धर्मिणः आत्मनः असिद्धत्वात् संशय एव अनुपपन्नः इति चेन्न । प्रदर्शितमेव हि आत्मनः सद्भावे प्रत्यक्षादिकं प्रमाणम् । तस्मात् धर्मिनिश्चयाभावात् संशयाभावः नैव आरोपणीयः ।

ननु तथापि आत्मनः असत्त्वप्रतिपादकानि प्रमाणानि उपलभ्यन्ते । यथा सौगताः 'आत्मा नास्ति अजातत्वात् शशविषाणवत्' इत्यनुमानेन आत्मनः असत्त्वं साधयन्ति । तथा हि - शशविषाणादयः तुच्छपदार्थाः न जायन्ते, अतः असन्तः भवन्ति; तद्वत् आत्मापि न जायते इत्यतः असन् भवति इति चेन्न । आत्मनः असत्त्वं प्रतिपादयतः भवतः प्रतिज्ञैव अनुपपन्ना । तथा हि आत्मा नास्ति इत्यत्र आत्मेत्यनेन सत्त्वमुच्यते नास्तीत्यनेन

1 न्यायसूत्रम् - १.१.१०.

2 न्यायमञ्जरी - सप्तमम् आह्निकम्

3 बृहदारण्यकोपनिषत् - २.४.५.

अभावः । न हि नास्तिपदेन तत्समानाधिकरणस्य सर्वथाभावः उच्यते । अपि तु देशकालविशेषे तस्य प्रतिषेधमात्रमुच्यते । 'अत्र घटो नास्ति' इति वाक्येन न घटस्य सामान्याभावः कथ्यते, अपि तु अस्मिन् देशे अस्मिन् काले वा घटस्य प्रतिषेध एव । तथा च किं नास्त्यात्मेति कथयितुः कुत्रचिद्देशे आत्मनः प्रतिषेधः अभिप्रेतः ? न, सर्वव्यापकस्य आत्मनः देशविशेषे वृत्तित्वाभावात् । नापि कालविशेषे प्रतिषेधः, आत्मनः नित्यत्वाभ्युपगमात् ।

योऽपि आत्मनः असत्त्वसाधनार्थं हेतुः प्रदर्शितः अजातत्वादिति सोऽपि असत्त्वसाधकः न भवति । तथा हि - जातत्वम् अजातत्वं च वस्तुधर्मौ । यस्य कारणवतः वस्तुनः सत्ता अभ्युपगम्यते तज्जातमित्युच्यते । यस्य तु कारणरहितस्य सत्ता तदजातं भवति । यतो हि अजातमित्यत्र नञा वस्तुनः जन्म प्रतिषिध्यते । यथा 'अनुदकः कमण्डलुः' इत्यत्र अनुदकपदघटकनञा उदकप्रतिषेधः न क्रियते, अपि तु उदके कमण्डलुवृत्तित्वं प्रतिषिध्यते । तस्मात् आत्मा अजातः इत्युक्ते नास्य जन्म विद्यते इत्यर्थः लभ्यते । यदि अजातत्वेन भावस्य प्रतिषेधः एव अभ्युपगम्यते, न तु जन्मनः प्रतिषेधमात्रमिति उच्यते तदा प्रतिज्ञा हेत्वोरैक्यापत्तिः । आत्मा नास्तीति प्रतिज्ञयापि आत्मा प्रतिषिध्यते, अजातत्वादित्यनेनापि प्रतिषिध्यते इति । किञ्च अजातत्वमिति कश्चन धर्मः । धर्मश्च स्वतन्त्रो न भवति, किञ्चिद्धर्म्याश्रितत्वात् । स च यस्मिन् धर्मिणि आश्रितः सोऽयमात्मेति आत्मनः प्रतिषेधो न सम्भवति । यदि अजातत्वस्य जन्माभावः इत्यर्थः स्वीक्रियते तदा असिद्धिः । आत्मनः जननात् । किं पुनरात्मनः जन्म ? उच्यते - निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनाभिः अभिसम्बन्धः । यदि अजातत्वमकारणकत्वं तदा विरोधः । अजातत्वेन हेतुना असत्वसाधनार्थं प्रवृत्तस्य अकारणकत्वेन नित्यत्वसिद्धेः । किञ्च प्रतिज्ञाहेत्वोर्विरोधप्रसङ्गः । तथा हि - आत्मा नास्ति इति आत्मनः असत्त्वसाधनार्थं प्रवृत्तस्य अकारणकत्वात्मकेन अजातत्वेन हेतुना आत्यन्तिकसत्तासम्बन्धः साधितः भवति । तस्मात् कथमपि अजातत्वेन हेतुना आत्मनः प्रतिषेधः न सम्भवति ।

**आत्मनः शरीराद्यतिरिक्तत्वव्यवस्थापनम्**

इत्थं आत्मनः असत्त्वसाधनार्थं प्रवृत्तानां प्रमाणाभासानां निरसनेन प्रत्यक्षादिभिः प्रमाणैः आत्मनः अस्तित्वे सिद्धे तस्मिन् व्यपदेशस्य उभयथा सिद्धेः संशयो भवति । तत्र व्यपदेशो नाम क्रियाकरणयोः कर्त्रा अभिसम्भन्धः । यथा 'चक्षुषा पश्यति' इति । अत्र दर्शनक्रियायाः करणं भवति चक्षुः । अनेन चक्षुषः दर्शनस्य कर्त्रा सम्बन्धः ज्ञायते । अयं च व्यपदेशः उभयथा दृश्यते । अवयवेन समुदायस्य, अन्येन अन्यस्य इति । तत्राद्यः क्वचित् अवयवेन अवयविनः व्यपदेशः । यथा 'मूलैः वृक्षस्तिष्ठति' इति । अत्र वृक्षावयवः मूलम्, तत्करणकस्थितिक्रियायाः कर्तृत्वम् अवयव्यात्मके समुदाये वृक्षे वर्तते । एवं एकदेशेन एकदेशान्तरस्य व्यपदेशः । यथा 'स्तम्भैः प्रासादो ध्रियते' इति । तत्र हि भवनैकदेशाः भवन्ति स्तम्भाः । तेन भवनैकदेशस्य प्रासादस्य कर्तृत्वेन व्यपदेशः अवगम्यते । तृतीयस्तु 'चैत्रः परशुना वृश्चति' इति । अत्र परश्वपेक्षया अन्यस्मिन् चैत्रे वृश्चनक्रियाकर्तृत्वं भासते । अत्र कर्तृत्वव्यपदेशस्य अनेकविधत्वात् 'चक्षुषा पश्यति', 'शरीरेण सुखदुःखमनुभवति' इत्यादिव्यपदेशे कर्तृत्वेन भासमानः आत्मा समुदायात्मकः शररेन्द्रियादिसङ्घातः उत तदतिरिक्तः इति संशयो जायते ।

तत्रोच्यते - **दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्**[1] इति । दृश्यते अनेनेति व्युत्पत्त्या दर्शनं चक्षुरिन्द्रियमुच्यते, तथा स्पृश्यतेऽनेनेति व्युत्पत्त्या स्पर्शनं त्वगिन्द्रियमुच्यते । तथा च चक्षुरिन्द्रियेण दृष्टं फलादिकमर्थं त्वगिन्द्रियेण प्रत्यभिजानाति 'यत् फलमद्राक्षं तत् स्पृशामि, यमस्प्राक्षं तं पश्यामि' इति ।

नन्वत्र दर्शनस्पर्शनप्रत्यययोः फलाद्येकार्थग्राहकत्वेऽपि प्रत्यक्षाश्रयः शरीराद्यतिरिक्तः आत्मा न सिद्ध्यति इति चेन्न । दर्शनस्पर्शनप्रत्यक्षे एककर्तृके इति सूत्रार्थः । तथा च चाक्षुषप्रत्यक्षस्य आश्रयो यः स एव स्पार्शनप्रत्यक्षस्यापि आश्रयः । स च न शरीरम् । शरीरस्य तथात्वे पूर्वं येन शरीरेण यस्य चाक्षुषमुत्पन्नं तस्य कालान्तरे प्रत्यभिज्ञानं न स्यात् । तदानीं पूर्वतनशरीरस्य अभावात् । अवयवोपचयापचयाभ्यां शरीरस्य नानात्वात् । तस्मात् दर्शनस्पर्शनप्रत्यक्षयोः आश्रयतया शरीरातिरिक्तः आत्मा सिद्ध्यति ।

**बन्धमोक्षव्यवस्था**

इत्थं शरीरातिरिक्ततया आत्मनः सद्भावे सिद्धे बन्धमोक्षादिकं च सम्यगुपपद्यते । तथा हि - स आत्मा मिथ्याज्ञानसम्पन्नः संसारसागरे निपतितः वरीवर्ति । तत्र मिथ्याज्ञानं च शरीरादिषु आत्मत्वप्रकारकबुद्धिः । 'मम सम्पत्', 'अहं कर्म करोमि' इत्यादयः प्रतीतयः अहन्त्वेन ममत्वेन च शरीरमेव बोधयन्ति । तस्मात् शरीमेव आत्मेति भ्रमे संसारः सर्वोऽपि प्रवर्तते । मिथ्याज्ञानस्य निवृत्तौ संसारादपि निवृत्तिर्भविष्यति । तदा दुःखलेशोऽपि न बाधते । अत एवासूत्रयदक्षपादः **तदत्यन्तविमोक्षोऽपवर्गः**[2] इति । दुःखस्य अत्यन्तोपशमः मोक्षः इति तस्य अर्थः । दुःखात्यन्तनिवृत्तिश्च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः इति निरुच्यते । यदा तु दुःखध्वंसोत्तरं पापादेरभावात् पुनः दुःखमेव नोत्पद्यते तदा तत्रत्यः दुःखध्वंसः दुःखप्रागभावासमानकालीनः भवति इत्यतः तस्य दुःखध्वंसस्य आत्यन्तिकत्वमुपपद्यते । स च आत्यन्तिकदुःखध्वंसः मिथ्याज्ञानादीनाम् अपाये सति सिद्ध्यति । तदुक्तम् - **दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः**[3] इति । शरीरेषु आत्मत्वबुद्धेः मिथ्याज्ञानस्य आत्मतत्त्वसाक्षात्कारेण विनाशे सति रागद्वेषमोहात्मका दोषाः विनश्यन्ति । ततः इष्टप्राप्त्यर्थम् अनिष्टनिवारणार्थं वा विहितमविहितं वा कर्म न क्रियते इत्यतः पापपुण्यात्मिका प्रवृत्तिः न भवति । प्रवृत्यभावे सति बीजाभावात् आद्यप्राणशरीरसंयोगरूपं जन्म न भवति । जन्मनः अत्यन्ताभावे दुःखं पुनर्नोत्पद्यते । तदा शरीरादिसम्बन्धरहितः संसारार्णवादुत्थितः आत्मा तिष्ठति इत्यतः मुक्तः इति उच्यते ।

इत्थमात्मानुसन्धानं भवबन्धविमोचकम् ।
मुमुक्षवः पिबन्त्यत्र तिक्तौषधमिवातुराः ॥

**परिशीलिताः ग्रन्थाः -**

- न्यायसूत्राणि भाष्यवार्तिकसहितानि
- न्यायमञ्जरी
- बृहदारण्यकोपनिषत् (भाष्यसहितम्)
- न्यायसिद्धान्तमुक्तावली

---

1 न्यायसूत्रम् - ३.१.१.

2 न्यायसूत्रम् - १.१.२२.

3 न्यायसूत्रम् - १.१.२.

# आयुर्दायः

श्रीनागपतिहेगडे
सहायकाचार्यः (अतिथि), ज्यौतिषविभागः
कें.सं.वि. – राजीवगान्धीपरिसरः, श्रृङ्गेरी

Keywords –

ज्यौतिषम् , आयुः, पिण्डायुः, जीवशर्मायुः, अंशायुः, शत्रुक्षेत्रहरणम्, अस्तङ्गतहरणं, चक्रार्धहरणं, क्रूरोदयहरणं, त्रिगुणितं, द्विगुणितं ।

Abstract –

"आयुः पूर्वं परीक्षेत पश्चाल्लक्षणमादिशेत् । अनायुषां तु मर्त्यानां लक्षणैः किं प्रयोजनम्" ॥ इति वचनानुसारं फलचिन्तनात् प्राक् आयुश्चिन्तनं कर्तव्यम् । आयुश्चिन्तनप्रकारेषु अरिष्टानां बलिष्ठत्वात् अरिष्टचिन्तनं कर्तव्यम् । आयुर्निर्णेतुं बहवः पन्थानो दर्शयामासिरे पूर्वसूरिभिः । अथापि वराहमिहिराचार्यः आयुषः गणनायां पिण्डायुः, जीवशर्मायुः, अंशायुरिति त्रैविध्यम् उपावर्णयत् । उक्तेषु त्रिषु आयुर्दायेषु सत्योपदिष्टम् अंशायुर्दायमेव श्रेयसे इति मिहिरसम्मतं मतम् ।

Article -

त्रिस्कन्धात्मकेस्मिन् ज्योतिश्शास्त्रे विचार्येषु विषयेषु आयुरेव मुख्यतमम् । यतो हि सत्येवायुषि तदुक्तानां फलानाम् अनुभवः । तदेवोक्तम् :-

"आयुः पूर्वं परीक्षेत पश्चाल्लक्षणमादिशेत् ।
अनायुषां तु मर्त्यानां लक्षणैः किं प्रयोजनम् ॥" [1]

अत एवमायुर्दायं महीष्टं स्थानं भजते होराप्रपञ्चे ।

एवं प्रधानभूतमिदम् आयुर्निर्णेतुं बहवः पन्थानो दर्शयामासिरे पूर्वसूरिभिः । अथापि वराहमिहिराचार्यः आयुषः गणनायां पिण्डायुः, जीवशर्मायुः, अंशायुरिति त्रैविध्यम् उपावर्णयत् । तत्रादौ पिण्डायुर्दायः । अस्मिन् उच्चस्थाः सूर्यादिग्रहाः क्रमशः दशभिः सहिताः नवतिथिविषयाश्विभूतरुद्राः दश च वत्सराः आयुः प्रयच्छन्ति । यदि ते एव ग्रहाः नीचस्थाः तर्हि उक्तेषु वत्सरेषु अर्धं हरन्ति । तदन्तरे अनुपाततः वर्षाणि आनयेत् । लग्नं भुक्तनवांशतुल्यमायुः प्रयच्छति । एवं प्रोक्तेषु आयुःप्रमाणेषु शत्रुक्षेत्रहरणम् अस्तङ्गतहरणं चक्रार्धहरणं क्रूरोदयहरणं च सतिसम्भवे कुर्यात् । तद्यथा कुजं हित्वा अन्ये ग्रहाः रिपुगृहगताः त्रिभागं हरन्ति । शुक्रार्कपुत्रौ प्रोझ्य अस्तङ्गताः ग्रहाः अर्धम् अपहरन्ति । तदुक्तम् आचार्येण :-

"नीचेऽतोऽर्धं ह्रसति हि ततश्चान्तरस्थेऽनुपातो
होरा त्वंशप्रतिममपरे राशितुल्यं वदन्ति ।
हित्वा वक्रं रिपुगृहगतैर्हीयते स्वत्रिभागः
सूर्योच्छिन्नद्युतिषु च दलं प्रोझ्य शुक्रार्कपुत्रौ ॥" [2] इति ।

---

[1] प्रश्नमार्गः, अध्यायः – ९, श्लोकसङ्ख्या - ३

[2] बृहज्जातकम्, अध्यायः – ७, श्लोकसङ्ख्या - २

व्ययादपसव्यक्रमेण दृश्यार्धचक्रे स्थिताः अशुभाः क्रमशः सर्वार्धत्रिचरणपञ्चषष्टांशान् हरन्ति । शुभास्तु तदर्धमपहरन्ति । शुभाशुभाभ्यां स्थिताभ्यां बलिनः तदंशं हरेत् । एवं हरणत्रयमुक्तम् । क्रूरोदयहरणं चतुर्थम् । तद्यथा पापाः लग्नस्थाश्चेत् लग्नोदितनवांशसङ्ख्यया प्राप्तमायुर्मानं अष्टोत्तरशतसङ्ख्या विभज्य प्राप्तं मानं समस्तायुषि ऊनीकुर्यात् । एवं हरणात्परं प्राप्तायुः स्पष्टं पिण्डायुः स्यात् ।

अथ जीवशर्मायुर्दायः । जीवशर्मा परमायुषः अर्थात् विंशत्यधिकस्य वर्षशतस्य सपञ्चदिनस्य सप्तमभागं ग्रहस्य आयुर्दायं कथयति । अर्थात् प्रत्येकस्यापि उच्चङ्गतस्य ग्रहस्य सप्तदशवर्षाणि एको मासः द्वाविंशतिः दिनानि अष्टौ घटिकाः चतुस्त्रिंशत् विघटिकाश्च आयुः प्रमाणं भवति । अत्रापि हरणाधिकं पिण्डायुर्दायवदेव करणीयम् ।

सर्वात्मना सत्यवाक्यमनुसरता मिहिराचार्येण अंशायुर्दायः ग्रहभुक्तनवांशराशितुल्यमित्याह । तन्नाम ग्रहभुक्तनवांशराशितुल्यानि वर्षाणि प्रत्येकं ग्रहस्य आयुः प्रमाणं ज्ञेयम् । लग्नस्थापि अनेन विधिना आयुर्वर्षाणि साधयेत् । किन्तु क्रूरोदये यो अपचयः उक्तः स नात्र गृह्यते । अवशिष्टानि शत्रुक्षेत्रादि हरणानि कुर्यात् । अंशायुर्दाये कश्चन विशेषोस्ति । यथा - यदि ग्रहाः उच्चस्थः, वक्रो वा भवति तर्हि तत्कृतायुः त्रिगुणितं वर्गोत्तमे स्वनवांशे स्वक्षेत्रे स्वद्रेष्काणे वा स्थिते द्विगुणितं च कुर्यात् । अनेन विधिना हरणभरणाभ्यां प्राप्तानि समस्तानि मानानि प्राणिनः आयूंषि सूचयति ।

मिहिराचार्येण जन्तूनां परमायुः प्रमाणं एवमुक्तम् -

समाः षष्टिर्द्विघ्नि मनुजकरिणां पञ्च च निशा[1] ।

इति । अर्थात् मानवानां विंशत्यधिकं वर्षशतं पञ्च निशा च परमायुः प्रमाणं भवति । इदं परमायुः कदा भवतीति चेत् मीनस्य नवमे नवांशे लग्नं बुधः वृषभराशौ पञ्चविंशत्यंशे स्थितः अन्ये सर्वे ग्रहाः यदि परमोच्चगताः भवन्ति तदा जातस्य परमायुर्भवति । तदेवोक्तं अनिमिषपरमांशके इत्यादिना । किन्तु अयं योगः राजयोगत्वेनापि प्रकीर्तितः । किन्तु लोके दरिद्राः अपि बहुकालं जीवन्तीत्येकः दोषः । तथा च वर्षाष्टकानां यावत् जातानां अरिष्टमुक्तम् । पूर्वदर्शितायुर्दायसाधनप्रकारे विंशतेरधस्तात् आयुः प्रमाणं नायाति । एवं वर्षाष्टकात् ऊर्ध्वम् अरिष्टं नास्ति । तस्मात् वर्षाष्टकात् ऊर्ध्वं विंशतेरधस्तात् न कस्यचिदपि मरणं भवेत् । किन्तु लोके म्रियन्तो दृश्यन्ते इत्यपरः दोषः । अतः एव विद्यमानेषु त्रिषु आयुर्दायेषु सत्योपदिष्टः अंशायुर्दायमेव श्रेयसे इति मिहिरसम्मतं मतम् । तदुक्तम् आचार्येण -

"सत्योपदेशोवरमत्रकिन्तु कुर्वन्त्ययोग्यं बहुवर्गणाभिः ।
आचार्यकत्वं च बहुघ्नतायामेकं तु यद्भूरि तदेव कार्यम् ॥"[2]

इति शम् ।

---

[1] बृहज्जातकम्, अध्यायः – ७, श्लोकसङ्ख्या - ५

[2] बृहज्जातकम्, अध्यायः – ७, श्लोकसङ्ख्या - १३

Bibliography -


- केशवीयजातकपद्धतिः, लेखकः – श्रीकेशवदैवज्ञः, प्रकाशकः – चौखम्भा संस्कृत संस्थानम् वारणासी, प्रकाशितवर्षम् – २०१५
- बृहज्जातकम्, लेखकः – श्रीवराहमिहिरः, प्रकाशकः – मोतीलाल बनारसीदास, प्रकाशितवर्षम् – २०१३
- जातकपारिजातः, लेखकः – श्रीवैद्यनाथः, प्रकाशकः – चौखम्भा संस्कृत संस्थानम् वारणासी, प्रकाशितवर्षम् – २०१३
- फलदीपिका, लेखकः – श्रीमन्त्रेश्वरः, प्रकाशकः – चौखम्भा सुरभारती प्रकाशनम् वारणासी, प्रकाशितवर्षम् – २०१८
- प्रश्नमार्गः, प्रकाशकः – चौखम्भा सुरभारती प्रकाशनम् वारणासी, प्रकाशित वर्षम् – २०१३
- सचित्रसामुद्रिकरहस्यम्, प्रकाशकः – रूपेश ठाकुर प्रसाद, प्रकाशनम् - वारणासी, प्रकाशितवर्षम् – २०१४
- बृहत्पाराशरहोराशास्त्रम्, लेखकः – श्रीपराशरमुनिः, प्रकाशकः – चौखम्भा प्रकाशनम् वारणासी, प्रकाशितवर्षम् – २०१५
- भारतीय कुण्डली विज्ञानम्, लेखकः – मोतीलाल हिंमतराम ओझा, प्रकाशकः – दर्शन ओझा, देवर्षि प्रकाशनम्, प्रकाशितवर्षम् – २०१७
- पञ्चस्वराः, प्रकाशकः - वाराणसेय संस्कृत संस्थानम् वाराणासी, प्रकाशितवर्षम् - २०१२

# न्याय-वैशेषिकनये हेत्वाभासविमर्शः

**श्री शान्तिघोषः**
सहायकाचार्यः(अतिथिः)
केन्द्रियसंस्कृतविश्वविद्यालयः, राजीवगान्धीपरिसरः
मेणसे, शृङ्गेरी

**शोधप्रबन्धसारः**

षट्सु आस्तिकदर्शनेषु न्यायदर्शनं वैशेषिकदर्शनञ्च प्रामुख्यं भजेते। न्यायवैशेषिकदर्शने समानतन्त्रे। न्यायवैशेषिकसम्मताः सप्त एव पदार्था विलसन्ति। एतयोः मते चत्वारि प्रमाणानि प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दश्चेति। तत्र अनुमाने हेतुः प्रधानभूतो भवति। हेतुना साध्यस्य अनुमितिः भवति। हेतुः व्याप्तिपक्षधर्मताविशिष्टो यदि भवति तदानीं सः सद्धेतुः भवति। पक्षवृत्तित्वं सपक्षवृत्तित्वं विपक्षावृत्तित्वम् अबाधितत्वम् असत्प्रतिपक्षितत्वम् इति पञ्चविधधर्मैः विशिष्टः हेतुः सद्धेतुर्भवति। केनापि अंशेन वैकल्यं भवति चेदेव हेतुः असद्धेतुरिति उच्यते। असद्धेतवः हेत्वाभासशब्देन परिचीयन्ते। हेतोः दोषाः दुष्टहेतवो वा हेत्वाभासशब्देन अभिधीयन्ते। न्यायवैशेषिकतन्त्रे पञ्च हेत्वाभासाः प्रथिताः सन्ति। तेषां लक्षणानि उदाहरणानि चात्र व्याख्यायन्ते। दुष्टहेतुषु ज्ञातेषु सत्सु सद्धेतुभिः अनुमितिः प्रवर्तते। अतः अस्मिन् लघुशोधप्रबन्धे दुष्टहेतव एव प्राधान्येन प्रतिपाद्यन्ते।

**सारिष्ठाः शब्दाः**

हेतुः, साध्यम्, आन्वीक्षिकी, प्रमाणम्, मोक्षः, परामर्शः, अनुमितिः, अन्वयः, व्यतिरेकः इत्यादयः शब्दाः।

**उपोद्घातः**

दृश्यते ज्ञायते अनेनेति व्युत्पत्तियोगाद् मनोबुद्ध्यगोचरस्य वस्तुनः साक्षात्कार एव दर्शनशब्दार्थः। तत्र षट्स्वास्तिकदर्शनेषु मूर्धन्यतां भजते न्याय-वैशेषिकदर्शनम्। महर्षिणा गौतमेन न्यायदर्शनं तथा कणादेन वैशेषिकदर्शनं प्रणीतम्। पदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इति परमोपेयः मोक्ष एवात्यन्तिकप्रयोजनम् अनयोः दर्शनयोः। न्यायवैशेषिकयोः समानविषयत्वात् समानतन्त्रमिति उच्यते। न्यायवैशेषिकसम्मतप्रकरणग्रन्थो भवति अन्नंभट्टप्रणीतः तर्कसंग्रहः। ग्रन्थेऽस्मिन् प्रमाणानि प्रत्यक्षानुमानोपमानशब्दाभिधेयानि प्रामुख्येन प्रतिपाद्यन्ते। प्रसङ्गतश्च न्यायवैशिषिकसम्मतसप्तपदार्था उद्देशलक्षणपरीक्षामुखेन प्रतिपादिताः। आन्वीक्षिकीति न्यायशास्त्रस्यापरं नाम। अनुमानप्रमाणमाश्रित्य नैयायिकाः प्रवर्तन्ते अत आन्वीक्षिकीति युक्तं नामास्य दर्शनस्य। अनुमानञ्च व्याप्तिग्रहणपक्षधर्मताज्ञानसहकारेण भवति। तादृशव्याप्तिनिरूपणप्रसङ्गे हेत्वाभास इति बहुपरिचितः विषयः पदं कुरुते। दर्शनान्तरेष्वपि हेत्वाभासविषयः निगदं व्याख्यातोऽस्ति। यथा अद्वैतसिद्धौ मिथ्यात्वलक्षणपर्यालोचनावसरे हेत्वाभासविषयोऽपि आगतः। प्रस्तुतप्रबन्धे न्यायवैशेषिकनये हेत्वाभासविमर्शः इति विषयमधिकृत्य समासेन उच्यते।

**विषयप्रवेशः**

अन्नंभट्टविरचिते न्यायवैशेषिकप्रकरणग्रन्थे तर्कसंग्रहे अनुमाननिरूपणप्रसङ्गे हेत्वाभासः इत्ययं विषयः आलोचितः। न्यायदर्शने स्वीकृतेषु चतुर्षु प्रमाणेषु अनुमानमिति मुख्यं प्रमाणम्। अनुमितेः करणं हि

अनुमानम्। परामर्शजन्यं ज्ञानम् अनुमितिः तत्करणमनुमानम्। व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा वह्निव्याप्यधूमवान् अयं पर्वतः इति परामर्शः। तज्जन्यं पर्वतो वह्निमान् धूमात् इति ज्ञानम् अनुमितिः। एवम् अनुमितौ व्याप्तिज्ञानस्य अपेक्षा वर्तते। व्याप्तिज्ञानं च हेतुसाध्ययोः सामानाधिकरण्यम्। अतः साहचर्यनियमो व्याप्तिरित्युच्यते।

अयं हेतुः द्विप्रकारकः सद्धेतुः असद्धेतुश्च। यत्र व्याप्तिः पक्षधर्मताज्ञानम् इत्युभयं वर्तते सः सद्धेतुः। हेतुः साध्यव्याप्यः भवेत्, स च हेतुः पक्षे भवेत् तेन तस्य सद्धेतुरिति नाम। असद्धेतुः सः यत्र व्याप्तिपक्षधर्मतयोः एकः न भवेत् द्वे वा न भवेतां। अस्यैव असद्धेतोः दुष्टहेतुः हेत्वाभासः इति वा नाम। व्याप्तिपक्षधर्मतारहितः हेतुः हेत्वाभासः इत्यर्थः।

**हेत्वाभासलक्षणम्**

हेतोराभासाः हेत्वाभासाः हेतुदोषा इत्यर्थः। अनुमाने हेतुः प्रधानभूतो भवति। हेतुना साध्यस्य अनुमितिः भवति। हेतुः व्याप्तिपक्षधर्मताविशिष्टो यदि भवति तदानीं सः सद्धेतुः भवति। अपि च यदि पक्षे साध्यं वर्तते चेत् हेतुः सद्धेतुर्भवति। पक्षवृत्तित्वं सपक्षवृत्तित्वं विपक्षावृत्तित्वम् अबाधितत्वम् असत्प्रतिपक्षितत्वम् इति पञ्चधर्मविशिष्टः हेतुः सद्धेतुर्भवति। केनापि अंशेन वैकल्यं भवति चेदेव हेतुः असद्धेतुरिति उच्यते।

हेत्वाभासशब्दस्य द्वेधा व्युत्पत्तिः प्रदर्शयितुं शक्यते। प्रथमा व्युत्पत्तिः हेतोः आभासाः इति हेत्वाभासाः अनया व्युत्पत्त्या हेत्वाभासशब्दस्यार्थो हि हेतुदोषाः। द्वितीया व्युत्पत्तिः हेतुवद् आभासन्ते हेत्वाभासाः इत्यनया व्युत्पत्त्या हेत्वाभासशब्दार्थः दुष्टहेतवः। हेतुदोषाः पञ्च भवन्ति व्यभिचारः, विरोधः, सत्प्रतिपक्षत्वम्, असिद्धिः बाधश्चेति।

**हेत्वाभासविभागाः**

न्यायदर्शने न्यायसूत्रेषु पञ्च हेत्वाभासाः सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसमातीतकालाश्चेति निर्दिष्टाः सन्ति। वैशेषिकदर्शने त्रयो हेत्वाभासाः कीर्तिताः सन्ति असिद्धः सन्दिग्धः विरुद्धश्चेति। न्यायवैशेषिकप्रकरणग्रन्थे तर्कसंग्रहग्रन्थे हेत्वाभासस्य विभागः एवं कृतोऽस्ति सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः इति। तथाहि उक्तं कारिकावल्याम्-

**"अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः।**
**कालात्ययापदिष्टश्च हेत्वाभासस्तु पञ्चधा॥"[1] इति।**

अत्र एते एव पञ्च हेत्वाभासाः सलक्षणं सोदाहरणञ्च प्रपञ्चयिष्यन्ते। व्यभिचारदोषः यत्र हेतावस्ति सः हेतुः सव्यभिचारः व्यभिचारीशब्देन वा अभिधीयते। विरोधदोषः यत्र हेतौ वर्तते सः विरुद्धः। सत्प्रतिपक्षदोषः यत्र हेतौ वर्तते सः सत्प्रतिपक्षितः सत्प्रतिपक्षो वा। असिद्धिदोषयुक्तः हेतुः असिद्धः तथा बाधदोषदुष्टः हेतुः बाधितः। एवं पञ्चविधदोषाः, दुष्टहेतवश्च पञ्च इति आयातम्।

हेत्वाभासः व्याप्तिग्रहणपरामर्शप्रतिबन्धकत्वेन अनुमानप्रतिबन्धको भवति सर्वदा। यथाक्रमं पञ्च हेत्वाभासाः प्रस्तूयन्ते लक्षणोदाहरणपुरःसरम् अधस्तात्।

[1] कारिकावली, श्लोकसंख्या ७१

**१. सव्यभिचारः**

प्रथमः हेत्वाभासो हि सव्यभिचारः। अयम् अनैकान्तिकः हेत्वाभासः इत्यपि उच्यते। प्राचीननैयायिकैः सव्यभिचारहेत्वाभासः अनैकान्तिकशब्देन उच्यते। अर्वाचीनाः तमेव सव्यभिचारमिति नाम्ना वदन्ति। सव्यभिचारहेत्वाभासस्य त्रयः प्रकाराः ते च साधारणः असाधारणः अनुपसंहारी चेति। तथाह्युक्तं कारिकावल्यां-

**"आद्यः साधारणस्तु स्यादसाधारणकोऽपरः।**

**तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत्॥"[1] इति।**

**साधारणः**- साधारणसव्यभिचारलक्षणं हि साध्याभाववद्वृत्तिः साधारणः इति। साध्याभावाधिकरणे यः हेतुः वर्तते सः साधारणः। यत्र साध्यं नास्ति तत्र यदि हेतुस्तिष्ठति तर्हि सः साधारणो भवति। पर्वतो वह्निमान् धूमात् इत्यस्मिन् प्रसिद्धोदाहरणे वयं पश्यामः यत्र यत्र धूमः तत्र तत्र वह्निः इति साहचर्यग्रहो भवति। धूमः वह्न्यधिकरणे भवत्येव तादृशम् अधिकरणं न लभ्यते यत्र वह्न्यभावः तिष्ठति धूमोऽपि तिष्ठति। अत्र धूमरूपः सद्धेतुः साध्याभावाधिकरणे न तिष्ठति। तर्हि अस्य साधारणस्योदाहरणं किमिति चेदुच्यते अनुमानवाक्यं पर्वतो वह्निमान् द्रव्यत्वात् इति। अत्र अनुमानवाक्ये पक्षः पर्वतः, वह्निः साध्यम्, द्रव्यत्वं हेतुः। अत्र साध्यभूतो यः वह्निः तस्याभावः वह्न्यभावः सरोवरे वर्तते तत्रैव द्रव्यत्वरूपः हेतुः वर्तते। अतो द्रव्यत्वहेतोः साध्याभाववति विद्यमानत्वात् सः असद्धेतुः। अस्यैव साधारणसव्यभिचार इति नाम।

**असाधारणः-** सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिः असाधारणः। पर्वतो वह्निमान् धूमाद् इत्यस्मिन् प्रसिद्धे उदाहरणे पक्षसपक्षविपक्षाणां लक्षणानि उच्यन्ते। तत्र सन्दिग्धसाध्यवान् पक्षः। अर्थात् साध्यस्य सन्देहः यत्र अस्ति सः पक्षः। पर्वतो वह्निमान् धूमादित्युदाहरणे धूमः हेतुः। धूमवान् पर्वतः अत्र पक्षः। यतो हि धूमवति पर्वते साध्यस्य सन्देहो वर्तते। सपक्षो हि निश्चितसाध्यवान्। यत्र साध्यस्य निश्चयेन उपस्थितिः वर्तते सः सपक्षः। वह्निरूपसाध्यस्य निश्चयेन उपस्थितिः महानसेऽस्ति अतः महानसं हि सपक्षः। विपक्षः स यत्र निश्चयेन साध्यस्य अभावो वर्तते। निश्चितसाध्याभाववान् विपक्ष इति तल्लक्षणम्। साध्यभूतवह्नेः निश्चयेन अभावः ह्रदे विद्यते अतो जलह्रदः विपक्षः।

असाधारणः हेत्वाभासः तत्र अनुमाने अस्ति यत्र हेतुः केवलं पक्षे एव वर्तते। पक्षमात्रवृत्तिः हेतुः असाधारणः। अस्य उदाहरणं हि- शब्दो नित्यः शब्दत्वादिति। अस्मिन् अनुमानवाक्ये शब्दो पक्षः, शब्दत्वं हेतुः, नित्यत्वं साध्यम्। शब्दत्वहेतुः शब्दमात्रवृत्तिः अतः सः असाधारणः। शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति इत्युक्तं तर्कसंग्रहे।

**अनुपसंहारी**- अनैकान्तिकेषु चरमः अनुपसंहारी हेत्वाभासः। अन्वयव्यतिरेकदृष्टान्तरहितः अनुसंहारी इति अनुपसंहारिणो लक्षणं तर्कसंग्रहोक्तदिशा। यत्र हेतौ अन्वयदृष्टान्तः, अपि च व्यतिरेकदृष्टान्तः न संभवतः स भवति अनुपसंहारी हेतुः। सर्वम् अनित्यं प्रमेयत्वात् इत्यस्मिन् अनुमानवाक्ये सर्वस्यापि पक्षत्वात् कुत्रापि अंशे दृष्टान्तः प्रदातुं न शक्यते। सर्वोऽपि लोके प्रमेयः यतो हि ईश्वरस्य ज्ञानविषयः। अतो दृष्टान्तरहितत्वाद् अनुपसंहारी अयं हेत्वाभासः।

---

[1] कारिकावली, श्लोकसंख्या ७२

### २. विरुद्धः

हेत्वाभासेषु द्वितीयो विरुद्धः। साध्याभावव्याप्तो हेतुः विरुद्धः इति तल्लक्षणं प्रोक्तं तर्कसंग्रहे। साध्याभावस्य व्याप्यो यः हेतुः स भवति विरुद्धः। हेतुः सर्वदा साध्यस्य व्याप्यो भवेद् यथा वह्निव्याप्यः धूमः। किन्तु हेतुः यदि साध्यस्य व्याप्यो न भूत्वा साध्याभावस्य व्याप्यो भवेत् तदा स विरुद्धः। हेतुः विरुद्धः अतः हेत्वाभासोऽसि विरुद्धः। शब्दो नित्यः कृतकत्वात् इत्यस्मिन् उदाहरणे साध्यं नित्यत्वं, कृतकत्वं च हेतुः। नित्यत्वाभावः अनित्यत्वं तेन व्याप्तम् अस्ति कृतकत्वम्। यतो हि यत् कृतकं तद् अनित्यं यत्र कृतकत्वं तत्र अनित्यत्वमिति नियमात्। अतः अत्र कृतकत्वहेतुः साध्याभावव्याप्तत्वेन साध्यविरोधी। साध्यविरुद्धत्वेन कृतकत्वहेतुः विरुद्धः।
अन्यदेकम् उदाहरणं घटो नित्यः कार्यत्वात्। यत्र यत्र कार्यत्वं तत्र तत्र नित्यत्वम् एतादृशी व्याप्तिः न सम्भवति। कार्यत्वहेतुः नित्यत्वस्य व्याप्यो न भवति अपि तु नित्यत्वाभावस्य व्याप्यभूतः सः। व्याप्यं कार्यत्वं, व्यापकः नित्यत्वाभावः। यत्र यत्र कार्यत्वं तत्र तत्र नित्यत्वाभावः इयं व्याप्तिः सम्भवति। अतः साध्याभावव्याप्तः हेतुः विरुद्धः।

### ३. सत्प्रतिपक्षः

हेत्वाभासेषु तृतीयस्तावत् सत्प्रतिपक्षः। सत्प्रतिपक्षहेत्वाभासे अनुमानद्वयं भवति। वादिप्रतिवादिनौ द्वावपि अत्र भवतः। यस्य हेतोः साध्याभावसाधनाय द्वितीयः विरोधी हेतुः विद्यमानो भवति सः सत्प्रतिपक्षः। अनुमानद्वये एकः पक्षः अपरः प्रतिपक्षः। द्वयोः अनुमानयोः एक एव पक्षः। एकस्मिन्नेव पक्षे एकः हेतुः यस्य साध्यस्य साधनाय प्रवर्तते तत्र अपरः तस्य साध्यस्य अभावं साधयितुं प्रवर्तते तदैव हेतुः सत्प्रतिपक्षो भवति।

एकेन उदाहरणेन अयं हेत्वाभासः स्पष्टीक्रियते। तथाहि अनुमानद्वयं हि शब्दः नित्यः श्रावणत्वात् शब्दत्ववत्, शब्दः अनित्यः कार्यत्वाद् घटवत् चेति। वादी वदति शब्दो नित्यः प्रतिवादी ब्रूते शब्दोऽनित्यः। वादिनः शब्दत्वरूपः हेतुः शब्दस्य श्रावणत्वं साधयितुम् उपात्तः। प्रतिवादी कार्यत्वेन हेतुना शब्दस्य अनित्यत्वं साधयितुं यतते। प्रथमे अनुमाने शब्दः पक्षः, नित्यत्वं साध्यं, श्रावणत्वं हेतुः। श्रावणः श्रवणेन्द्रियग्राह्यः शब्दः, श्रावणत्वं शब्दे। हेतुः पक्षे अस्ति अपि च प्रदत्ते दृष्टान्तेऽपि भवेत्। शब्दत्वं दृष्टान्तः तत्र श्रावणत्वं भवेत्। न्यायशास्त्रसिद्धान्तानुसारं श्रोत्रेन्द्रियेण शब्दसाक्षात्कारसमकालं शब्दत्वजातेरपि प्रत्यक्षं भवति। शब्दत्वे श्रावणत्वरूपः हेतुः, नित्यत्वरूपं साध्यं विद्यते। शब्दत्वजातिः नित्या।

द्वितीयम् अनुमानं शब्दोऽनित्यः कार्यत्वात्, घटवत् इति। अनुमाने पक्षः शब्दः, साध्यम् अनित्यत्वं, कार्यत्वं हेतुः, घटः दृष्टान्तः। शब्दे कार्यत्वम् अस्ति यतो हि शब्दः कण्ठताल्वाद्यभिघातेन उत्पद्यते। दृष्टान्ते घटेऽपि कार्यत्वरूपहेतुः अनित्यत्वरूपं साध्यं च वर्तते। अनुमानवाक्यद्वये आगतौ द्वौ पक्षौ सत्प्रतिपक्षौ। अत्र अनुमितेः पूर्वं परामर्शज्ञानशरीरम् इत्थं भवेत् 1. नित्यत्वव्याप्यश्रावणत्ववान् शब्दः, 2. अनित्यत्वव्याप्यकार्यत्ववान् शब्दः चेति। द्वावपि हेतू साध्यं साधयितुं प्रवृत्तौ परन्तु एतौ सत्प्रतिपक्षौ। यस्य हेतोः साध्याभावस्य साधकं हेत्वन्तरमुपस्थितं भवति स हेतुः प्रतिपक्षेण विरोधिना हेतुना सह वर्तत इत्यसौ सत्प्रतिपक्षपदेन उच्यते। श्रावणत्वहेतोः साध्यं नित्यत्वं तदभावोऽनित्यत्वं तत्साधनाय कार्यत्वहेतुः विद्यमानः। अतः श्रावणत्वहेतुः सत्प्रतिपक्षः। अपरत्र कार्यत्वहेतोः साध्यम् अनित्यत्वं तदभावो नित्यत्वं तत्साधनाय विरोधी श्रावणत्वहेतुः विद्यमानः अतः श्रावणत्वहेतुः सत्प्रतिपक्षः। द्वयोरपि हेतोः समानसामर्थ्यात् द्वावपि सत्प्रतिपक्षौ।

**४. असिद्धः**

आश्रयासिद्धाद्यन्यतमत्वम् असिद्धत्वस्य लक्षणम्। असिद्धस्य विभागत्रयं वर्तते आश्रयासिद्धः, स्वरूपासिद्धः व्याप्यत्वासिद्धश्चेति।

**आश्रयासिद्धः**- यस्य आश्रय एव असिद्धः स आश्रयासिद्धः। गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् इत्युदाहरणम् अस्य। गगनारविन्दरूपस्य हेतोः आश्रयस्य अप्रसिद्धत्वात् हेतुः अत्र दुष्टः।

**स्वरूपासिद्धः**- पक्षे हेत्वभावः स्वरूपासिद्धः हेत्वाभासः। हेतुः पक्षे भवति चेदेव साध्यसिद्धिः भवति। परन्तु तादृशः हेतुः यः पक्षे न भवति सः स्वरूपासिद्धः। अत्र उदाहरणं शब्दः अनित्यः चाक्षुषत्वात् इति। अत्र पक्षः शब्दः, साध्यम् अनित्यत्वम्, हेतुः चाक्षुषत्वम्। चाक्षुषत्वहेतुना शब्दे अनित्यत्वस्य सिद्धिः इष्टा। चाक्षुषत्वं हेतुः चाक्षुषे वर्तते। चाक्षुषः चक्षुरिन्द्रियग्राह्यः रूपादिः। शब्दः श्रावणः श्रवणेन्द्रियग्राह्यः, शब्दे श्रावणत्वम् अस्ति चाक्षुषत्वं नास्ति। अतः चाक्षुषत्वरूपहेतोः पक्षे शब्दे अविद्यमानत्वात् चाक्षुषत्वहेतुः दुष्टः स्वरूपासिद्धदोषयुक्तः।

न्यायवैशेषिकप्रकरणग्रन्थस्य तर्कसंग्रहस्य चन्द्रजसिंहविरचितपदकृत्यव्याख्यायां स्वरूपासिद्धस्य भेदाः परिकल्पिताः। ते चत्वारो भेदा भवन्ति शुद्धासिद्धः, भागासिद्धः, विशेषणासिद्धः, विशेष्यासिद्धश्चेति। एतेषु शुद्धासिद्धस्य उदाहरणम् उपर्युक्तमेव। पक्षैकदेशावृत्तिः हेतुः भागासिद्धः। उदाहरणम्- उद्भूतरूपादिचतुष्टयं गुणः रूपत्वात् इति। रूपत्वहेतुः उद्भूतरूपादिचतुष्टयस्य एकस्मिन् भागे उद्भूतरूपमात्रे वर्तते न तु रसादिषु अपि। अत्र रूपत्वहेतुः भागासिद्धः। हेतोः विशेषणं पक्षे असिद्धश्चेत् सः भागासिद्धः। उदाहरणं हि- वायुः प्रत्यक्षः रूपवत्वे सति स्पर्शवत्वात् इति। पक्षे वायौ हेतोः रूपवत्वमिति विशेषणम् असिद्धम् अतः अत्र विशेषणासिद्धः हेत्वाभासः। विशेष्यासिद्धस्य हेत्वाभासस्य उदाहरणं हि- वायुः प्रत्यक्षः स्पर्शवत्वे सति रूपवत्वात् इति। वायोः रूपवत्वमिति विशेष्यम् असिद्धम्।

**व्याप्यत्वासिद्धः**- सोपाधिको हेतुः व्याप्यत्वासिद्धः। यः हेतुः उपाधिना सह वर्तमानः सः सोपाधिकः तस्यैव नामान्तरं व्याप्यत्वासिद्धः हेत्वाभासः। अयमपि हेतुः न सद्धेतुः उपाधेः विद्यमानत्वात्। उपाधिर्नाम साध्यव्यापकत्वे सति साधनाव्यापकत्वम् इति। साध्याधिकरणे यस्य अभावो न भवेत् अपि च साधनाधिकरणे यस्याभावो भवेत् स उपाधिः। साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपोपाधिना सह वर्तमानो हेतुः सोपाधिको हेतुः। व्याप्यत्वासिद्धस्य उदाहरणं हि पर्वतो धूमवान् वह्निमत्वात् अत्र आद्रेन्धनसंयोग उपाधिः अस्ति। आद्रेन्धनसंयोगः साध्यस्य धूमस्य व्यापकः अस्ति। यत्र यत्र धूमः तत्र तत्र आद्रेन्धनसंयोगः इति आद्रेन्धनसंयोगे साध्यव्यापकत्वम् अस्ति। साधनस्य वह्नेः अव्यापकमपि अस्ति। अयोगोलके वह्निसत्त्वेऽपि आद्रेन्धनसंयोगो नास्ति। अतः अनुमानघटकः हेतुः आद्रेन्धनसंयोगरूपोपाधिना युक्तः अस्ति। अतः सोपाधिकः अयं हेतुः हेत्वाभासपदेन उच्यते।

**५. बाधितः**

अयम् अन्तिमः हेत्वाभासः। बाधितस्य लक्षणं हि यस्य साध्याभावः प्रमाणान्तरेण निश्चितः सः बाधितः इति। यस्य हेतोः साध्यस्य अभावः पक्षे निश्चीयते सः बाधितः। साध्यस्य बाधः पक्षे अस्ति परन्तु हेत्वाभासप्रकरणत्वात् हेतुः दुष्टः इत्युच्यते। उदाहरणं हि वह्निः अनुष्णः द्रव्यत्वात् इति। अत्र पक्षःवह्निः अनुष्णत्वं साध्यं द्रव्यत्वं हेतुः। द्रव्यत्वहेतुना पक्षे वह्नौ अनुष्णत्वरूपं साध्यं साधयितुम् इष्यते। परन्तु वह्नौ साध्याभावः उष्णत्वं प्रत्यक्षप्रमाणेन पूर्वतः निश्चितमस्ति। द्रव्यत्वहेतोः साध्याभावः पक्षे अस्ति इत्यतः द्रव्यत्वहेतुः बाधितः।

एवं तर्कसंग्रहोक्तदिशा लक्षणोदाहरणप्रदानपुरःसरं संक्षेपेण पञ्चानां हेत्वाभासानां स्वरूपम् उक्तम् अस्मिन् लघुप्रबन्धे।

**उपसंहृतिः**

अनुमानं प्रमुखं प्रमाणं न्यायविदाम्। अनुमाने हेत्वाभासस्य महती भूमिका अस्ति। दोषबुद्धिरपि शुद्धं ज्ञानं सम्पादयितुं सहकरोति। अनुमाने दोषविषयकनिश्चयः हेत्वाभासानां लक्षणज्ञानाद्भवति। तदर्थं हेत्वाभासोऽपि चर्चितः ग्रन्थेषु। अनुमितौ व्याप्तिज्ञानं प्रधानम्। यत्र व्याप्तिः अस्ति सः सद्धेतुः। सामानाधिकरण्यनियम एव व्याप्तिः। हेतुसाध्ययोः सामानाधिकरण्यज्ञानम् अनुमित्यर्थम् अपेक्षते। यत्र हेतौ सामानाधिकरण्यम् अस्ति परन्तु नियमः भज्यते सः सव्यभिचारः। विरुद्धे सामानाधिकरण्यमेव नास्ति। हेतुः पक्षे नास्ति चेत् सः असिद्धः। साध्यः पक्षे न भवति चेत् सः बाधितः। इत्थमतीव सरलरीत्या हेत्वाभासविषये प्रस्तुतमिति शिवम्।

**<u>आश्रितग्रन्थतालिका</u>**


१. अन्नंभट्टः, “तर्कसंग्रहः”, श्रीकृष्णवल्लभाचार्यः, (व्याख्याकारः), चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, २०१९।
२. भट्टाचार्यः, श्रीविश्वनाथपञ्चाननः, “न्यायसिद्धान्तमुक्तावली”, मुसलगांवकर, (व्याख्याकारः) डा.श्रीगजाननशास्त्री, (सम्पादकः), चौखम्बा सुरभारती प्रकाशन, वाराणसी।
३. मिश्रः, श्रीकेशवः, “तर्कभाषा”, मुसलगांवकर, (व्याख्याकारः), डा.श्रीगजाननशास्त्री, (सम्पादकः), चौखम्बा सुरभारती प्रकाशन, वाराणसी।
४. भट्टाचार्यः, श्रीविश्वनाथपञ्चाननः, “कारिकावली” (सिद्धान्तमुक्तावलीसहिता), शास्त्री, जीवरामः, (सम्पादकः), निर्णयसागरमुद्रणालयः, मुम्बई, १९५५।
५. आचार्यः, माधवः, “सर्वदर्शनसंग्रहः”, ऋषि, शर्मा, प्रो., उमाशङ्करः, (भाष्यकारः), चौखम्बा विद्याभवन, वाराणसी।
६. आचार्यः, महाप्राज्ञः, “भिक्षुन्यायकर्णिका”, जैन विश्वभारती, २००७।
७. मिश्रः, वाचस्पतिः, “न्यायवार्तिकतात्पर्यटीका”, चौखम्बा संस्कृत भवन, वाराणसी।
८. महर्षिः, गौतमः, “न्यायसूत्रम्”, झा, डा., महेशः, (सम्पादकः), चौखम्बा संस्कृत सीरीज आफिस, वाराणसी।
९. भट्टः, जयन्तः, “न्यायमञ्जरी”, शर्मा, सूर्यनारायणः, (सम्पादकः), चौखम्बा संस्कृत सीरिज आफिस, वाराणसी।
१०. धिताल, डा., विश्वनाथः, “तर्कसंग्रहसर्वस्वम्”, श्रीदक्षिणामूर्ति मठ प्रकाशन, वाराणसी।


**********

# भामत्यनुसारेण अध्यासभाष्यम्-तथा लोके समन्वयः

**विद्वान् राहुल राजशेखर भट्टः**
सहायकप्राध्यापकः (संविदा), अद्वैतवेदान्तविभागः
राजीवगान्धीपरिसरः, शृङ्गेरि

**Abstract**

प्रसिद्धं च वाचस्पतिमिश्राणां भामत्यां वाक्यं यत् असन्दिग्धम्-अप्रयोजनं न तत् प्रेक्षावतां प्रतिपित्सागोचरः, यथा समनस्केन्द्रियसन्निकृष्टः स्फीतालोकमध्यवर्ती घटः, करटदन्ताः वा?[1] स आत्मा आकीटपतङ्गेभ्यः आ च देवर्षिभ्यः प्राणभृन्मात्रस्य इदङ्कारास्पदेभ्यः देहेन्द्रियमनोबुद्धिविषयेभ्यः विवेकेन अहम् इति असन्दिग्धरुपेण अपरोक्षानुभवसिद्धः इति कृत्वा न जिज्ञासास्पदम्। न च कश्चित् विपर्यस्यतिन अहमेव इति। तथा च प्रयोगः- ब्रह्म मुमुक्षुविचार्यम् असन्दिग्धत्वात् निष्प्रयोजनत्वाच्च काकदन्तवत् इति। विषयाभावे च प्रयोजनमपि न सम्भवति। विषयप्रमा हि अत्र साक्षात् प्रयोजनम्। परमं प्रयोजनं तु प्रत्यगभिन्नब्रह्मविषयाज्ञाननिवृत्तिपूर्वकं जीवस्य नित्यसिद्धब्रह्मात्मना अवस्थानम्। तस्मात् विषयप्रोजनयोः अभावेन शास्त्रं न आरम्भणीयम् इति अभिप्रेत्य विषयप्रयोजननिर्णयोपयोगिनम् अध्यासम् "युष्मदस्मत्-प्रत्ययगोचरयोः[2]" इत्यतः "नैसर्गिकोयं लौकिकव्यवहारः"[3] इत्यन्तेन भाष्यभागेन भाष्यकाराः भगवत्पादश्रीशङ्कराचार्याः आक्षिप्य परिहरन्ति।

**Key words** :-

1) **अध्यासः** – अतस्मिन् तद्बुद्धिः अध्यारोपः सः एव अध्यासः।
2) **ब्रह्म** – निर्गुणं निराकारं परं पदम् ।
3) **सगुणं ब्रह्म** – उपासनार्थं विद्यमानम् ।
4) **ख्यातिः** – भ्रमात्मकं ज्ञानम् ।
5) **मुमुक्षुः** – यस्य मोक्षमार्गे सन्तता प्रवृत्तिः विद्यते सः।
6) **भामती** - श्रीवाचस्पतिमिश्रविरचितः ब्रह्मसूत्रशाङ्करभाष्यस्य व्याख्यानात्मकः ग्रन्थः।

प्रसिद्धं च वाचस्पतिमिश्राणां भामत्यां वाक्यं यत् असन्दिग्धम्-अप्रयोजनं न तत् प्रेक्षावतां प्रतिपित्सागोचरः, यथा समनस्केन्द्रियसन्निकृष्टः स्फीतालोकमध्यवर्ती घटः, करटदन्ताः वा?[4] स आत्मा आकीटपतङ्गेभ्यः आ च देवर्षिभ्यः प्राणभृन्मात्रस्य इदङ्कारास्पदेभ्यः देहेन्द्रियमनोबुद्धिविषयेभ्यः विवेकेन अहम् इति असन्दिग्धरुपेण अपरोक्षानुभवसिद्धः इति कृत्वा न जिज्ञासास्पदम्। न च कश्चित् विपर्यस्यतिन अहमेव इति। तथा च प्रयोगः- ब्रह्म मुमुक्षुविचार्यम् असन्दिग्धत्वात् निष्प्रयोजनत्वाच्च काकदन्तवत् इति। विषयाभावे च प्रयोजनमपि न सम्भवति। विषयप्रमा हि अत्र साक्षात् प्रयोजनम्। परमं प्रयोजनं तु प्रत्यगभिन्नब्रह्मविषयाज्ञाननिवृत्तिपूर्वकं जीवस्य नित्यसिद्धब्रह्मात्मना अवस्थानम्। तस्मात् विषयप्रोजनयोः अभावेन शास्त्रं न आरम्भणीयम् इति अभिप्रेत्य

[4] भामतीपङ्क्तिः।

 ISSN : 2249-538X

विषयप्रयोजननिर्णयोपयोगिनम् अध्यासम् “युष्मदस्मत्-प्रत्ययगोचरयोः[1]” इत्यतः “नैसर्गिकोयं लौकिकव्यवहारः”[2] इत्यन्तेन भाष्यभागेन भाष्यकाराः भगवत्पादश्रीशङ्कराचार्याः आक्षिप्य परिहरन्ति।

तत्रादौ प्रत्ययोत्तरपदयोश्च इति सूत्रेण प्रत्यये च उत्तरपदे च परतः युष्मदस्मदोः मपर्यन्तस्य त्वमादेशौ स्तः इति विधानात् त्वदीयं मदीयं त्वत्पुत्रः, मत्पुत्रः इतिवत् त्वन्मत्प्रत्यतगोचरयोः इति स्यात् खलु आक्षेपः। तत्र भाष्ये कथं विग्रहः इदमस्मत् प्रत्ययगोचरयोः इति स्थाने कथं युष्मद्-अस्मत् इति प्रयोगः कथम् ? इदं शब्दस्य अस्मदर्थे प्रयोगः लोके वेदे च बहुकृत्वः श्रूयते – “इमे वयमास्महे” “इमे विदेहाः” “अयमहमस्मि” च प्रयोगदर्शनात् अस्मच्छात्रविरोधीति मत्वा युष्मच्छब्दः प्रयुक्तः। अथ यत् असन्दिग्धम् अप्रयोजनं च न तत् प्रेक्षावतां प्रतिपित्सागोचरं, यथा समनस्केन्द्रियसन्निकृष्टः स्फीतालोकमध्यवर्ती घटः, करटदन्ताः वा। तथा च प्रयोगः – शास्त्रम् आरब्धव्यम् विषयप्रयोजनवत्वात्, भोजनादिवत्। **अथवा** शास्त्रं प्रयोजनवत् बन्धवितर्कज्ञानहेतुत्वात् रज्जुरियमित्यादिवाक्यवत्।

**शङ्काग्रन्थः** - युष्मदस्पदप्रत्ययगोचरयोः इत्यारभ्य मिथ्येति भवितुं युक्तम् इत्यन्तं भाष्यम् अध्यासः नोपपद्यते इति शङ्काम् उत्थापयति।

भामतीकारः- अत्र च युष्मदस्मद्-इत्यादिः मिथ्या भवितुं युक्तम् इत्यन्तः शङ्काग्रन्थः।

अस्य अयं भावः - आत्मानात्मनोः इतरेतराध्यासनिमित्तः अयं सर्वोऽपि व्यवहारः इति यदुच्यते तन्न युक्तम्। कुतः इति चेत् अध्यासो हि नाम भ्रान्त्या समारोपः। स च विरुद्धास्वभावयोः न भवितुमर्हति अपि तु समानस्वभावयोरेव। आत्मानात्मनौ हि परस्परं विरुद्धस्वभावकौ। आरोपस्तु समानस्वभावयोः एव भवति। शुक्तिरजतयोरिव न तु विरुद्धस्वभावयोः आत्मानात्मनोः। तमः प्रकाशाविव आत्मानात्मानौ परस्परं विरुद्धस्वाभावौ। तत्रेदमनुमानम् – आत्मानात्मनौ विरुद्धस्वभाविकौ युष्मदस्मद्-प्रत्ययगोचरत्वात् विषयविषयिभावाच्च तमः प्रकाशवत् इति। यथा चक्षुनिरोधकत्वं तमसः स्वभावः प्रकाशस्य तु तदनुग्राहकत्वम् इति तद्विरुद्धः। एवमत्रापि आत्मानात्मनोः विरुद्धस्वभावता एव प्रसिद्धा। अत्र आत्मा तावत् अस्मत्प्रयगोचरः। अहमितिप्रत्ययः अस्मत्प्रत्ययः। त्वम् इति प्रत्ययः युष्मत्प्रत्ययः सर्वो हि आत्मानम् अहम अहमिति प्रत्येति। अस्मत्प्रत्ययं विहाय कदाचिदपि आत्मा व्यवहारगोचरः न भवति। प्रत्ययान्तरे अस्मत्प्रत्ययगोचरत्वं न भवति। अतः अस्मत्प्रत्ययगोचरः आत्मा। अनात्मा देहादिः, बाह्यं च जगत्। एवं च प्रतीयमानः इदमितिप्रत्ययेनैव व्यवहर्तुं शक्यते न कदापि अहमिति प्रत्ययविषयत्वेन। पुनश्च सर्वथापि अस्मत्प्रत्ययसमानाधिकरणः एव युष्मत्प्रत्ययेनापि भाव्यम् इति तु नास्ति। हे पुत्र, अद्य त्वं कुत्र गच्छसि? भो वृक्ष, मधुराणि फलानि किं ददासि नः, अरे देह, त्वं शस्त्रेण च्छेद्यः,असिना च दाह्यः इत्यादिवत् सर्वत्र युष्मत्प्रत्ययत्वेन प्रत्येतुम् अवकाशः वर्तते। अहमिति प्रत्ययेनैव प्रत्येतव्यत्वात्। इतश्च अनयोः आत्मानात्मनोः विरुद्धस्वभावता स्फुटं प्रतीयते। यथा अनात्मा सर्वदा विषयत्वव्याप्तः। आत्मा तु विषयित्वव्याप्तः। तथा हि अयमात्मा विषयित्वेनैव अस्माकं ज्ञानपथम् आहोरति। आत्मातिरिक्तं तु सर्वं आत्मचैतन्यस्य विषयः एव। आत्मा च विषयी। घटपटादीनां विषयाणाम् आत्मनिरपेक्षं सत्वं नास्ति। आत्मा तु न तथा। अतः भाष्यकारः एवमाह - श्रुतिचैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म स

[1] ब्रह्मसूत्रभाष्यम्

[2] ब्रह्मसूत्रभाष्यम्

यथा सैन्धवघनः अनन्तरः, अभावः, कृत्सः, प्रज्ञानघनः, एव इति। अतः उक्तम् -विरुद्धस्वाभावानाम् इतरेतरानुपपत्तिः[1]। इतरस्य विषयस्य इतरभावानुपपत्तिः विषयित्वानुपपत्तिः। इतरस्य च विषयिणः इतरभावानुपपत्तिः। अत्रेदं तत्त्वम् – विषयस्य विषयिणश्च ये धर्माः ते तद्धर्माः। तेषामितरेतराभावानुपपत्तिः। इतरेषां विषयधर्माणाम् इतरभावानुपपत्तिः विषयिधर्मत्वानुपपत्तिः। तथा च इतरेषां विषयिधर्माणाम् इतरभावानुपपत्तिः विषयधर्मत्वानुपत्तिश्च।

अत्र भामतीकारमतम्। - ननु कथं विरुद्धस्वभावयोः पदार्थयोः इतरेतरभावानुपपत्तिः। दृश्यते हि लोके विरुद्धस्वभावयोः जपाकुसुमस्फटिकयोः परस्परं तादात्म्याध्यासस्म्भवेऽपि तद्धर्माणां लौहित्यादीनां स्फटिके कुसुमभिन्नत्वेऽपि इति चेत् उच्यते – स्फटिकजपाकुसुमयोः धर्मिणोः अत्यन्तं विरुद्धस्वभावता नास्ति। अतः तद्धर्माणां इतरेतरभावानुपपत्तिः न आकांक्षा। इह तु आत्मानात्मनोः अत्यन्तविरुद्धस्वभावयोः धर्मिणोः इतरेतरभावः इति शक्यते शङ्कितुमपि। धर्म्यधिना हि धर्माणां स्थितिः। तस्मात् आत्मानात्मनोः परस्परं विरुद्धस्वभावत्वात् तद्धर्माणामपि इतरेतरभावानुपपत्तिः इति सिद्धम्। अतः उक्तम् – तद्धर्माणां सुतराम् इतरेतरभावानुपपत्तिः।[2] किञ्च धर्माणां परस्पराध्यासः द्वेधा भवति, तत्र एकस्तु रूपवतोः द्रव्ययोः तद्धर्माणां परस्पराध्यासः। यथा रूपवति स्फटिकद्रव्यये जपाकुसुमस्य रक्तिमायाः ग्रहणम्। एतत्तु अत्मानात्मनोः न भवितुमर्हति। अन्यस्तु विचारः – धर्मिणोः तादात्म्याध्यासेन तद्धर्माणाम् अध्यासः सम्भवति। तप्ते लोहपिण्डे अग्निधर्मादीनां दाहकत्वाध्यासः। अयमपि प्रकारः आत्मानात्मनोः न सम्भति यतः एतयोः द्वयोरपि धर्मिणोः परस्परं भिन्नत्वात् विरुद्धत्वात् च इति कृत्वा तद्धर्माणाम् इतरेतरभावानुपपत्तिः इति भाष्यवाक्यं साधु सङ्गच्छते।

आत्मानात्मनोः परस्परविरुद्धयोरपि अध्याससम्भवप्रकारवर्णनम् –

**अत्रेदं विचार्यते** – अत्यन्तं विरुद्धस्वभावयोः आत्मानात्मनोः परस्परं तादात्म्याध्यासः वा तादात्म्याध्यासः वा भवितुं नार्हति इति आशङ्का। “यद्यपि......इत्यादि”[3]- ग्रन्थेन भाष्ये समुद्भाविता। सम्प्रति शङ्कायास्तस्याः इत्थं समाधानम्। “तथापि अन्योन्यस्मिन......” इत्यादिग्रन्थभागेन सिद्धान्तः उपस्थाप्यते। अत्रेदं तत्त्वम् – अत्र शङ्कायाः युक्तिसहितत्त्वेऽपि लोकानुभवानुसारेण युक्तिः प्रतिनेया भवति। किन्तु सर्वो हि लोकः अहं स्थूलः, अहं ब्राह्मणः, अहं ब्रह्मचारी इत्यादि व्यवहारस्य अस्य सामान्याकारप्रदर्शनम् अहमिदम् इति। अहम् इत्यस्मात् प्रत्ययगोचरस्य आत्मनः व्यवहारः। इदमिति युष्मत्प्रत्ययगोचरस्य आत्मनः व्यवहारः इति। अहं मनुष्यः इत्यत्र अस्मत्प्रत्ययः चिदात्मानं बोधयति। मनुष्यत्त्वं हि देहधर्मः न तु चिदात्मनः। स च युष्मत्प्रत्ययगोचरः। अतः द्वयोः प्रत्यययोः सामानाधिकरण्येन लोके दृश्यते- यथा ममायं पुत्रः, ममेदं गृहम्, ममेदं मित्रम् इत्यादि। आत्मनः पुत्रादिसम्बन्धः साक्षात् नास्ति। किन्तु। तत्सम्बन्धत्वं चिदात्मनः प्रत्येति व्यपदिशति च लोकः। एतादृशः प्रत्ययः/व्यपदेशे वा भाष्ये उक्तरीत्या अन्योन्यस्मिन् अन्योन्यधर्मान् च अध्यस्य प्रवर्तते। तस्मात् अस्मत्प्रत्ययगोचर-युष्मत्प्रत्ययगोचरयोः अन्योन्यस्मिन् अन्योन्यात्मकताम् अध्यस्य अस्मत्प्रत्ययगोचरे युष्मत्प्रत्यगोचरतां चिदात्मके जडात्मकताम् अध्यस्यैव व्यवहरति लोकः। किं निमित्तं लोकः एवं व्यवहरति चेत् भाष्ये – “इतरेतरविवेकेन

[1] ब्रह्मसूत्रभाष्यम् (अध्यासभाष्यम्)

[2] ब्रह्मसूत्रभाष्यम् (अध्यासभाष्यम्)

[3] ब्रह्मसूत्रभाष्यम् (अध्यासभाष्यम्)

अत्यन्तविविक्तयोः..."[1] इत्यादि ग्रन्थभागे एवमुक्तम् – चिदात्मा तावत् अत्र धर्मी। चिदात्मनः विरुद्धस्वभावः अनात्मा इति विविच्यनिर्धारणं तदभावः। एते चैतन्यस्य धर्माः – चैतन्यम्, कूटस्थत्वम्, विषयित्वम्, सत्यत्वनम्, सुखदुःखसंस्पर्शविधुरत्वम्, निरंशत्वम् इत्यादि। अनात्मनः धर्माः तु एवं भवन्ति। जडत्त्वम्, विकारित्त्वम्, विषयत्त्वम्, मिथ्यात्त्वम्, सुखदुःखात्मकत्त्वम्, सांशात्त्वम्। अमीषां धर्माणाम् अविवेकः अस्य धर्मिणः इमे धर्मी इति निर्धारणाभावः। सोऽयम् अविवेकः अध्यासे निमित्तम्। नैसर्गिकं मिथ्याज्ञानम् इत्युक्तम्। तथा हि सत्यानृते मिथुनीकृत्य इति। सत्यम्=आत्मवस्तु(अव्यभिचरितस्वरूपत्वात्)।

अनृतम्-देहादिप्रतीतिमत्त्वम्=(भ्रान्तिमात्रकल्पितस्वरूपत्वात्)। तयोः मिथुनीकरणम् एकमेव इदं वस्तु इति विपरीतग्रहणम्। यथा इदं रजतम् इति शुक्तिकां वस्तुतः विद्यमानां चाकचिक्यादिधर्मसाम्यात् इदमिति व्यपदेशार्ह-शुक्तिकायाः एव रजतम् ति व्यपदेशः, तत् स्वीकरणाय प्रवृत्तिः(विसंवादिप्रवृत्तिः)। एवं भ्रान्त्या व्यवहरति लोकः एवं पारमार्थिकसत्यम् अद्वितीयतत्त्वं पुनश्च मिथ्याज्ञानेन आकलितं नामरूपात्मकं शरीरादि च एकीकृत्य अहमिति व्यवहरति। पुनश्च आत्मा युष्मत्प्रत्ययापेतः। अतः अविषयत्तम्। आत्मनः अविषयत्वे कथम् अध्यासः? तत्प्रत्युच्यते- न तावत् अयं चिदात्मा एकान्तेन अविषयः, अस्मत्प्रत्ययगोचरत्वात्। यद्यपि परमार्थतः प्रत्यगात्मा स्वयं प्रकाशत्त्वात् अविषयः निरंशश्च तथापि अनीर्वचनीयः अनाद्यविद्यावशात् अवच्छिन्नः इव अभिन्नोऽपि भिन्न इव, अकर्ता अपि कर्ता इव एवम् अविषयोपि अस्मत्प्रत्ययविषयः इव प्रतिभाति। आत्मनः अपरोक्षत्त्वं च अवश्यमभ्युपेतव्यम्। तदप्रथायां सर्वस्य अप्रथनेन जगदान्ध्यप्रसङ्गात्। तथा च श्रुतिः तमेव भान्तम् अनुभाति सर्वं तस्य भास सर्वमिदं विभाति।[2] पुनश्च पुरोवस्थिते एव विषये विषयान्तरमध्यसितव्यम् त्यपि नास्ति यथा अप्रत्यक्षेपि हि आकाशे बालाः तलमलिनताद्ध्यस्यन्ति एवम् अविरुद्दह आत्मानात्मनोः इतरेतराध्यासः। भामत्याम् अग्रे अहमिति स्फुटतरेण प्रतीयते अतः उपनिषदः उपचरितार्थाः स्युः इत्यादि-अग्रे आक्षिप्य परिहरन्ति अत्र विस्तरभयात् नात्र वितन्यते। आरम्भणाधिकारे अपि शास्त्रस्य प्राबाल्यं तदनुसारेण प्रत्यक्षादीनां नयनमित्यपि विचारः उपन्यस्तः।

**अध्यासलक्षणम् एवं लोकव्यवहारे अन्वयः-**

"अत्यन्तविविक्तयोःधर्मधर्मिणोः...."[3] इत्यादिग्रन्थभागेन इदमुपन्यस्यते। व्यवहारस्य अध्यासपूर्वकत्त्वं प्रदर्शयिष्यन् लक्षणं निरूपणं प्रवर्तते। निरूपयिष्यमाणे हि लक्षणे तल्लक्षणलक्षितः अध्यासः लोकव्ववहारे दृश्यते वा न वा इत्येतदवधारणं च क्रियते। स्मृतिरूपः परत्र पूर्वदृष्टावभासः इति ळक्षणम्। अन्यत्र वस्तुनि अन्यस्य अतद्रूपस्य अवभासः अध्यासः। उपसर्गार्थस्तु आधरः। धात्वर्थः सत्वम्। अध्यासो हि अधिष्ठानारोप्योभोभयविषयको भवति। तत्र लक्षणघटकेन परत्र इत्यनेन शुक्त्यादिकम् अधिष्ठानं पूर्वदृष्टपदेन च अध्यस्यमानं रजतादिकम् उपस्थाप्यते। एवं स्मर्यमाणसत्यरजतस्यैव परत्र शुक्तौ अवभासते इति न वक्तव्यम्। अन्यथाख्यातिप्रसङ्गः। अतः लक्षणं सदलकृत्यं निरूपणीयम्। स्मर्यते इति स्मृतिः स्मर्यमाणः इत्यर्थः। तस्य रूपमिव रूपम् अस्य इति। तेन स्मर्यमाणसदृशः इत्यर्थो लभ्यते। न तु स्मर्यमाणरूपत्त्वम्। सदृशत्त्वं वर्तते इति कृत्वा

---

[1] ब्रह्मसूत्रभाष्यम् (अध्यासभाष्यम्)

[2] कठोपनिषत्

[3] ब्रह्मसूत्रम् (अध्यासभाष्यम्)

अन्यथाख्यातिप्रसङ्गः नास्ति। पूर्वदृष्टावभासः नाम दृष्टं दर्शनम्, संस्कारद्वारा पूर्वदर्शनात् अवभासते इति पूर्वदृष्टावभासः। तथा च अन्ते **निगमनम्** - एवं च परत्र परावभासः इत्येव अध्याससमान्यलक्षणम् किन्तु तदुपपादकं स्मृतिरूपत्वम्। तत् साधकं पूर्वदृष्टत्त्वम्। पूर्वदृष्टपदं साजात्यं द्योतयति। तथा च परत्र परमार्थे सति आरोप्यसत्तातिरिक्तसत्ताकत्त्वे पूर्वदृष्टसजातीयस्य अनृतभूतस्य अवभासः एव अध्यासः। अवभासो नाम अवसन्नः भासः अवभासः। परत्रपदार्थविचारः इत्युक्ते परत्रपदेन पूर्वदृष्टदेशात् भिन्नदेशस्य अधिष्ठानस्य ग्रहणं भवति। एतेन निरधिष्ठानभ्रमः निवारितो भवति। अत्र शून्यवादिनः निरधिष्ठानं भ्रमं स्वीकुर्वन्ति। अस्माभिः साधिष्ठानभ्रमवादिनामिति निरधिष्ठानभ्रमं निराकर्तुमेव इदं दलं निवेशितम्। इतश्च सर्वमेतत् सुस्थम् । इत्येवं भामतीकारवाचस्पतिमिश्राचार्याणां मतमुपन्यस्य वेदान्ताभ्युच्चयः समुपस्थापितः।

**।। इति शम्।।**

**अनुशीलितग्रन्थसूची :**


1) ब्रह्मसूत्रभाष्यम्
2) भामती
3) कल्पतरुः
4) परिमलः
5) प्रकटार्थविवरणम्

# औचित्यविचारविमर्शः

रमेश चन्द्र बरमोला
सहायकाचार्यः (संविदा) साहित्यम्,
केन्द्रीयसंस्कृतविश्वविद्यालयः, राजिवगान्धीपरिसरः, श्रृङ्गेरी

**Keyword**– उचितम्, औचित्यम्, पदौचित्यम्, विशेषणौचित्यम्, व्रतौचित्यम्, रसौचित्यम्, उपसर्गौचित्यम्

**सारांशः**- लोके व्यवस्थितरूपेण आदर्शपूर्णं जीवनं सञ्चालनीयं चेत् उचितस्य भावः औचित्यम् इति सर्वत्र सर्वदा अवलम्बनीयं भवति, परमरमणीयकाव्येऽपि महाकविभिः चमत्कारजनकाः काव्यप्रमेयाः औचित्यपूर्णतया एव सन्निवेश्यन्ते। अस्मिन् शोधलेखे पदौचित्यम्, विशेषणौचित्यम्, व्रतौचित्यम्, रसौचित्यम्, उपसर्गौचित्यञ्चेतेषाम् औचित्यस्य भेदानां काव्यशास्त्रदृशा श्रीकृष्णविलासमहाकाव्यस्य पद्येषु विशेषतया समन्वयः विहितः।

वच परिभाषणे धातोः 'रुचिवचिकुचिकुटिभ्यः कितच् ' इति पाणिनिसूत्रेण- कितच्प्रत्यये वच् इतच् सम्प्रसारणे च उचितमिति रूपं सिध्यति। तस्माच्च उचितस्य भावः इति अर्थे गुणवचनब्राह्मणादिभ्यः कर्मणि च इत्यनेन ष्यञ्प्रत्यये सति औचित्यम् इति शब्दः निष्पद्यते।

यथा हि लोके कश्चित् पुरुषः औचित्यपूर्णव्यवहारवान् एव सुप्रतिष्ठादिकं लभते, न तु अनौचित्यविशिष्टव्यवहारवान् तथैव काव्यशास्त्रेऽपि औचित्ययुक्ता एव विचाराः शोभन्ते न तु अनौचित्येन प्रवृत्ताः विचाराः इति । यतो हि सर्वथा काव्यस्य काव्यत्वसम्पादका रसगुणादयः तदैव चमत्कारकारित्वेन सफलाः भवन्ति, यदा तेषाम् औचित्यपुरस्सरं विनियोगः क्रियते। यदि हि काव्ये औचित्यम् न स्यात् तदा कवयोऽवश्यमेव हास्यास्पदं निन्दां च लभेरन् इति । अतः यत्र रसजीवातुभूतस्य काव्यात्मतत्त्वस्य औचित्यमेव नास्ति, तत्र अलङ्काराणां गुणानाञ्च चिन्तनमपि सर्वथा व्यर्थमेव वर्तते उक्तञ्च-

काव्यस्यालङ्कारैः किं मिथ्यागणितैर्गणैः।
यस्य जीवितमौचित्यं विचिन्त्यापि न दृष्यते॥

तदैव हि अलङ्काराः काव्यशोभकाः भवन्ति, गुणाः गुणत्वं प्राप्नुवन्ति यदा ते अनौचित्येन विहीनाः भवन्ति

उचितस्थानविन्यासादलङ्कृतिरलङ्कृतिः ।
औचित्यादच्युताः नित्यं भवन्त्येव गुणाः गुणाः ॥

यथा हि यदि काचित् सुन्दरी कटिं विहाय गले मेखलाम्, ग्रीवां त्यक्त्वा हारम् नितम्बयोः, पादापेक्षया हस्तयोः नूपुरे, हस्तं विहाय पादयोश्च केयूरे उपयुङ्क्ते, तर्हि तस्याः सौन्दर्यपोषणं तु न भवत्येव अपितु सौन्दर्यशोषणमेव भवेत्। तथैव च यदि कश्चिद् वीरः करुणाभावेन विनम्रतया शरणागतेषु जन्तुषु वीरतां प्रकटयति, अथ च अशरणागतेषु शत्रुषु च दयाभावमादधाति इति वर्ण्यते चेत् तत्र तदा रसः दुष्टः एव स्यात् न

तु पुष्टः। तादृशी एव स्थितिः काव्येऽपि द्रष्टव्या। तस्मात् तत्र औचित्याभावे न गुणाः न अलङ्काराः रमणीयतां रोचकताञ्च वक्ष्यन्ति

कण्ठे मेखलया नितम्बफलके तारेण हारेण वा।
पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा॥.
शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यताम्
औचित्येन विना रुचिं प्रतनुते नालङ्कृतिर्नो गुणः॥ इति

यथास्थानं सन्निविष्टानि कटककुण्डलादीनि आभूषणानि शरीरस्य शोभां वर्धयन्तः परम्परया आत्मनि विशेषागुणाधानं सम्पादयन्ति। तद्वदेव काव्ये शब्दार्थयोः चारुताम् आवहन्तः अनुप्रासोपमादयः अलङ्काराः रसपोषकाः भवन्ति। न तावत् तेषाम् अलङ्काराणां बाह्यधर्मत्वात् अलङ्कार्यत्वं स्वीकर्तुं शक्यम्। माधुर्यादिः आत्मधर्मः सन्नपि गुणः एव न तु गुणी। तस्मात् गुणस्यापि आत्मत्वं न संगच्छते। आत्मा तु प्रधानभूतांशः भवति। येन विना कस्यापि सत्ता न विद्यते। शरीरे पञ्चमहाभूतं स्थूलशरीरम्, रसादि तु सूक्ष्मशरीरञ्च भवति। किन्तु, आत्मा तद्भिन्नः अविनश्वरः पदार्थः व्यपदिश्यते। तथैव काव्ये शब्दार्थौ, तयोः शोभावर्धकाः धर्माः अलङ्काराश्च स्थूलतत्त्वानि सन्ति। रसः, तद्धर्मगुणश्च यद्यपि सूक्ष्मतत्त्वं वर्तते। तथापि रसः आत्मत्वस्थानीयः भवितुं नार्हति। यतोहि काव्ये विभावानुभावव्यभिचारिभावानां विन्यासः औचित्यपूर्णः भवति , तदैव रसाः आस्वाद्यतां यान्ति। औचित्याभावे रसभङ्गो जायते। कथितञ्च

अनौचित्यादृते नाऽन्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥

अतः रसादपि सूक्ष्मं तत्त्वं औचित्यमेव भजते । तच्च काव्यस्य प्रमुखाङ्गं भवति। काव्यस्य प्रत्यङ्गं च स्पर्शति। अतो हेतोः क्षेमेन्द्रेणौचित्यतत्त्वं काव्यस्य आत्मत्वेन प्रतिष्ठापितम्। तस्य औचित्यस्य स्वरूपम् तावत्-

उचितं प्राहुराचार्याः सदृशं किल तस्य यत्।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते ॥

अभीष्टार्थादिप्रतिपादनाय यद्वस्तु यदनुकूलं भवति तदुचितं कथ्यते। तस्य उचितस्य भावः विद्वद्भिः औचित्यं व्यवह्रियते। न केवलं काव्ये एव अपि तु कृत्स्नेऽपि लोके व्याप्तं विद्यते। औचित्यवशात् काव्यं चमत्कारपूर्णं भवति। अनेन एव काव्यं सहृदयवेद्यं सर्वग्राह्यं च भवति। एतेन अनन्तकालं यावत् काव्यं सञ्जीवति। यदौचित्यमेव काव्यस्य प्राणभूतं तत्त्वं विद्यते। काव्यस्य जीवनरूपस्यास्य औचित्यस्य विरहे सति यावत्प्रयत्नेनापि गुणालङ्काराणां काव्ये विनियोजनं व्यर्थमेव सम्पत्स्यते।

एवं रूपेण काव्ये सर्वात्मत्वेन व्याप्तत्त्वादस्य औचित्यस्यानैके भेदाः विद्यन्ते। सत्स्वपि अनेकेषु भेदेषु आचार्यक्षेमेन्द्रः औचित्यविचारचर्चायाम् १ पदम्, २ वाक्यम्, ३ प्रबन्धः, ४ गुणः, ५ अलङ्कारः, ६ रसः, ७ क्रिया, ८ कारकम्, ९ लिङ्गम्, १० वचनम्, ११ विशेषणम्, १२ उपसर्गः, १३ निपातः १४ काल, १५ देशः, १६ कुलम्, १७व्रतम्, १८ तत्त्वम्, १९ सत्त्वम्, २० अभिप्रायः, २१ स्वभावः, २२ सारसङ्ग्रहः, २३ प्रतिभा, २४ अवस्था, २५ विचारः, २६ नाम, २७ आशीः च इति औचित्यस्य सप्तविंशतिं भेदान् कथयति। तेषु केषाञ्चित् भेदानां औचित्यविचारचर्चानुगुणं लक्षणं प्रदर्श्य श्रीकृष्णविलासमहाकाव्यस्य पद्यानि विमर्श्यन्ते।

**पदौचित्यम्**

यथा शरदिन्दुवदनाललनायाः ललाटे एकं कस्तूरीविरचितं तिलकं तथा च श्यामवर्णायाः भाले चन्दनविरचितम् एकमपि तिलकं तदीयसौन्दर्यम् अत्यन्तं संवर्धयति। तथैव सुकविना प्रयुक्तं एकमपि औचित्यपूर्णं पदं काव्यशोभाम् आवहति । एवमेव यथा एकमपि आभूषणं कस्याश्चित् कामिन्याः सौन्दर्यम् अतिशाययति तद्वत् चमत्कारयुक्तेन एकेन पदेन अपि महाकवेः वाणी सुतरां रमणीयतां प्रकाशयति ।

श्रीकृष्णविलासमहाकाव्ये पदौचित्यस्य उदाहरणम्

कृशावलग्ना कुचयोर्गरिम्णा सा देवकी सन्नतगात्रयष्टिः।
जगत्त्रयीपुण्यकृतावलम्बा बभार गर्भेण जगन्निवासम् ॥

देवकी भगवन्तं गर्भे अधारयत्। कविः गर्भवतीं ताम् इत्थं वर्णयति। कृशावलग्ना सन्नतशरीरा देवकी गर्भभारेण गमने मान्द्यं वहति। तत्र जगन्निवासं गर्भेण बभार इति वर्णने जगन्निवासम् इति पदम् औचित्यं भजते। निवसन्ति जगतः जनाः अस्मिन् इति जगन्निवासः। भगवतः विष्णोः सर्वलोकाश्रयत्वमत्र विवक्षितम्। तादृशस्य भगवतः गर्भे धारणम् इत्युक्ते देवकी पुण्यगर्भा इति ध्वन्यते। तच्च जगन्निवासपदम् अन्तरा न भवति इति पदौचित्यम् अत्र स्पष्टं कविना समाश्रितम्।

**विशेषणौचित्यम्**

प्रकृतार्थानुसारम् उपयुक्तविशेषणप्रयोगेण विशेष्यभूतार्थः चमत्करोति, गुणभूयिष्ठैः मित्रैः साधुपुरुषः इव । विशेषणौचित्यस्य उदाहरणम्

अस्ति श्रियः सद्म सुमेरुनामा समस्तकल्याणनिधिर्गिरीन्द्रः।
तिष्ठन्निदं विश्वमनुप्रविश्य स्वेनात्मना विष्णुरिवोर्जितेन ॥

गिरीन्द्रः समस्तकल्याणनिधिः इति वर्णितम्। इदं विशेषणम् अतितराम् औचित्यं भजते। समस्तानां सौभाग्यानाम् आश्रयस्य सुमेरुपर्वतस्य शिखरे ब्रह्मा उपविष्टः। तदा उर्वी दैत्यसम्भवां तदीयां पीडां निवारयितुम् इच्छन्ती तं ब्रह्माणं प्रार्थयते। अग्रे ब्रह्मणा उर्व्याः क्लेशापनोदनाय उपायः सूचितः। तदनु भगवता विष्णुना कृष्णरूपेण भुवि अवतीर्णेन उर्व्याः सर्वक्लेशदूरीकरणद्वारा कल्याणं कृतम् इति। अत्र भूम्याः कल्याणकरणचिन्तनं ब्रह्मणा कल्याणनिधौ सुमेरुपर्वते उपविष्टेन कृतम्। तस्मात् समग्रकाव्यस्य यन्मुख्यं फलं तस्य दातृत्वेन सुमेरुपर्वतः समस्तकल्याणनिधिः इति विशेषणत्वेन प्रकाशितः। एवं महाकवयः सार्थकविशेषणानि प्रयुञ्जते।

**व्रतौचित्यम्**

औचित्यानुकूलस्य व्रताचरणस्य वर्णनेन प्रसंशनीयः काव्यार्थः सहृदयानां मनः विच्छित्या आनन्दयति । व्रतौचित्यस्य उदाहरणम्

अलं विषादेन दिवौकसो वः समीहितं हस्तगतं मनुध्वम्।
व्रतं हि मे केवलमेतदेव संरक्षणं यच्छरणागतानाम् ॥

हे दिवौकसः ! अलं विषादेन वः समीहितं हस्तगतं मनुध्वम्। शरणागतानां रक्षणमेव मम व्रतं वर्तते। इति भगवान् विष्णुः भीतान् देवान् स्ववचोभिः स्थैर्यवतः करोति। तत्र प्रजासुखे सुखं राज्ञः इत्युक्तरीत्या प्रभुः आत्मीयानां सौख्यं वाञ्छति। तेषां क्लेशे सति तन्निवारणार्थं तन्निवारणोपायान् चिन्तयति। पुनः सौख्यं

सम्पादयति। अतः सः शरणागतरक्षकः इति उच्यते। शरणागतरक्षणं प्रभूणां मुख्यं कार्यं न केन व्याजेन, तत्र च्युतिः न स्यात् नियमेन तत् कर्तव्यम्। विष्णुः दैत्येभ्यः दैत्यानां अतः एव शरणागतानां देवानां संरक्षणतत्परः। केवलं एतदेव मे व्रतं इति ब्रवीति। तेन अन्यूनानामनतिरिक्ततया सम्पादितकार्यस्य फलप्राप्तियत्नः सूचितो भवति। इदं व्रतं प्रकृतार्थोपयोगितया नितान्तं औचित्यं भजते।

**उपसर्गौचित्यम्**

प्रपरादीनाम् उपसर्गाणाम् उचितप्रयोगेण माधुर्यादिगुणसंवलिता काव्यवाणी तथा विवर्धते। यथा सन्मार्गे विनियोजनेन धनादिसम्पद् निरन्तरं वृद्धिं लभते ।

**उपसर्गौचित्यस्य उदाहरणम्**

भीष्मकस्य पुत्र्याः रुक्मिण्याः उद्वाहप्राक् यागः समनुष्ठीयते। तद्वर्णनावसरे इदं पद्यं प्रस्तुतम्।

विदर्भराजेन नियुज्यमाने सुताप्रदाने कृतनिश्चयेन।
पुरोहिते जुह्वति शान्तिकारं व्यजृम्भत व्योमनि धूमराजिः ॥

विदर्भपतिः भीष्मकः पुत्र्याः रुक्मिण्याः पाणिग्रहणं निश्चयम् अकरोत्। तस्याश्च सूर्यादीनां ग्रहाणां शान्त्यर्थं तदनुकूलयागसम्पादनाय पुरोहितं नियुक्तवान्। तेन पुरोहितेन यागे कृते धूमसमूहः आकाशे विकसितः अभूत्। वि उपसर्गपूर्वकं जृम्भधातोः लङि व्यजृम्भत रूपमिदं सिध्यति। अजृम्भत इत्यनेन आकाशे धूमसमूहः विकसितः जातः इत्यर्थः। किन्तु, वि इति उपसर्गबलात् समग्रगगनं धूमसमूहेन अत्यर्थं व्याप्तम् अभूत्। तेन हुतं हविः सूर्यादिग्रहैः प्राप्तं वर्तते इति प्रकाश्यते। ततः सर्वेग्रहाः अस्याः रुक्मिण्याः मङ्गलं करिष्यन्ति च। वि उपसर्गः प्रकृतार्थप्रकाशनतत्परतया प्रयुक्तत्वात् नितराम् औचित्यं भजते।

**रसौचित्यम्**

सर्वेषां सहृदयानां हृदयेषु व्यापकरूपेण स्थितः औचित्येन चमत्कृतो शृङ्गारादिः रसः चित्तं तथा प्रफुल्लयति यथा मधुमासः अशोकवृक्षम् ।

**हास्यरसौचित्यस्य उदाहरणम्**

श्रीकृष्णविलासमहाकाव्यस्य द्वितीयसर्गे कृष्णस्य जन्मोत्सवः वर्णितः। उत्सववर्णने प्राधान्येन हर्षभावः व्यज्यते। तदर्थम् अनेके अवान्तरविषयाः तदौचित्यं भजन्ते। देवाः कंसभीत्या सह पुष्पवृष्टिं मुमुचुः। वायुः वृक्षेभ्यः सुमनोंशुकानि सम्प्राप्य ववौ। सर्वासु दिक्षु शङ्खध्वनिः देवानां मङ्गलतूर्यघोषश्च व्याप्नोत्। इत्येते विषयाः सन्तोषसूचकत्वेन वर्णिताः सन्ति। कृष्णस्य जन्मनः जातं हर्षं द्विगुणीकर्तुमेव हास्यरसः सन्निवेशितः।

आषाढिनं पाणिमुदस्य दूरं ब्रह्मर्षिलोकः पतदुत्तरीयः।
ननर्त पर्याकुलपादचारः प्रहस्यमानः सुरसुन्दरीभिः ॥

ब्रह्मर्षिवर्गः पलाशदण्डयुक्तं पाणिम् उत्क्षिप्य नृत्यति स्म तदा तस्य उत्तरीयं शरीरात् पतति स्म। तद्दृष्ट्वा देवाङ्गनाः परिहसन्ति स्म।

पितॄंश्च पुत्राः पितरश्च पुत्रान् गुरुंश्च शिष्या गुरवश्च शिष्यान्।
पतींश्च दाराः पतयश्च दारान् प्रमोदमत्तास्सिषिचुः पयोभिः ॥

आनन्दतुन्दिलाः पुत्राः पित्रुन् जलेन सिञ्चन्ति स्म। एवं पितरः पुत्रान् , शिष्याः गुरून् , गुरुवः शिष्यान् , दाराः पतिन् , पतयः दारान् च परस्परं जलेन सिञ्चन्तः हृष्यन्ति स्म। गलितकुण्डलाः देवाः उच्चैः हसन्तः क्रीडन्ति स्म। एते सर्वेऽपि विषयाः हासम् अभिव्यञ्जयन्तः प्रकृतस्य जन्मोत्सवस्य पुष्टिं कुर्वन्ति।

एवं रूपेण औचित्यस्य अस्य बहूनां भेदानां सर्वत्र प्रभावः दृष्यते। अत्र तावत् औचित्यस्य केचन एव भेदाः उदाहरणपुरस्सरं विमर्ष्टाः वर्तन्ते।

**सन्दर्भग्रन्थाः**


- औचित्यविचारचर्चा
- ध्वन्यालोकः
- अष्टाध्यायी
- नाट्यशास्त्रम्
- श्रीकृष्णविलासमहाकाव्यम्
- काव्यलङ्कारसूत्राणि
- काव्यादर्शः
- औचित्यविचारचर्चा
- आनन्दवर्धनः, ध्वन्यालोकः, लोचनव्याख्या, चौखम्बाकृष्णदास अकादमी देहली, २००५
- आनन्दवर्धनः, ध्वन्यालोकः, दीधितिव्याख्या, चौखम्बाकृष्णदास अकादमी, २०१०
- सुकुमारकविः, श्रीकृष्णविलासमहाकाव्यम्, आचार्यप्रकाशन इलाहबाद, २०१३
- सुकुमारकविः, श्रीकृष्णविलासमहाकाव्यम्, राष्ट्रियसंस्कृतसंस्थानम्, २००६
- विश्वनाथः, साहित्यदर्पणम्, चन्द्रकला, चौखम्बा विद्याभवनम्, १९९१

# कलिविडम्बनशतकेन सह कलिविमर्शशतकस्य तुलनात्मकं परिनुशीलनम्

**डा.किरणशङ्करभट्टः**
Asst. Professor (Bhasha Shikshaka, Contract)
Mukta Swadhyaya Peetham (MSP)
CSU, Rajiv Gandhi Campus, Sringeri,

**Key Words**: पद्धतिः , साम्यम् , छन्दः , अलङ्कारः , परिशीलनम् , गुणः, ध्वनिः,

**Abstract:**

एतयोः शतकयोः पद्धति-ध्वनि-अलङ्कार-गुण-प्रयोग-छन्दस्-उपदेश-अन्यशास्त्रप्रभाव-विषयसाम्यक्षेत्रेषु अनुशीलनं विमर्शनञ्च अकार्षीत् । क्वचित् काव्यानुगुणं निर्दिष्टांशानामभावात् अन्यांशान् अयोजयिष्ट । अस्मिन् अध्याये कवेः रचनाशैली-भाषाप्रयोग-वर्णनाकौशलञ्च अज्ञास्त । प्राचीनकवीनां शैली आधुनिककवेः शैली किदृशी इति विमर्शिता ।

नीलकण्ठदीक्षितस्य कलिविडम्बनशतके कलिकालस्य निन्दामकरोत् किन्तु नागराजवर्यः कलिविमर्शनशतके कलियुगस्य निन्दामकृत्वा कलेः विमर्शनमकरोत्। पुनश्च एतत् कलेः दुश्परिणामः इति कल्पितवन्तः इति आरोपयति । कालः कदापि दुष्टः भवितुं नाहतीति अवोचत् । यथा –

कदा धर्मो नासीज्जगति न कदा सत्यमभवात् ?
कदा सन्तो नासन्नथ च न कदा शान्तमनसः ?।
समस्तानां दृष्ट्या न च कृतयुगं नो कलियुगं
जनान् मार्गे नेतुं कुशलमतिभिः कल्पितमिदम् ॥[1]

अतः कालस्य कोऽपि दोषः नास्तीति नागाराजकवेराभिप्रायः । निलकण्ठदीक्षितः साक्षात् कलिकालस्य निन्दाम् उपहासं च अकरोत् इति तु स्पष्टं दृश्यते । किन्तु नागराजवर्यः कलिकालस्य विमर्शनमकरोत् न तु निन्दा । यथा –

शोषणासक्तबुद्धीनां दुर्लभं प्राप्तुमिच्छताम् ।
स्वार्थिनां मनुजानां हि दोषोऽयं न कलेः पुनः ॥[2]

पुनः कलिविडम्बने कविः ग्रन्थाऽरम्भे मङ्गलाचरणं नाकारोत् । कारणं कलियुगे सम्प्रदायः सम्पूर्णतया नष्टः वर्तते अतः मङ्गलाचरणस्य का आवश्यकता इति विजगीषुणां विषये वर्णनामारभत । किन्तु शिष्टाचारानुगुणं नागराजकविः ग्रन्थारम्भे नमस्कारपूर्वकं मङ्गलाचरणमकरोत् । **कलये नमः** इत्यवदत् ।

**पद्धतिसाम्यम्**

नीलकण्ठदीक्षितस्य किलिविडम्बनशतके कविः सामाजिक-धार्मिक-राजनैतिक एवं शैक्षिकादि वृत्तिनां वर्णनमकरोत् । अत्र सभाविजिगीष-मूर्खाचार-मान्त्रिक-दैवज्ञवञ्चन-भिषग्वञ्चन-अर्थलाभ-

---

[1] कलि.श. श्लो.8

[2] कलि.श. श्लो.63

कविताप्रयोजन-गार्हस्थ्य-उत्तमर्णा-दारिद्र्य-पिशुना-दुर्जनव्यवहार-पद्धतयः उल्लिखिताः । क्रमानुगुणमेकेकस्याः पद्धतेः विमर्शनमकरोत् । सर्वत्र कलेः प्रभावं प्रादर्शयत् । प्रायशः १३ पद्धतीनामुल्लेखः दृश्यते । किन्तु कलिविमर्शनशतके एवं क्रमशः पद्धतीनामुल्लेखः न दृश्यते । क्वचित् स्त्रीमोह-धनलोभ-वैद्य-भिषक्-मूर्ख-दुर्जनव्यवहारादीनां पद्धतीनां तत्र तत्र विमर्शनं दृश्यते । सामान्यतया प्रतिपद्यं दोषगुणानां विषये विमर्शनमकरोत् । यथा कलिविडम्बनशतके विद्यते पद्धतीनां विमर्शनं वर्तते तथा नात्र अवलोकितम् । कलिविमर्शनशतके देश-काल-क्रिया-वृत्ति-देव-दैत्य-स्त्री-पुं-श्री-श्रीसामान्य-वैद्य-उद्योग-विद्यार्थि-कृषिक-नेतृ-प्रजा-पशु-पक्षि-यान-स्थान-सन्मान-धन-कनक-वस्तु-वाहनादयः स्वरसाः अंशा इह समचित्तेन कविना विलोक्यन्ते विविच्यन्ते गुणदोषपुरस्सरम् ।

**ध्वनिसाम्यम्**

नीलकण्ठदीक्षितस्य कृतिषु व्यङ्ग्योक्तीः सर्वत्र नियोजयन्ति इति लोकप्रतीतिः। कलिविडम्बनकाव्ये अपि कविः व्यङ्ग्योक्तियोजने विशिष्टप्रतिभां प्रादर्शयत् । अत्र किलियुगस्य व्यक्तीनां दुष्प्रवृत्तीनां सामाजिकानीनीनां च व्यङ्ग्योक्तिभिः वर्णनं दृश्यते । व्यङ्ग्योक्तयः कदाचित् कोपकारकाः भवन्ति । निर्भयेन व्यङ्ग्योक्तीनां रचनावसरे कवेः धैर्यं प्रस्फुट्यते । एकैकत्रापि कविः स्वाभाविकव्यङ्ग्यतां नियोजयन् पाठकस्य मनांसि उल्लासयति । विजिगीषोः मान्त्रिकस्य मौहूर्तिकस्य, ज्योतिर्विदुषः, कवीनां तुच्छमनोवृत्तिः, सोदर्याणां दुष्प्रवृत्तिः, महिलानां चेष्टाः, अन्यानुकरणम् इत्येते विषयाः कलिविडम्बनकाव्ये व्यङ्ग्यस्य विषयतां भजन्ते ।

अद्यत्वे सर्वेऽपि जनाः परस्परं स्पर्धमानाः श्रेष्ठपदव्यैः स्वलाभायैव वा यतन्ते। स्वच्छ स्पर्धालवो विलुप्ताः सन्ति इत्यत्र इदमेव कारणं यत् कलियुगस्थाः मनुष्याः उचितानुचित साधनानि निश्शनम् उपयुङ्क्ते इति । केवललक्ष्यपूर्तिमेव विचिन्तयन्तः तत्साधनेषु औचित्या नौचित्यविवेचनां न कुर्वते एवमेव सभायां विजिगीषवो व्यवहरन्तीति कविः व्यङ्ग्यपूर्णो पदेशात्मकशैल्या प्रस्तौति । तदनन्तरं कलियुगस्थव्यक्तीनां विजयकारणानि विविधसाधनानि व्यङ्ग्योक्त्या परि गणयामास । यथा -

असम्भ्रमो विलजत्वमवज्ञा प्रतिवादिनि ।
हासो राज्ञः स्तवश्चेति पश्येते जयहेतवः ॥[1]
उच्चैरुद्घोष्य जेतव्यं मध्यस्थश्चेदपण्डितः ।
पण्डितो यदि तत्रैव पक्षपातोऽधिरोप्यताम् ॥[2]

इत्येवं कविः विजयसिद्धिसाधनानि स्वानुभवेनानुमानेन वा सुन्दररीत्या न्यरूपयत् । जनेषु विश्वासं जनयितुं यतमानानां दम्भानां कपटानां च व्यङ्ग्यात्मकानिरूपणं कविः इत्थं प्रदर्शयति -

सदा जपपटो हस्ते मध्येऽक्षिमीलनम् ।
सर्वं ब्रह्मेति वादश्च सद्यः प्रत्ययहेतवः ॥[3]

---

[1] कलि.वि.श.श्लो.2

[2] कलि.वि.श.श्लो.3

[3] कलि.वि.श.श्लो.90

प्राप्तधनाः धनमदेन अन्धाः सन्तः किमपि नावगच्छन्ति इति धनमत्तान् गूढैः वाक्यैः कविरित्थमुपहसति –

प्रामाण्यबुद्धिः स्तोत्रेषु देवताबुद्धिरात्मनि ।
कीटबुद्धिर्मनुष्येषु नूतनायाः श्रियः फलम् ॥[1]

धनजन्ममदेन प्रवर्तमानाः जनाः, आदर्शविमुखाः स्त्रियः, तदितरान् अनेकान् विषयान् सुन्दरव्यङ्ग्योक्तिभिः कथितम् ।

नीलकण्ठस्य व्यङ्ग्यतायाः व्याप्तिः सर्वक्षेत्रेष्वपि दृश्यते । भाषया भावैः, सङ्केतैः, दृष्टान्तैः, स्वजीवनानुभवैश्च कविः व्यङ्ग्योक्तीः प्रकटयति । कविः व्यङ्ग्योक्तिभिः तत्कालीनसमाजस्य मुखं चित्रितवान् । नीलकण्ठस्य व्यङ्ग्योक्तेः महत्त्वपूर्णं वैशिष्ट्यमस्ति । तदवगन्तुं सूक्ष्मबुद्धिरपेक्ष्यते । अत एव इदं द्रष्टुमुपदेशकाव्यमिव भाति । किन्तु सूक्ष्मबुद्ध्या परिशील्यते चेत् गूढव्यङ्ग्यता स्फुटी भवति । स्वव्यङ्ग्योक्तिभिः नीलकण्ठः सामाजिकपद्धतिं प्रस्तौति । तीव्रैः पदैः पथभ्रष्टान् शिक्षते । अस्य काव्यस्य मानवजीवनपरिष्कारमार्गः मङ्गलमयोपदेशश्च मुख्योद्देश्यम् । व्यङ्ग्योक्तिभिः अत्र कविः सफलतामाप्तवान् ।

नागराजराववर्यः कलिविमर्शनशकेऽपि व्यङ्ग्योक्तीनामुपयोगमकरोत् । विद्या-स्त्रीमोह-वस्तुलोभ-धनमोह-वर्णपद्धतेः विषये व्यङ्ग्योक्तेः प्रचूरप्रयोगमकार्षीत् । यथा-

सत्यं नोचितमेतदद्य बहुधा यच्चित्रणे दृश्यते
नेच्छेन्नग्नतनुं कदापि वनितां भार्येतरां वीक्षितुम् ।
किन्तु द्वापर एव तां दुपदजां दुर्योधनः संसदि
द्रागाकृष्य न किं यतितवान् कर्तुं विवस्त्रां खलः ?[2]

द्वापरे एव वनितां विवस्त्रमकार्षीत् किल ? किमधुना ? कलेः प्रभावः नास्तीति वदन् क्वचित् अस्तीति निर्दिशति व्यङ्ग्योक्त्या । अतः कलिविडम्बनशतकम् एवं कलिविमर्शनशतकम् उत्तमव्यङ्ग्यकाव्यस्योदाहरणम् ।

**अलङ्कारसाम्यम्**

कलिविमर्शनशतकम् उपदेशात्मकव्यङ्ग्यकाव्यं तथापि क्वचित् अलङ्कारस्य प्रयोगः दृश्यते । अस्मिन् शतके तथा बाहुल्येन अलङ्कारप्रयोगः मया न लक्षितः । क्वचित् शब्दालङ्कारः विद्यन्ते । क्वचित् दृष्टान्तालङ्कारोऽपि विद्यते । यथा –

पुरा रमो जित्वा दितिजनृपतिं रावणमथो
विमानं तस्यैव स्ववशमाधिरुह्यगत इति ।
प्रजाः शृण्वन्ति स्माद्भुतकथामद्य तु कलौ
विमानरूढास्ता निखिलभुवने यान्ति ससुखम् ॥

[1] कलि.वि.श.श्लो.60

[2] कलि.श.श्लो.35

नीलकण्ठदीक्षितस्य कालिविडम्बनशतके शब्दालङ्काराः अधिकतया दृश्यन्ते । यद्यपि एतत् उपदेशात्मकं काव्यं यः कश्चिद्विषयं साक्षादेववदन्ति । तथापि क्वचित् अलङ्कारप्रायोगोऽपि दृश्यते । यथा –

चारान्विचार्य दैवज्ञे वक्तव्यं भूभुजां फलम् ।
ग्रहचार परिज्ञानं तेषामावश्यकं यतः ॥[1]

अस्मिन् यमकालङ्कारः विद्यते । चार चार इत्यत्र अयमालङ्कारः वर्तते । एवमेव –

कण्ठेमदः कोद्रवजो हृदिताम्बूलजोमदः ।
लक्ष्मीमदस्तु सर्वाङ्गे पुत्रदारमुखेष्वपि ॥[2]

अस्मिन् श्लोके मदः इति पदं वारात्रं प्रयुक्तं विद्यते अतः अत्र यमकालङ्कारः । एवमेव उमालङ्कारस्योदाहरणमेकम् –

जामातरो भागिनेया मातुला दारबान्धवाः ।
अज्ञाता एव गृहिणां भक्षयन्त्याखुवद्गृहे ॥[3]

एवं रीत्या कलिविडम्बनशतके तथैव कलिविमर्शनशतके च अलङ्काराणां निवेशनमकरोत् । वास्तविकतया एते काव्ये उपदेशात्मके तथापि क्वचित् शब्दालङ्कारः क्वचित् अर्थालङ्कारस्य च प्रयोगः दृश्यते ।

**गुणसाम्यम्**

काव्यस्य उत्कर्षहेतवः भवन्ति गुणालङ्काररीतयः। अत एवोक्तं सहित्यदर्पणकारेण-**"उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः"**[4]**।** काव्यस्य गुणाः शौर्यादिवत्, अलङ्काराः कटककुण्डलादिवत्, रीतयः अवयवसंस्थानविशेषवद् भवन्ति । ते हि देहेन इव शब्दार्थात्मककाव्यस्य आत्मभूतस्य रसस्य उत्कर्षका भवन्ति । अत एव ते गुणाः काव्यस्यापि उत्कर्षहेतवः विद्यन्ते ।

नीलकण्ठदीक्षितस्य कलिविडम्बनशतके तु सम्पूर्णतया प्रसादगुणः एव वरीवृत्यते । सामान्यतया सर्वेऽपि श्लोकाः पठने सति अवगम्यते एवमर्थोऽपि स्फुटति । क्वचित् श्लोकाः ओजगुणापन्नाः वर्तन्ते । केषुचित् दीर्घसमासयुक्तवाक्यानि सन्तीत्यत्रोज-गुणः । प्रसादगुणस्योदाहरणम् –

शक्तिं करोति सञ्चारे शीतोष्णे मर्षयत्यपि ।
दापयत्युदरे बहुनि दारिद्र्यं परमौषधम् ॥[5]

एवमोजोगुणस्योदाहरणम् –

गृहिणी स्वजनं वक्ति शुष्काहारं मिताशनम् ।
पतिपक्ष्यास्तु वह्वाशान्क्षीरपास्तस्तस्करानपि ॥[6]

एवमत्र प्रसादोजगुणस्य सन्निवेशनं दृश्यते ।

---

[1] कलि.वि.श.श्लो.14

[2] कलि.वि.श.श्लो.66

[3] कलि.वि.श.श्लो.42

[4] सा.दर्प. प्र-3

[5] कलि.वि.श.श्लो.54

[6] कलि.वि.श.श्लो.47

नागराजराववर्यस्य कलिविमर्शनशतके अधिकतया ओजगुणः एव दृश्यते । सामान्यतया सर्वेषु श्लोकेषु समासबाहुल्यपदानां श्रुतिकठोरवर्णानां परुषवर्णानां सन्धियुक्तपदानां च प्रयोगाः दृश्यन्ते । यथा –

केचिद्वित्तादिमोहान्मठसुखविवशा बाल्यसन्यासभाज-
स्तारुण्ये त्विन्द्रियाणामुपहतिमतुलामक्षमाः सोढुमुत्काः ।
स्त्रीणां वश्या भवन्तः पुनरपि गृहितामश्रयन्तो नितान्तं
निन्द्या जायन्त एतत्कलियुगकलितं कश्मलं दुःखदं नः ॥[1]

एवमत्र अत्यधिकतया दीर्घसामासयुक्तवर्णानामेव प्रयोगः दृश्यते । अतः इह ओजगुणः अस्ति । क्वचित् प्रसादगुणः अपि विद्यते । तद्यथा –

समस्ते भूमिवलये सुखदुःखविदालये ।
सम्प्राप्तिनित्यबलये कलये कलये नमः ॥[2]

एवञ्च –

अथवा नैते दोषा भवन्ति केवलकलेर्विशेषाः ।
यावन्मानवजातिस्तावत् सर्वत्र भवति सैव कथा ॥[3]

एवं शतकद्वयेऽपि गुणानां नियोजनं वर्तते । प्रयशः उभयोः प्रसादोजगुणौ एव भवतः।

**प्रयोगसाम्यम्**

एतत्तु कवेः पाण्डित्यानुगुणं भवतीत्यत्र नास्ति संशयः । पुनः कविः सरलान् प्रयोगान्नेव इच्छति चेत् सरलप्रयोगाः भवन्ति । सरलप्रयोगकरणेन जनसामान्याः अवगच्छन्ति । काव्यलेखनस्यापि सैवोद्देशः काव्यमिदं सर्वेऽपि नरः अधीयीरन् इत्येव अतः सरलप्रयोगः सर्वोचितः। कन्तु विद्वत्सभायामिदं न शोभते । तत्र विशिष्टप्रयोगसहितकाव्यमेव यशः लभते ।

नीलकण्ठदीक्षितस्य कलिविडम्बनशतके सरलाः प्रयोगाः वर्तन्ते । किन्तु अपेक्षिते स्थाने विशिष्टान् प्रयोगान् अकार्षीत् । **विजिगीषु** इति सन्नन्तप्रयोगमकरोत् मङ्गलश्लोके एव । **लप्स्यमानेन** इति शानच्भविष्यत्काले प्रयोगमकरोत् । एकस्मिन्नेव श्लोके **मद**शब्दः श्लेषार्थं द्योतयति । एकत्र कण्ठेमदः मार्दवमर्थं बोधयति एवमेव अस्मिन्नेव श्लोके मदः इत्यस्य अहङ्कारः इति अर्थं बोधयति । सम्पूर्णशतके कविः सरलभाषायाः एव प्रयोगमकृत । पुनः बहूनां सूक्तीनां प्रयोगः दरीदृश्यते । यथा

**दारिद्र्यं परमौषधम् ।**[4]
**जामातुर्भाग्यकारणम् ।**[5]

---

[1] कलि.श.श्लो.56

[2] कलि.श.श्लो.1

[3] कलि.श.श्लो.36

[4] कलि.वि.श.श्लो.43

[5] कलि.वि.श.श्लो.45

**दुर्जनानामतो न्यय्यं दूरादेव विसर्जनम् ।**[1]

एवं कलिविडम्बनशतके भाषावैभवं विद्यते । कवेः रचना शैली हृदयङ्गमा विद्यते ।

नागराजराववर्यस्य काव्यशैली भाषाशैली च प्रशंसनीया वर्तते । एतस्य कवेः काव्यपठनेनैव ज्ञायते असौ व्याकरणज्ञः शब्दविदिति । सर्वत्र अधिकतया लुङ्लकारस्य प्रयोगबाहुल्यं दरीदृश्यते । पुनः गभीरार्थसहितशब्दप्रयोगः अपि दृश्यते । विभिन्न-नूतधातुनां प्रयोगोऽपि विद्यते । अध्यगीषत, अकृत, अकर्षत, अलप्सि, शुश्रूषन्ते, व्रजन्ति एवं विशिष्टानां धातूनां प्रयोगमकृत । एवमेव विशिष्टशब्दानामपि प्रयोगः दृश्यते ।

**छन्दस्साम्यम्**

नीलकण्ठदीक्षितस्य कलिविडम्बनशतके सर्वेऽपि श्लोकाः अनुष्टुप् छन्दसि एव वर्तन्ते । सरलया पद्धत्या अत्र श्लोकरचनामकुरोत् । किन्तु अर्थस्तु गभीरः विद्यते । नागराजराववर्यस्य कलिविमर्शनशतके बहूनां छन्दसां प्रयोगः दृश्यते । अनुष्टुप्-शार्दूलविक्रीदित-मालिनी-शिखरिणी-पृथ्वी-स्रग्धरा-वसन्तलिक-उमेन्द्रवज्र-इन्द्रवज्र-उपजात्यादि छन्दसां प्रयोगः अत्र दृश्यते ।

**अन्यशास्त्रप्रभावः**

अन्यशास्त्रप्रभावः कलिविडम्बनशतके आधिक्येन दरीदृश्यते । न्यायतर्क-व्याकरणवेन्दान्तपुराणशास्त्राणां प्रभावः दृश्यते । न्ययशास्त्रस्य प्रभावः यथा –

लाभो हेतुर्धनं साध्यं दृष्टान्तस्तु पुरोहितः ।
आत्मोत्कर्षो निगमनमनुमानेष्वयं विधिः ॥[2]

चाणक्यसूत्रस्य प्रभावः दृश्यते दारिद्र्यविषये –

भार्ये द्वै बहवः पुत्रा दारिद्रं रोगसम्भवः।
जीर्णो च मातापितरावेकैकं नरकाधिकम् ॥[3]

चाणक्यसूत्रे वदति – **“दारिद्र्यं खलु पुरुषस्य जीवनं मरणम्”**[4]

एवमेव नीतिशास्त्रस्य भागवतस्य देवीभागवतस्य इत्यादीनां प्रभावः क्वचित् क्वचित् दृश्यते ।

कलिविमर्शनशतके व्याकरणशास्त्रस्य प्रभावः अत्यधिकतया दृश्यते । नीतिशास्त्रस्य संस्कृतेः, संस्कारस्य, आर्थशास्त्रस्य ,धर्मशास्त्र , लोकनीतेः, वैद्य-शास्त्रस्य च क्वचित् पञ्चतन्त्रस्यापि प्रभावः विद्यते ।

एवं कलिविडम्बनशताकस्य कलिविमर्शनशतकस्य च साम्यं दृश्यते बहुषु स्थानेषु किन्तु कलिविडम्बने केवलं कलेः निन्दा वर्तते कलिविमर्शने गुणवगुणचर्चा विद्यते ।

---

[1] कलि.वि.श.श्लो.94

[2] कलि.वि.श.श्लो.4

[3] कलि.श.श्लो.49

[4] चा.सू.

**सन्दर्भसूचीग्रन्थाः –**


1. सज्जनशतकम्
2. दुर्जनशतकम्
3. सुभाषितभाण्डागारः
4. नीतिशतकम्
5. साहित्यदर्पणः
6. कुवलयानन्दः
7. काव्यप्रकाशः

# भेदान्वययोग्यताचारः

**जनार्दन सुवेदी**

सहायकाचार्यः (अतिथिः), केन्द्रीयसंस्कृतविश्वविद्यलयः

श्रीरघुनाथकीर्तिपरिसरः,देवप्रयागः,उत्तराखण्डः।

**भूमिका-**

सर्वात्मनानुभवविषयत्त्वाल्लोकोऽयं दुःखग्रस्त इत्यत्र नास्ति संशयः अतः एकान्ततः अत्यन्ततश्च दुःखापघातहेतुः शास्त्रविषयकं ज्ञानमेव तदुक्तं सांख्यकारिकायामीश्वरकृष्णेनादावेव-

**दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ ।**

**दृष्टे सापार्था चेन्नैकान्ततोऽत्यन्तोऽभावात्॥**[1]

एवमेव गङ्गेशोपाध्यायः प्राहः तत्त्वचन्तामणौ- **जगदेवहिदुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्विक्षिकीं परमाकारुणिको मुनिः प्रणिनाय**[2]

अस्यायमाशयः संसार्यात्मजातं दुःखपङ्कनिमग्नमुद्दिधीर्षुः महर्षिः गौतमः न्यायसूत्रं प्रणिनाय तत्रोक्तं प्रमाणप्रमेय इत्यादिपदार्थानां तत्त्वज्ञानान्निश्रेयसाधिगमः अत्रैव सूत्रे प्रेक्षावत्प्रवृत्तिनिमित्तकम् अनुबन्धचतुष्टयमपि दर्शयति षोडशपदार्थेष्वपि इतरपञ्चदशपदार्थानां व्यवस्थितिः प्रमाणाधीना वर्तते अतः आदावेव प्रमाणस्योल्लेखः ।

अथ च प्रमाणमाश्रित्यैव बहुभिः विद्वद्भिः महान् विचारोऽप्यभिहितः। न्यायशास्त्रोक्तदिशा प्रमाणानि चत्त्वारि तदुक्तं न्यायसूत्रे गौतमेन **प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि** इति. तत्र शब्दप्रमाणजन्यप्रमा शाब्दवोध इति व्यपदेशं भजते तत्रेैव शाब्दवोधविचारावसरे भेदान्वयवो धःकुत्रेति निरूपयितुं प्रशङ्गोऽयं प्रारभ्यते- तत्र व्युत्पत्तिवादग्रन्थे गदाधरभट्टाचार्यो निरूपयति यत्

**निपातारिक्तनामार्थयोः (क्रिया - निपातातिरिक्तप्रातिपदिकार्थयोश्च) भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वम् । इममेव न्यायमाश्रित्य कश्चन विचारोऽत्र प्रस्तूयते-**

**सोधसारः-**

अयं न्यायः दर्शनशास्त्रे व्याकरणशास्त्रे च प्रथितो वर्तते परन्तु तत्र तत्र शास्त्रे अस्य न्यायस्य केवलं सञ्चार एव क्रियते विश्लेषणादिकं नैव क्रियते अतः भेदेनान्वयबोध कयोः पदार्थयोः मध्ये इति स्पष्टप्रतिपत्तिः सुतरां भवितुं नार्हति तस्मादत्र अस्य न्यायस्य व्याख्यानव्याजेन भेदान्वयबोधः कयोः पदार्थयोः भवति कयोश्च न भवति इति निरूपितं वर्तते ।

**विषयनिरूपणम्-**

राज्ञः पुरुषः इत्यत्र कथं शाब्दबोधः। इत्यत्र मतद्वयं प्रसिद्धं न्यायनये संसर्गतामतं प्रकारतामतञ्चेति। संसर्गतामतं मणिकारस्य प्रकारतामतञ्च दीधितिकारस्येति प्रसिद्धम्। संसर्गतामते राज्ञःपुरुष इत्यत्र राजपदार्थप्रकारक-स्वत्वसंसर्गक-पुरुषपदार्थविशेष्यक अर्थात् स्वत्वसंबन्धेन राजवान् पुरुषः

---

[1]सांख्यकारिका

[2]प्रामाण्यवादचिन्तामणिः

इत्याकारकशाब्दबोधः अङ्गीक्रियते, तत्र च स्वत्वादिसंसर्गस्य संसर्गमर्यादयाभानसंभवेन विभक्तीनां न संबन्धादिवाचकत्वमपि तु नीलो घटः इत्यादौ विशेषणवाचकपदसमभिव्याहृतविभक्तेरिव साधुत्वमात्रार्थकत्वमिति। प्रकारतामते च राज्ञःपुरुष इत्यत्र षष्ठ्यादेः संबन्धादिवाचकत्वं अङ्गीक्रियते तथा च तेषां मते राजस्वत्वप्रकारक-आश्रयत्वसंसर्गक-पुरुषविशेष्यक- राजनिरूपितस्वत्ववान् पुरुष इत्याकारकः शाब्धवोधोऽङ्गीक्रियते।

**अत्र प्रकारतावादिनामाशयः-**

यद्यत्र राज्ञः पुरुष इत्यत्र राजपदार्थप्रकारकपुरुषपदार्थविशेष्यक- भेदेनान्वयबोधोऽङ्गीक्रियते तर्हि पदार्थोपस्थितियोग्यताज्ञानादिघटितसामग्रीबलात् राजा पुरुष इत्यत्रापि नामार्थयोः भेदान्वयबोधः आपद्येत अतो न राज्ञः पुरुष इत्यत्र भेदान्वयबोधः। यदि च नामार्थयो भेदेनान्वयबोधः न भवति तर्हि भेदान्वयबोधः कयोः पदार्थयोः भवति ? इति जिज्ञाषायां व्युत्पत्तिवादग्रन्थे भेदान्वयबोधनिरूपणावसरे आदावेव भट्टाचार्य आहः - **भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्यार्थेन समं क्वचिननिपातार्थेन च सममेव जायते न त्वन्येन।**[1]

**प्रातिपदिकार्थस्य प्रत्ययर्थेन सम**मित्यस्योदाहरणं भवति राज्ञः पुरुष इत्यत्र राजपदार्थस्य ङस्प्रत्ययार्थः स्वत्वेन साकं निरुपितत्वसंबन्धेनान्वयः. राजनिरूपितस्वत्वमित्याकारकबोधः।

**धात्वर्थस्य प्रत्ययार्थेन सम**मित्यस्योदाहरणं भवति चैत्रो गच्छतीत्यादौ गम्धात्वर्थस्य उत्तरदेशसंयोगावच्छिन्नव्यापाराख्यस्य गमनस्याख्यातार्थे कृतावनुकूलत्वसंबन्धेनान्वयः।

**क्वचित्-प्रातिपदिकार्थस्य निपातार्थेन समं** इत्यस्योदाहरणं भवति घटो न पट इति। अत एव न्याये निपातातिरिक्तत्वविशेषणम् अन्यथा घटो न पट इत्यत्र घटपदार्थस्य नञर्थाभावेन साकं प्रतियोगित्वसंबन्धेनान्वयबोधो न स्यात्। एवमेव मुखं चन्द्र इव इत्यादावपि चन्द्स्य स्वप्रतियोगित्वसंबन्धेन मुखस्य चानुयोगिकत्वसंबन्धेन इवार्थे शादृश्येऽन्वयबोधो (चन्द्रप्रतियोगिकशादृस्यानुयोगिक मुखं इत्याकारको बोधो) न स्यात् **क्वचित् धात्वर्थस्य निपातार्थेन सम**मित्यस्योदाहरणं भवति न कलञ्जं भक्षयेदिति।

अत एव न्याये क्रिया -निपातातिरिक्तनामार्थयोश्च भेदेनान्वयबोधस्याव्युत्वन्नत्वमित्यपि वक्तव्यम् अर्थात् क्वचित् निपातार्थेन साकं धात्वर्थस्य भेदेनान्वयबोधे भवति। अत्र न्यायनये विध्यर्थो भवति बलवदनिष्टाननुवन्धित्वविशिष्टेष्टसाधनत्वम्, तथा च ऩञर्थो भवति बलवदनिष्टाननुवन्धित्वविशिष्टेष्टसाधनत्वाभावः, तथा च एतादृशस्य नञर्थाभावस्यानुयोगिकत्व संबन्धेन धात्वर्धे भक्षणपदार्थे अन्वयं कृत्वा कलञ्जभक्षणं बलवदनिष्टाननुवन्धित्वविशिष्टेष्टसाधनत्वाभाववदित्याकारकोऽन्वयबोधः संपद्यते। आहत्य न्यायस्य स्वरूपं भवति **निपातातिरिक्तनामार्थयो क्रिया- निपातातिरिक्तप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वम्।**

**भूतले घटः** इत्यादौ भूतलपदार्थस्य विभक्त्यर्थं नाम सप्तम्यर्थाधेयत्वं द्वारीकृत्य भेदेन भूतलपदार्थस्य आधेयतासंबन्धेन घटेऽन्वयः क्रियते, अर्थात् भूतलनिरूपितवृत्तितावान् घट इति बोधो जायत अत साक्षादित्युक्तमिति,

---

[1]व्युत्पत्तिवादः भेतान्वयबोधप्रकरणम्

**उपसंहारः-**

तर्हि भेदान्वयबोधः प्रातिपदिकस्य प्रातिपदिकेन समं, धात्वर्थस्य धात्वर्थेन समं, प्रत्यययार्थस्य प्रत्ययार्थेन समं, निपातार्थस्य निपातार्थेन समं न भवतीति दिङ्निर्देशमात्रम्।

**सन्दर्भग्रन्थसूची।**

१. भट्टाचार्य-गदाधरः **व्युत्पत्तिवादः**ई,सन्, 2005 चौखम्बासंस्कृतपुस्तकालयः वाराणसी।

२. भट्टाचार्य-गदाधरः**गादाधरी**ई,सन्,2007,चौखम्बा संस्कृत सीरिज आाफिस वाराणसी।

३. तर्कालङ्कार-जगदीशः,**शब्दशक्तिप्रकाशिका**,ई,सन्,2007चौखम्बासंस्कृतसंस्थान वाराणसी।

४. तर्कवागीश-मथुरानाथः **माथुरी**, ई,सन्,2020चौखम्बा संंस्कृत प्रतिष्ठान।

५. शास्त्री-ढुण्ढिराजः **न्यायदर्शनम्**, ई,सन्,2021 चौखम्बा संस्कृत भवन।

६. भट्ट-अन्नम् **तर्कसङ्ग्रहः**,ई,सन्,2003 चौखम्बा संस्कृत पुस्तकालय वाराणासी।

७.भट्टाचार्य-विश्वनाथपञ्चाननः **न्यायसिद्धान्तमुक्तावली**, ई सन्, 2011 चौखम्बासंस्कृत पुस्तकालय वाराणासी।

# भूगोलः

**डा.प्रसाद भट्टः**

सहायकाचार्यः [संविदा], श्री रणवीरपरिसरः जम्मू

आचार्यः भास्करः- **भूमेः पिण्डः शशाङ्कज्ञ..**[1] इत्यादिश्लोके पाञ्चभौतिकः भूपिण्डः चन्द्रादिनक्षत्रान्तकक्ष्यावृत्तैः[2] संवृतः विशिष्य अन्याधारं विना स्वशक्त्या एव आकाशे तिष्ठति[3] इति इमां भूमिकां पौराणिकादिमतनिराकरणपूर्वकस्वानुभवसिद्धदृक्प्रतीतिविषयनिरूपणाय प्रास्तौत्। यथा –

पुराणेषु इतिहासे[4] च क्वचित् आदिशेषः स्वशिरसि भूमिं बिभर्ति इति उल्लेखः वर्तते। यदि आदिशेषः भूमिं धरति तर्हि आदिशेषस्य धर्ता कः? तद्धर्तुः धर्ता च कः? इत्येवम् आधारपरम्परा ऊहनीया भवति, तथा च अन्तिमः आधारः यः भवति तस्य स्वशक्तिः एव कल्पनीया। तदपेक्षया कल्पनालाघवेन भूमिः एव स्वशक्त्या आकाशे नियतं तिष्ठति इति निरूपणमेव प्रशस्तम् इति आचार्यास्य मतम्[5]। अस्मिन्नेव प्रसङ्गे आचार्यः वेदेषु[6] आर्षसिद्धान्तग्रन्थेषु[7] च नामान्तरेण व्यवहृतां भुवः आकर्षणशक्तिम् **आकृष्टिशक्तिश्च मही**[8] इति निरूपयति।

बौद्धाः तावत् एवं मन्वते[9] – भुवं परितः यत् भपञ्जरं दृश्यते तत् सर्वदा चलम्, यतः आकाशे यत् किमपि वस्तु अचलं न तिष्ठति अतः आधाररहिता भूः अपि आकाशे प्रतिक्षणम् अधोऽधः पतति इति। यद्येवं तर्हि आकाशे यत् पाषाणखण्डादि गुरुमद् वस्तु क्षिप्यते तत् भुवं न प्रत्यागच्छेत्, यतः यावता कालेन आकाशे क्षिप्तं वस्तु अधः भूमिं प्रति आगच्छेत् तावता भूमिः तदपेक्षया क्षिप्रगत्या अधः पतेत् । कदापि नैवं सम्भवतीति हेतोः बौद्धानां वादः युक्तिशून्यः इति अभिप्रायः[10]।

जैनास्तु एवमभिप्रयन्ति[11] – द्वौ सूर्यौ, द्वौ चन्द्रौ, द्वे नक्षत्रमण्डले चेति। यतः तेषां सिद्धान्ते दर्पणोदरवत् समतला भूः, तन्मध्ये चतुर्भुजाकारकः मेरुपर्वतः स्थितः वर्तते। एवं सति मेरोः एकस्मिन् कोणे यदा रविचन्द्रतारकाः, न तदा अन्यस्मिन् कोणे भवितुमर्हन्ति, अतः सूर्यादीनां द्वित्वमिति तेषां मतम्। तद्यथा-

---

[1] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.२
[2] द्रष्टव्यम्- सूर्यसिद्धान्तः-अ-१२-श्लो.३१
[3] द्रष्टव्यम्- सूर्यसिद्धान्तः-अ-१२-श्लो.३२
[4] इमां महीं शैलवनोपपन्नां ससागरग्रामविहारपत्तनाम्। त्वं शेष सम्यक् चलितां यथावत् संगृह्य तिष्ठस्व यथाऽचला स्यात्॥ (म.भा/आदिपर्व-अ.३६ इति शब्दार्थकौस्तुभः_पृ.सं.२६१०) 'शेषः सदैवाहितभूमिभारः' इति कालिदासः अपि अमुमेवार्थं शाकुन्तले(५-४) दृढयति।
[5] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.४-५
[6] द्रष्टव्यम् – ऋग्वेदः-१-६-५/ १-३५-९/ १-१०३-२/ १-१६४-१३/ ८-१२-२८/ ८-१२-३० / १०-१४९-१
[7] द्रष्टव्यम्- सूर्यसिद्धान्तः-अ-१२-श्लो.३२
[8] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.६
[9] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.७
[10] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.९
[11] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.८

ISSN : 2249-538X







यद्येवं मन्यते तर्हि ध्रुवमत्स्यनक्षत्रपुञ्जस्य[1] परिभ्रमणम् असङ्गतं स्यात्। यतः भरणीनक्षत्रस्थस्य रवेः अस्तमनकाले उदयकाले च ध्रुवमत्स्यपुच्छभागे एव तस्य दर्शनात्[2] । यदि द्वौ सूर्यौ भवतः तर्हि एकः ध्रुवमत्स्यस्य पुच्छभागे अस्तमितः चेत् अपरः मुखभागे उदितः भवेत्, तथा अदर्शनात् जैनानां मतमपि युक्तिरहितमिति सिद्धम्।

**भूगोले पुरनिवेशः –**

भूगोले प्राधान्येन भूमध्यरेखायां चत्वारि, ध्रुवप्रदेशयोः एकैकं चेति आहत्य षट् पुराणि प्राचीनैः प्रोक्तानि। तत्रादौ लङ्का, ततः पूर्वस्यां 90° अन्तराले यमकोटिः, लङ्कातः पश्चिमायां 90° अन्तराले रोमकम्, अस्मात् अपि पश्चिमायां 90° अन्तराले सिद्धपरं चेति एतानि चत्वारि नगराणि भूमध्यरेखायां स्थितानि सन्ति। एतेभ्यः चतुर्भ्यः अपि पुरेभ्यः उत्तरस्यां 90° अन्तराले सुमेरुः, दक्षिणस्यां 90° अन्तराले कुमेरुः च भवति।[3] एतेभ्यः भूमध्यरेखादेशेभ्यः स्वदेशः कियदन्तरितः इति स्वदेशसम्बद्ध निरक्षदेशस्य ज्ञानम् अनेन सिद्ध्यतीति केवलम् एतानि एव पुराणि प्राचीनैः उदाहृतानि।

**द्वीपानां समुद्राणां च स्थानानि –**

भूगोलः उत्तरगोलार्धं दक्षिणगोलार्धं चेति द्विधा विभक्तः। तत्र उत्तरगोलार्धे एकः महाद्वीपः, दक्षिणगोलार्धे च अवशिष्टाः षट् लघुद्वीपाः सन्ति। तत्र तावत् उत्तरगोलार्धे भूभागः, दक्षिणगोलार्धे जलभागः च अधिकतया दृश्यते इत्यतः दक्षिणगोलार्धे लघुरूपाणि षट् द्वीपानि व्यवस्थितानि।

[1] ध्रुवनक्षत्रस्य समीपे विद्यमानं मत्स्याकारकं नक्षत्रपुञ्जम्। द्रष्टव्यम् - https://hi.wikipedia.org/wiki/ध्रुवमत्स्य_तारामंडल
[2]द्रष्टव्यम्- https://docs.google.com/document/d/1hc3ES9WbkRiDnHx2TmmlW8Geyv8nAW8_/edit
[3] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.१७-२०

आदौ उत्तरगोलार्धम् अवलोकयामः। उत्तरगोलार्धभागः एव जम्बूद्वीपम्[1] इत्युच्यते। अस्मिन् जम्बूद्वीपे नव खण्डानि सन्ति। अस्य जम्बूद्वीपस्य क्षारसमुद्रस्य च सन्धिः एव निरक्षदेशः, तन्निरक्षदेशे एव पूर्वोक्तानि चत्वारि नगराणि स्थितानि। तेभ्यः चतुर्भ्यः नगरेभ्यः उपर्युपरि विभागेन नव खण्डानि सम्भवन्ति। तानि यथा[2] – १.भारतवर्षम् २.किन्नरवर्षम् ३.हरिवर्षम् ४.इलावृतवर्षम् ५.कुरुवर्षम् ६.हिरण्मयवर्षम् ७.रम्यकवर्षम् ८.भद्राश्ववर्षम् ९.केतुमालवर्षं च। तत्र द्वयोः द्वयोः वर्षयोः मध्ये एकैकः महापर्वतः अपि व्यवस्थितः। यथा – १.हिमगिरिः २.हेमकूटः ३.निषदः ४.शृङ्गवान् ५.शुक्लः ६.नीलः ७.माल्यवान् ८.गन्धमादनः ९.मेरुः चेति।

तत्र लङ्कायाः उत्तरभागे भारतवर्षं तदुत्तरभागे हिमगिरिः, ततः उत्तरदिशि किन्नरवर्षं, तदुपरि हेमकूटपर्वतः, तस्याप्युत्तरदिशि हरिवर्षं, ततः उपरि निषधपर्वतः इति व्यवस्था। एवमेव लङ्कातः पूर्वस्यां विद्यमानात् यमकोटिपत्तनात् उत्तरभागे भद्राश्ववर्षं, तदुत्तरदिशि माल्यवान् गिरिः च वर्तते। यमकोटितः पूर्वस्यां यत् सिद्धपुरं विद्यते ततः उत्तरदिग्भागे कुरुवर्षं, तस्मात् उपरि शृङ्गवान् पर्वतः, ततः अग्रे हिरण्मयवर्षं, तत ऊर्ध्वं शुक्लपर्वतः, ततोऽप्युत्तरदिशि रम्यकवर्षं, तदग्रे नीलपर्वतः च स्थितः। सिद्धपुरात् पूर्वभागे अथवा लङ्कातः पश्चिमभागे वर्तमानात् रोमकात् उत्तरस्यां दिशि केतुमालवर्षं, तदुत्तरभागे गन्धमादनपर्वतः च भवति। क्रमशः एतेषां स्थितिः यथा -




निषध-गन्धमादन-नील-माल्यवत्पर्वतानाम् उपरिष्टात् इलावृतवर्षं तन्मध्ये मेरुपर्वतः च भवति। [मेरोः उपरिभागे ब्रह्मादीनां निवासस्थानानि, इन्द्रादिलोकपालानां पुराणि, मेरुमभितः चतसृषु दिक्षु चत्वारः आधारपर्वताः, तेषु

[1] **"सुगन्धशैलमस्तके केतुवृक्षः जम्बूः, येनेदं जम्बूद्वीपमुच्यते"** _सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.३२-वासनाभाष्यम्।
[2] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.२१, २६-३०

पृथक् पृथक् चत्वारः केतुवृक्षाः वनानि नद्यः, देवगङ्गायाः चतस्रः धाराः चेत्यादयः पुराणाश्रिताः विशेषविचाराः आचार्येण वर्णिताः सन्ति [1]।]

जम्बूद्वीपस्य भारतवर्षे अपि नव खण्डानि विद्यन्ते, सप्त कुलाचलाश्च सन्ति[2]। तत्र खण्डानि यथा – १.ऐन्द्रखण्डम् २.कशेरुशकलखण्डम् ३.ताम्रपर्णखण्डम् ४.गभस्तिमत्खण्डम् ५.कुमारिकाखण्डम् ६.नागखण्डम् ७.सौम्यखण्डम् ८.वारुणखण्डम् ९.गान्धर्वखण्डं चेति। कुलाचलाश्च यथा – १.माहेन्द्रः २.शुक्तिः ३. मलयः ४.ऋक्षः ५.पारियात्रः ६.सह्यः ७.विन्ध्यः चेति।

सम्प्रति दक्षिणगोलार्धम् अवलोकयामः। अत्र तावत् निरक्षात् (दक्षिणभागे) अधोऽधः क्रमेण सप्त सागराः सन्ति[3]। ते यथा – १.क्षारसमुद्रः २.क्षीरसमुद्रः ३.दधिसमुद्रः ४.घृतसमुद्रः ५.इक्षुरससमुद्रः ६.मद्यसमुद्रः ७.स्वादूदकसमुद्रः चेति। अत्र द्वयोः द्वयोः समुद्रयोः मध्ये एकैकं द्वीपं व्यवस्थितम्, यथा – १.शाकद्वीपम् २.शाल्मलद्वीपम् ३.कुशद्वीपम् ४.क्रौञ्चद्वीपम् ५.गोमेदकद्वीपम् ६.पुष्करद्वीपं[4] चेति। उभयोः दक्षिणोत्तरगोलयोः द्वीपसमुद्रपर्वतानां स्थानानि एवं दर्शयितुं शक्यन्ते –




[1] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.३१-४०
[2] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.४१-४२
[3] सिद्धान्तशिरोमणिः-भुवनकोशः-श्लो.२२-२५
[4] एतेषां षण्णां मध्ये पञ्चसु द्वीपेषु पृथक् पृथक् सप्त कुलाचलाः, पुष्करद्वीपे च एकः कुलपर्वतः इति विष्णुपुराणे उल्लेखः वर्तते इति शब्दार्थकौस्तुभे (पृ.सं.७५७) उल्लेखः वर्तते।

 ISSN : 2249-538X




इत्थम् आचार्येण भास्करेण भूगोलस्वरूपम् उपवर्णितम्। एते सर्वे अपि विषयाः वराहपुराणे[1] विस्तरशः उपलभ्यन्ते। ते एव विचाराः आचार्येण सङ्गृह्य सिद्धान्तशिरोमणौ निबद्धाः सन्ति। अस्मद्भारतीयानां प्राचीनाचार्याणां भौगोलिकं ज्ञानं कियत् निस्सन्दिग्धम् आसीत् इत्यत्र एतदेकं लघु निदर्शनम् ।

**<u>अनुशीलितग्रन्थाः</u>**

१. **ऋग्वेदसंहिता** - स्वाध्याय मण्डल, पारडी, 1954

२. **महाभारतम्** - स्वाध्याय मण्डल, पारडी, 1968

३. **वराहपुराणम्** - चौखम्बा कृष्णदास अकादमी-2014

४. **शब्दार्थकौस्तुभः**- Bappco Publication, Bangalore, 2007

५. **सिद्धान्तशिरोमणिः** - चौखम्बा संस्कृत संस्थान, वाराणसी, 2005

६. **सूर्यसिद्धान्तः** - चौखम्बा संस्कृत भवन, वाराणसी, 2006

७. **स्कन्दपुराणम्** - गीताप्रेस गोरखपुर, 1951

**Indian sky map** _ Android Application (Version 2.0)

https://theskylive.com/planetarium _ **Astronomy software**

[1] वराहपुराणम्-अ.७५-८०

# स्वामिदयानन्दकृतयजुर्वेदभाष्येऽलङ्काराणां महत्त्वमुपादेयता च

**गौरवकुमारः,** शोधच्छात्रः
श्रीलालबहादुरशास्त्रीराष्ट्रीयसंस्कृतविश्वविद्यालयः
नई दिल्ली- 110016

**Keywords-**

यजुर्वेदभाष्यम्, अलङ्काराणां महत्त्वम्, अथर्ववेदः, काव्यप्रकाशः, धातुपाठः, यजुर्वेदभाष्यस्य पदार्थः भावार्थश्च, ।

**Abstract**

काव्यशास्त्रेऽलङ्काराणां प्राधान्यं विशिष्टं वर्त्तते। वेदाः काव्यत्वेन संसारेऽस्मिन् ख्यातिलब्धास्सन्ति। अलङ्कारप्रयोगेण वेदार्थोऽपि विशिष्टो जायते। स्वामिदयानन्दकृतयजुर्वेदभाष्यस्य एकां विशिष्टां शैलीं लभ्यते यत् एष ग्रन्थकारः स्वकीयभाष्ये प्रत्येकमन्त्रस्य क्रमशः ऋषि, देवता, छन्दः, स्वरः, विषयनिर्देशः, हिन्दीभाषया विषयनिर्देशः, मन्त्रस्य पाठः, संस्कृतभाषया पदार्थः, अन्वयः, संस्कृतभावार्थः अनन्तरं हिन्दी भाषयाभावार्थः इत्येवं क्रमशः विभज्य भाष्यं कृतवान्। संस्कृतभावार्थान्तर्गते स्वामिदयानन्दैः अलङ्काराणां नामानि निर्दिष्टा वर्त्तन्ते। काव्ये रसाः अलङ्काराः, छन्दांसि च आधारभूतत्वेन सदैव विद्यमाना भवन्ति। अलङ्काराणामऽपि प्रयोगः काव्यभूते वेदे समुपलभ्यत एव।

वेदभाष्यकारेषु स्वामिदयानन्दः प्रयोगतिशयतयाऽलङ्काराणां परिचर्चा विहिता वर्त्तते। अनेकत्र तेषां प्रयोगेण अर्थवैलक्षण्यमपि प्रदर्शितवानस्ति। यजुर्वेदभाष्यस्य संस्कृतभावार्थे स्वामिदयानन्दः मुख्यतया उपमालङ्कारः, पूर्णोपमालङ्कारः, श्लेषालङ्कारः, वाचक लुप्तोपमालङ्कारः, इत्यादीनामलङ्काराणां प्रयोगः कृतवान्। तेषां वैशिष्ट्यप्रतिपादनमेवाऽस्य शोलेखस्य प्रधानोद्देश्यं वर्त्तते। वेदार्थेऽलङ्काराणामुपयोगिता सिद्ध्यर्थं शोधलेखस्यास्य विशिष्टं महत्त्वं स्थानञ्च भजते।

**Article**

आधुनिके भारते ऊनविंशति शताब्द्यां समुत्पन्नः स्वामिदयानन्दः मथुरायां गुरोर्विरजानन्दात् आर्षव्याकरणमधीत्य वेदानां भाष्याणि कर्त्तुमुपचक्रमे। सः महानुभावः सम्पूर्णस्य शुक्लयजुर्वेदस्य भाष्यं चकार। तदनन्तरं ऋग्वेदस्य भाष्यं कुर्वन् तस्य सप्तममण्डलस्य द्विषष्टितम सूक्तस्य द्वितीयमन्त्रपर्यन्तमेव भाष्यं कर्तुमशकत्। अनन्तरमेव विषदानेन दुष्टाः तं कालकवलितं कर्त्तुं सफलाः सञ्जाताः। अतस्ततोऽग्रे सः भाष्यं कर्त्तुं न शशाक। पश्चाद्वर्तिभिश्च तस्यानुयायिभिः अवशिष्टस्य ऋग्वेदस्य सामवेदस्याथर्ववेदस्य च भाष्यं विहितम्।

स्वामिदयानन्दः वेदभाष्यस्य एकां विशिष्टां शैलीं स्वीचकार। जगत्कल्याणधिया एष महानुभावः स्वकीयभाष्यं संस्कृतभाषया सममेव लोकभाषायामपि भाष्यं कृतवान्। न मनागपि तादृशो लेखः स्वामिनो लभते या केवलं संस्कृतभाषायामेव स्यात्। सर्वे लेखाः संस्कृतार्य्याभाषाभ्यां समन्विता वर्त्तन्ते। उभाभ्यां भाषाभ्यां रचितं वेदभाष्यं केवलं दयानन्दस्यैव वर्त्तते।

अस्मिन् भाष्ये प्रत्येकस्य मन्त्रस्य क्रमशः ऋषिनामोल्लेखः, देवता, छन्दः, स्वरः, विषयनिर्देशः पुनः हिन्दी भाषयाविषयनिर्देशः पुनः मूलमन्त्रः पुनः तस्य पदपाठः अनन्तरं पदार्थः (संस्कृतेन) अनन्तरमन्वयः

तदनन्तरं संस्कृतेन भावार्थः पुनः हिन्दी भाषया पदार्थः पुनः हिन्दीभाषया भावार्थः इत्येवं श्रेणिशो विभज्य भाष्यं शोभायितं वर्त्तते। अस्मिन्नेव भाष्ये बहुत्र सायाणादि आचार्याणां मतं निरीक्ष्य तस्य समीक्षाऽपि कृता वर्त्तते।

प्रत्यध्यायं विषयनिर्देशपुरस्रं पूर्वाऽध्यायेन सह संगतिरपि योजिताऽस्ति तेन ज्ञायते यत् स्वामिदयानन्दस्य भाष्ये पौर्वापर्यर्यस्य प्रकरणस्य च महत्वं सम्यगुत्पादितमस्ति। अनया संगत्या पूर्वाऽध्यायस्य विषयैः पराऽध्यायस्य विषयैः सह सम्यक् संगतिर्दरीदृश्यते। एतावत् सम्पूर्णं भाष्यम् अद्य पर्यन्तं कस्यापि भाष्यकारस्य न वर्त्तते।

वेदाः काव्यत्वेन जगति प्रसिद्धाः वर्त्तन्ते यजुर्वेदस्य चत्वारिंशेऽध्याये अष्टममन्त्रे ईश्वरः कविरूपेण स्मृतो वर्त्तते। तस्यैव कवेः परमेश्वरस्य कर्मभूतमेतत् काव्यं वेदनामकं वरीवर्त्ति वेदेऽपि गदितं यत्-

**"पश्य देवस्य काव्यं यो ममार न जीर्यति।"**

अर्थात् तस्य परमात्मदेवस्य काव्यं पदमयं वेदकाव्यं पदार्थमयं च जगत्काव्यमस्ति यन्न ममार नित्यत्वात् न च जीर्यति अजरत्वात्। आभ्यां प्रमाणाभ्यां सिद्धं यत् वेदाः परमेश्वरस्य काव्यभूता वर्त्तन्ते।

काव्ये रसाः, अलङ्काराः, छन्दांसि च स्तम्भत्वेन तत्वरूपत्वेन च सदैव विद्यमाना भवन्ति। वेदेष्वपि सर्वेषां रसानां सर्वेषां च छन्दसां प्रयोगः पदे-पदे दरीदृश्यत एव। अलङ्काराणामपि प्रयोगः काव्यभूते वेदे समुपलभ्यत एव। यद्यपि साहित्यशास्त्रे यावतामलङ्काराणां प्रयोगः स्पष्टतया दृश्यते तथा वेदे सर्वेषां तु नास्त्येव यथाहि सत्यविद्याकेन्द्रभूतत्वात् भ्रान्तिमान्, सन्देहाद्यलङ्काराणां प्रयोगः अत्र कथमपि नैव भवितुं शक्नोति किन्तु अनुप्राशादिनां शब्दालङ्काराणां उपमादिनामर्थालङ्काराणां च प्रयोगो यत्र तत्र सर्वत्रलब्धप्रसरो वर्त्तते। वेदभाष्यकारेषु स्वामिदयानन्दः अतिशयतया अलङ्काराणां प्रयोगः दर्शितवानस्ति। अनेकत्र तेषां प्रयोगेण अर्थवैलक्षण्यमपि प्रदर्शितवानस्ति। कतिपयैरुदाहरणैः एतत् निश्चेतुं शक्यते यत् कथं स्वामिनाऽलङ्कारप्रयोगेण अर्थवैलक्षण्यं प्रदर्शितवान्।

यजुर्वेदस्य तृतीयाऽध्याये उनपञ्चाशत्तमे मन्त्रे भाष्यं कुर्वन् संस्कृतभावार्थे स्वामिदयानन्दः लिलेख यत् 'अत्रोपमाऽलङ्कारः'[1] अर्थात् अस्मिन् मन्त्रे उपमालङ्कारो वर्त्तते। ज्ञायतां सुधीभिः यत् उपमाऽलङ्कारे चत्वारि तत्वानि भवन्ति। (1) उपमानम्, (2) उपमेयम्, (3) साधारणधर्मः, (4)वाचक शब्दः एभिश्चतुर्भिस्तत्वैः य उपमाऽलङ्कारः प्रकटीभवति। सोऽलङ्कारः पूर्णोपमेति निगद्यते।

अत्राऽपि मन्त्रे पूर्णोपमाऽलङ्कारो वर्त्तते। उपमानमत्र 'वस्ना' पण्यक्रिया वर्त्तते। उपमेयञ्च 'यज्ञः' साधारण धर्मः 'विस्तारः' वाचक शब्दश्च 'इव' पदमस्ति। एवमत्र पूर्णोपमाऽलङ्कारो वर्त्तत इति नास्ति शङ्कापङ्कलङ्कलेशाऽवसरः। तथाहि स्वामिदयानन्दः अस्य मन्त्रस्य भावार्थ प्रसङ्गे व्याख्या पुरस्सरं वक्ति यत् **'यथा वणिग्जनो रूप्यादिकं दत्त्वा गृहीत्वा द्रव्यान्तराणि क्रीणीते विक्रीणीते च, तथैवाग्नौ द्रव्याणि दत्त्वा प्रक्षिप्य वृष्टिसुखादिकं क्रीणीते वृष्ट्योषध्यादिकं गृहीत्वा पुनर्वृष्टये विक्रीणतेऽग्नौ होमः क्रियत इति।'** यथा कश्चिद्वस्त्रविक्रेता कुतश्चिद्वस्त्राणि आनीय स्वनगरे किञ्चित् तस्य मूल्यं वर्द्धयित्वाऽत्र विक्रीणीते तथैव यज्ञाग्नौ

[1] यजुर्वेदभाष्यम् 3/49

हुतं द्रव्यं किञ्चिद्वर्धयित्वा अग्निदेवः तद् द्रव्यं वायुजलादीन् सर्वान् प्रापयति इत्येषा 'उपमा' अत्र वर्त्तते। सत्यमेव स्वामिदयानन्दोऽत्रोपमाऽलङ्कारं जुघोष।

एवमेव प्रथमाऽध्याये एकादशमन्त्रस्य भावार्थे स्वामिदयानन्दः श्लेषालङ्कारं दर्शयामास। यत्र एकस्मिन्नेव पदे वाक्ये वा एकाधिका अर्थाः दृश्यन्ते तदानीं श्लेषाऽलङ्कारो भवति। अनयैव परिभाषया अत्र मन्त्रे अर्थत्रयं दर्शितवान् स्वामिदयानन्दः। श्लेषाऽलङ्कारेण अत्र मन्त्रे स्वामिदयानन्दः विदुषः प्रति परमेश्वरस्याऽदेशं ख्यापयति। अपरस्मिन् पक्षे च विद्वद्भिः ईश्वरं किं प्रार्थितव्यमिति प्रतिपादितम्। तृतीयपक्षे च विद्वांसः किमिच्छेयुः इति वर्णितवान् अस्ति। एवं त्रयोऽप्यर्थाः श्लेषाऽलङ्कारेणैव सन्साधनीयाः। तथैव च स्वामिदयानन्दः मन्त्रे त्रीन् अन्वयन् प्रस्तौति।

यजुर्वेदस्य पञ्चमेऽध्याये नवममन्त्रस्य व्याख्याप्रसङ्गे 'वाचकलुप्तोमाऽलङ्कारं' स्वीकृतवान् स्वामिदयानन्दः। अहं पूर्वमेव अस्मिन् लेखे वर्णितवान् यत् उपमाऽलङ्कारे चत्वारि तत्त्वानि भवन्ति तेषु चतुर्थं तत्त्वमस्ति 'वाचक शब्दः' यत्र वाचक शब्दस्य विनाऽपि प्रयोगे उपमानोपमेयौ साधारणधर्मश्च दृश्यन्ते तत्र वाचकलुप्तोपमाऽलङ्कारो भवति अत्राऽपि मन्त्रे उपमावाचकशब्दस्यराहित्ये उपमा प्रदीपते अतोऽत्र वाचकलुप्तोपमाऽलङ्कारः। भावार्थं लिखन् स्वामिदयानन्दः वर्णयति यत् **'यः प्रसिद्धसूर्य विद्युद्रूपेण त्रिविधोऽग्निः सर्वेषु लोकेषु बाह्याभ्यान्तरतो वर्त्तते तं विदित्वा विज्ञाप्य च सवैर्मनुष्यैः सर्वकार्यसिद्धिः सम्पादनीया।'** तथैव च अन्वये हे विद्यां जिघृक्षो! यथाऽहं इत्यादि शब्दं बारं बारं प्रयुक्तवान्। एतेन प्रयोगेण अत्रोपमा लक्ष्यते किन्तु मन्त्रे उपमायाः वाचकशब्दो न दृश्यते अतोऽत्र वाचकलुप्तोपमाऽलङ्कारः।

यजुर्वेदस्य तृतीयाऽध्याये द्विपञ्चाशत्तमे मन्त्रे एकत्रैव स्वामिदयानन्द अलङ्कारद्वयममन्यत्। अस्मिन् मन्त्रे अत्र 'श्लेषोपमालङ्काराविति' स्वामिनाजुघोष। एकत्रैव श्लेषोपमयोः प्रयोगेणाऽस्य मन्त्रस्य द्विधान्वयो विहितः स्वामिना। एकस्मिन् पक्षे इन्द्रपदेन परमात्मानं सम्बोध्य प्रार्थना कृताऽस्ति अपरस्मिन् पक्षे च सूर्यलोकेन प्रार्थना कृताऽस्ति तथा च उपमां प्रयुज्याऽन्वये लिखितमस्ति यत् **'यथा तेऽस्येन्द्रस्य हरी अस्मिन् जगति युङ्क्तः तथैव विद्यासिद्धिकराणि अनुप्रयोजेति।'** उभयोरलङ्कारयोः प्रयोगेणाऽस्य मन्त्रस्याऽर्थः विशिष्ट एव सञ्जातः। पश्यन्तु सुधियः यत् **'मनुष्यैः सर्वजगद्धितकारी जगदीश्वरो नैवेतरः। यथा सूर्यो मूर्तद्रव्याणि प्रकाशयति तथोपासितः सोपि भक्तजनात्मसु विज्ञानोत्पादनेन सर्वान्सत्यव्यवहारान् प्रकाशयति तस्मान्नैवेश्वरं विहाय कस्यचिदन्यस्योपासनं कर्तव्यमिति।'**

अलङ्कारप्रयोगेणैव परमेश्वरस्य सूर्यस्य च ग्रहणमत्र कर्त्तुमशक्यत। मन्त्रस्य देवतारूपेणाऽत्र इन्द्रो गृहीतोऽस्ति इन्द्र शब्दः सूर्यस्य परमेश्वरस्य च वाचकत्वेन प्रयुक्तो वर्त्तते। मन्त्रे च 'वन्दिषीमहि' इति प्रयोगेण अभिवादयेम स्तुवीमहि चाऽर्थौ 'वदि अभिवादन स्तुत्योः' इति धातुप्रयोगेण गृह्येते। स्तुतिस्तु सूर्यस्य परमेश्वरस्य च भवितुं शक्नोति किन्त्वभिवादनं तु चेतनेन परमेश्वरेणैव कर्त्तुं सम्भाव्यते अत उभावप्यर्थौ ग्राह्यावेव। तयोश्चार्थयोः ग्रहणमलङ्कारप्रयोगेण सुकरं भवति अतोऽत्रालङ्कार प्रयोगो भाष्यकृतः स्वामिनो दयानन्दस्य वैशिष्ट्यं वैलक्षण्यञ्च ख्यापयति। अलङ्कारप्रयोगेण वेदार्थोऽपि विशिष्टो जायते।

**Bibliography-**

यजुर्वेदभाष्यम्, स्वामिदयानन्दः, (संस्कृतार्य्य भाषाभ्यां समन्वितम्) (चत्वारोभागः) वैदिकपुस्तकालयः केसरगंजः अजमेरः

धातुपाठः, पाणिनिः, हरियाणा साहित्यसंस्थानम्, गुरुकुलझज्झरः (हरियाणा)

काव्यप्रकाशः, आचार्य मम्मटः

अथर्ववेदः, त्रिवेदी क्षेमकरणदासः, सार्वदेशिक आर्य प्रतिनिधि सभा

**Endnotes-**

1. क. 'इदमपिपदमुवट महीधराभ्यामन्यथैव व्याख्यातम्, 'महीधरेणात्र शपो लुगित्यशुद्ध व्याख्यातम्। द्रष्ट्व्यः यजुर्वेदभाष्यम् स्वामि दयानन्दः 1/15 ख. 'अत्र महीधरेण भ्रान्त्या अभिविख्येषमिति पदं ख्या प्रकथने इत्यस्य दर्शनार्थे गृहीतं तत् धात्वर्थादेव विरूद्धम्।' द्रष्टव्यः यजुर्वेदभाष्यम् (स्वामी दयानन्द 1/11), ग. इदं पदं महीधरादिभि व्याकरणज्ञानविरहित्वात् गृहस्य पतिः पालक इत्यशुद्धं व्याख्यातम् यजुर्वेदभाष्यम् 3/39
2. स पर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम्।
3. कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः।। यजुर्वेदः 40/08
4. द्रष्टव्यः अथर्ववेदः 10/8/22
5. यजुर्वेदभाष्यम् 3/49
6. यजुर्वेद भाष्यम्, प्रथमो भागः, पृ. 173, मं.सं. 3/49
7. वाच्यभेदेन भिन्ना यद् युगपद भाषणस्पृशः।
   श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा।।
8. श्लेषः स वाक्य एकस्मिन् यत्रानेकार्थता भवेत्। काव्यप्रकाशः नवमोल्लासः
9. द्रष्टव्यः यजुर्वेदभाष्यम् 5/9
10. यजुर्वेद भाष्यम् 3/52
11. द्रष्टव्यः यजुर्वेदभाष्यम्, अन्वयः 3/52
12. धातुपाठः भ्वादिगणः 11

# निर्विकल्पकज्ञानविचारः

शशांक शिवराम भट्टः
अतिथ्यध्यापकः, न्यायविभागः
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

Keywords

प्रत्यक्षज्ञानम्, प्रत्यक्षविभागः, वैशिष्ट्यानवगाहि ज्ञानम्, अव्यपदेश्यम्

Article

तत्र बौद्धास्तावत् सर्वमपि प्रत्यक्षं निर्विकल्पकमेवेति ब्रुवते। जैनाः सर्वं प्रत्यक्षं सविकल्पकमेवेत्यातिष्ठन्ते । 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते'[1] इति वदता भर्तृहरिणापि सर्वमपि प्रत्यक्षं शब्दावच्छिन्नार्थविषयकत्वात् सविकल्पकमेव इत्यङ्गीक्रियते । निर्विकल्पकं सविकल्पकं चेति प्रत्यक्षद्वयं नैयायिकादयः अङ्गीकुर्वन्ति । न्यायसूत्रे कुत्रापि निर्विकल्पकसविकल्पकशब्दाभ्यां प्रत्यक्षविभागः न प्रदर्शितः । इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्भिचारि व्यवसायकं प्रत्यक्षम्[2] इति प्रत्यक्षलक्षणसूत्रे अव्यपदेश्यम्, व्यवसायात्मकम् इति पदाभ्यां निर्विकल्पकसविकल्पके विवक्षिते इति तात्पर्यटीकाकाराः वाचस्पतिमिश्राः लिखन्ति । परं तु भाष्ये वार्तिके वा एवंरीत्या निरूपणं न दृष्टुं शक्यते । तत्रादौ पृथिव्यादिगुणास्तदर्थाः[3] इति न्यायसूत्रे पृथिव्यादिनिष्ठानां गन्धादिगुणानामिन्द्रियजन्यप्रत्यक्षविषयत्वमुक्तम् । अनेन च प्रत्यक्षविषयस्य घटादेः गुणनिष्ठप्रकारतानिरूपितविशेष्यत्वं सूचितम् । तथा च गुणविशिष्टद्रव्यविषयकप्रत्यक्षं सविकल्पकात्मकं सूत्रसम्मतमेव । तदुक्तं न्यायभूषणे - 'सविकल्पकमपि प्रत्यक्षं पृथिव्यादिगुणास्तदर्थाः' इत्यनेन लेशतः सूचितम् (न्यायसारः) इति।

**तात्पर्यटीकाकारमतम्**

सूत्रस्थेन अव्यपदेश्यशब्देन निर्विकल्पकं ज्ञानमुच्यते । तत्र व्यपदेशः नाम विशेषणमुपलक्षणं वा नामजात्यादि, तत्कर्म व्यपदेश्यं विशेष्यमिति । अविद्यमानं व्यपदेश्यं यस्मिंस्तत् अव्यपदेश्यम् । यत् प्रत्यक्षं जात्यादिमात्रं विषयीकरोति, न तु जातिव्यक्त्यादीनां मिथो विशेषणविशेष्यभावं तत् निर्विकल्पकपदवाच्यं प्रत्यक्षमव्यपदेश्यपदेन बोध्यते । व्यवसायात्मकपदेन च सविकल्पकं प्रत्यक्षमुच्यत इति ।

**निर्विकल्पकज्ञानविचारः**

प्रशस्तपादभाष्ये – 'द्रव्ये तावद्विविधे महत्यनेकद्रव्यवत्त्वोद्भूतरूपप्रकाश- चतुष्टयसंनिकर्षाद्धर्मादिसामग्र्ये च स्वरूपालोचनमात्रम्[4] इति ग्रन्थेन निर्विकल्पकप्रत्यक्षं प्रदर्शितम् । स्वरूपालोचनमात्रमित्यस्य स्वरूपमात्रस्य ग्रहणमिति तात्पर्यम् । मात्रशब्देन जातिसम्बन्धविषयकत्वं व्यवच्छिद्यते । ततः-

[1] वाक्यपदीयम्-ब्रह्मकाण्डम् ।

[2] न्यायसूत्रम् 1-1-4

[3] न्यायसूत्रम् 1-1-14

[4] प्रशस्तपादभाष्यम् ।

'सामान्यविशेषद्रव्यगुणकर्मविशेषणापेक्षात् आत्ममनस्संनिकर्षात् प्रत्यक्षमुत्पद्यते सत् द्रव्यं पृथिवी विषाणी शुक्लो गौर्गच्छतीति इति ग्रन्थेन सविकल्पकप्रत्यक्षं सोदाहरणमुपदर्शितम् । तत्र कुमारिलभट्टा अपि -

अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ।।[1]
इति श्लोकेन निर्विकल्पकं निरूप्य,
ततः परं वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता ।।
इति श्लोकेन सविकल्पकं च प्रत्यक्षमङ्गीकुर्वन्ति ।

अद्वैतपरिभाषायामपि अयं विभागः प्रतिपादितः । परं तु विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वे मानाभावात् इन्द्रियजन्यं प्रत्यक्षं सर्वमपि सविकल्पकमेव, तत्त्वमसि इत्याद्यखण्डार्थपरवाक्यजन्यं प्रत्यक्षमेव निर्विकल्पकमिति परिभाषाकारा आशेरते ।

**निर्विकल्पकलक्षणम्**

नामजातिगुणद्रव्यक्रियाविशिष्टविषयकं प्रत्यक्षं सविकल्पकम् । जात्यादीनां व्यक्त्या सह विशेषणविशेष्यभावावगाहि प्रत्यक्षं सविकल्पकमिति तात्पर्यम् । यत्र तु ज्ञाने जात्यादिकं तदाधारभूतव्यक्तिश्च भासते, परं तु तयोर्विशेषणविशेष्यभावो न भासते, तन्निर्विकल्पकं प्रत्यक्षमिति तात्पर्यटीकातोऽवगम्यते ।

तत्त्वचिन्तामणौ तु नामजात्यादियोजनारहितं वैशिष्ट्यानवगाहि निष्प्रकारकं निर्विकल्पकम् इति निर्विकल्पकलक्षणं प्रादर्शि, अत्र वैशिष्ट्यानवागाहीत्यस्यैव निष्प्रकारकमित्यर्थः । निर्विकल्पके प्रकारताख्यविषयताशून्यत्वमिव विशेष्यताख्यविषयताशून्यत्वमपि वर्तते अतः निर्विशेष्यकं ज्ञानं निर्विकल्पकमित्यपि वक्तुं शक्यते । प्रकारताशून्यं, संसर्गताशून्यं, विशेष्यताशून्यं च ज्ञानं निर्विकल्पकमित्युपपादनमपि सम्भाव्यते । तथा अनुक्त्वा केवलं निष्प्रकारकमिति वदतां मणिकाराणामयमाशयः- यथा सविकल्पकस्य विशिष्टज्ञानत्वात् ततः पूर्वं विशेषणज्ञानं कल्प्यते, तथा निर्विकल्पकस्य हेतुतया ज्ञानान्तरं नापेक्षितमिति ।

अस्य च निर्विकल्पकज्ञानस्य आकारो नास्ति । यद्यपि 'इदं किंचित्' इति ज्ञानं निर्विकल्पकमिति क्वचित्तर्कसङ्ग्रहादौ दृश्यते, तथापि नामजात्याद्यविषयकं ज्ञानं इत्यत्रैव तस्य ग्रन्थस्य तात्पर्यमिति स्वीकर्तव्यम्, न तु सः ग्रन्थः निर्विकल्पकाकारप्रदर्शनपरः । तथा सति इदन्त्वावछिचन्नविशेष्यककिंचित्त्वप्रकारकत्वेन तस्यापि सविकल्पकत्वापत्तेः ।

**निर्विकल्पके प्रमाणम्**

एतादृशनिर्विकल्पकसद्भावे किं प्रमाणमिति जिज्ञासायां मणिकारमतानुसारेण एवं चिन्तयितुं शक्यते । तत्र यद्यपि -

1. वैशिष्ट्यानवगाहिनि निर्विकल्पकात्मके ज्ञाने न प्रत्यक्षं प्रमाणम् । निर्विकल्पकज्ञानस्यातीन्द्रियत्वाङ्गीकारात् ।

[1] श्लो.वा.प्र.112

2. 'अयं गौः' इत्यादिशब्दप्रयोगात्मको व्यवहारो निर्विकल्पके प्रमाणम् इत्यपि न वक्तुं शक्यते । यतो हि शब्दप्रयोगं प्रति सविकल्पकज्ञानस्यैव कारणत्वेन व्यवहारः सविकल्पकसद्भावे एव प्रमाणं भवति न तु निर्विकल्पकसत्त्व इति ।

3. 'इदं पूर्वं मया संमुग्धतया ज्ञातम्, अधुना तु सम्यग्जानामि' इत्याकारकः अनुभवः तत्र प्रमाणं, तस्यार्थस्तु पूर्वम् अल्पविशेषणवत्तया ज्ञातम्, अधुना बहुविशेषणवत्तया जानामीति, तेनानेन अनुभवेन निष्प्रकारकज्ञानस्य तु सिध्दिः न भवितुमर्हति ।

4. तर्हि 'अयं गौः' इति ज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् 'दण्डीपुरुषः' इति विशिष्टज्ञानवदित्यनुमानेन गोत्वमात्रविषयकं निर्विकल्पकज्ञानं सिध्यति इत्यपि स्वीकर्तुं न शक्यते, यतो हि दृष्टान्तस्यात्र साध्यविकलत्वात्, दण्डपुरुषयोरुभयोरपि युगपदिन्द्रियसंनिकर्षे सति दण्डज्ञानं विनैव युगपदेव दण्डीति ज्ञानस्यानुभवात् । तथापि एतज्जन्मनि प्राथमिकं गौरिति प्रत्यक्षं जन्यविशेषणज्ञानजन्यम्, जन्यविशिष्टज्ञानत्वात् अनुमितिवत् इत्यनुमानं तत्र प्रमाणम् । यथा 'पर्वतो वह्निमान्' इत्यनुमितिः वह्निविशिष्टपर्वतविषयिणी वह्निरूपविशेषणज्ञानात्मकसाध्यप्रसिद्धिजन्या तथा प्राथमिकं गौरिति विशिष्टप्रत्यक्षमपि गोत्वात्मकविशेषणज्ञानादेवोत्पद्यते वक्तव्यम् । तदेव गोत्वज्ञानं वैशिष्ट्याद्यविषयकं निर्विकल्पकमिति अर्थात्सिध्यति ।

ननु तत्र प्राथमिकविशिष्टप्रत्यक्षं प्रति गोत्वरूपविशेषणस्मरणस्यैव हेतुत्वकल्पनस्योचितत्वात्, तथा च न निर्विकल्पकप्रत्यक्षं सिध्यतीत्ययपि वक्तुं न शक्यते, एतज्जन्मनि पूर्वं गोत्वस्य अनुभवाभावेन तत्स्मरणस्यापि असम्भवात् । तर्हि आद्यस्तन्यपानादौ अदृष्टेनोद्बोधितः जन्मान्तरीयानुभवजनितः संस्कारः यथा इष्टसाधनतां स्मारयति इति प्रवृत्तिस्थले निर्वाहः कृतः, तथा अदृष्टविशेषेण उद्बोधितः जन्मान्तरीयसंस्कारः गोत्वस्मृतिमुत्पादयति, तद्बलेनैव आद्यं विशिष्टप्रत्यक्षं भवितुमर्हतीति न निर्विकल्पकसिद्धिरिति भवति खल्विति न चिन्तनीयम् । आद्यस्तन्यपानादौ गत्यन्तराभावेन जन्मान्तरीयसंस्कारोद्बोधकल्पने क्रियमाणेऽपि प्रकृते इन्द्रियसंनिकृष्टगोत्वविषयकनिर्विकल्पकस्य स्वीकारेणैव विशिष्टज्ञानस्य उपपत्त्या जन्मान्तरीयानुभवजनितसंस्कारोद्बोधकादृष्टस्य कल्पनाया अन्याय्यत्वात्[1] । अन्यथा जन्मान्तरानुभूतानाम् एतज्जन्मनि इन्द्रियसंनिकृष्टानामर्थानां स्मरणमेव भवेन्नत्वनुभवः ।

ननु अत्र गोत्वरूपविशेषणानुभवः सविकल्पकात्मक एव 'अयं गौः' इति विशिष्टप्रत्यक्षं जनयतु, तथा च निर्विकल्पकस्वीकारस्य आवशयकतैव नास्ति खल्विति चेत्, तथा सति तस्यापि विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वं, तस्यापि तथेत्यनवस्था[2]प्रसङ्गात् । तथा च गोत्वविषयकं निर्विकल्पकमर्थतः सिध्यति इति तात्पर्यम् । उक्तानुमाने विशिष्टज्ञानत्वमस्तु विशेषणज्ञानजन्यत्वं मास्तु इत्यप्रयोजकशङ्कायां कृतायां तद्वारकतर्काभावात् उक्तानुमानं न साध्यसाधकमिति शङ्कितुं न शक्यते, अनुमित्यादिकं प्रति साध्यप्रसिध्यात्मकविशेषणज्ञानस्य कारणत्वात्, विशिष्टज्ञानविशेषं प्रति विशेषणज्ञानविशेषः कारणमिति कार्यकारणभावे अङ्गीकृते 'यद्विशेषयोः कार्यकारणभावः स तत्सामान्ययोः' इति न्यायेन विशिष्टज्ञानत्वावच्छिन्नं

---

[1] सम्भवति दृष्टफलकत्वे अदृष्टफलकल्पनायाः अन्याय्यत्वात् ।

[2] अप्रामाणिकानन्तावयवधारायाः विश्रान्त्यभावः ।

प्रति विशेषणज्ञानत्वावच्छिन्नं कारणमिति कार्यकारणभावस्य स्वीकर्तव्यतया तद्भङ्गप्रसङ्गलक्षणस्यानुकूलतर्कस्योक्तानुमाने सद्भावादिति निर्विकल्पकज्ञानं स्वीकर्तव्यमेव इति भावः ।

**आकरग्रन्थसूची**


तत्त्वचिन्तामणिः ( Kendriya Sanskrit Vidyapeetha, Tirupati, 1973)

न्यायभाष्यवार्तिकतात्पर्यटीका (The Choukhamba Sanskrit Series Office, Vidya Vilas Press, Gopal Mandir Lane, 1925)

प्रशस्तपादभाष्यम् ( The Sanskrit Sahitya Parishat, Shyambazar, Calcutta)

वैशेषिकसूत्रोपस्कारः - Vyasa Prakashan, D16/13, Manmandir, Varanasi 221001

न्यायसारः (Sanjay Prakashan, delhi, India)

न्यायसिध्दान्तमुक्तावली ( दिनकरी-रामरुद्री-प्रभासहिता) - Sri Balamanorama Press, Mylapore, Madras 600004

तर्कसङ्ग्रहः ( दीपिकाप्रकाशिका ) Elago Achukoodam, 166, R.H.Road, Mylapore, Madras 600004

# यथोद्देशपरिभाषायां कैयटनागेशादिमतानुशीलनम्

Dr. Shambhunath Bhat
Assistant professor
Dept of Sanskrit and Vedic studies
Muddenahalli Campus, SSSUHE

**प्रसिद्धशब्दाः –**

यथोद्देशपक्षः, कैयटः, नागेशः, दीक्षिताः, महाभाष्यम्, प्रदीपदृष्टान्तः

**सारांशः -**

प्रबन्धेऽस्मिन् यथोद्देशं संज्ञापरिभाषमिति परिभाषामधिकृत्य विचारः कृतो वर्तते । कैयटव्याख्यानं खण्डयता नागेशेन स्वयुक्तयः प्रतिपादिताः परिभाषेन्दुशेखरादौ । तस्य युक्तयः अपि परीक्षणीयाः इतीह कश्चन यत्नो विहितः । भाष्यकैयटादिसमवलोकनेन अन्येषामपि व्याख्याग्रन्थानामध्ययनेन फलिता काचिद्विचारसरणिः प्रस्तुता । कैयटदीक्षितादीनामाशयः सयुक्ति प्रतिपादितः । विचारे तात्पर्यं, न क्वचिन्मतावलम्बने । विचारपरम्परां बोधयन्ती शास्त्रपरम्परा विचारेण परिपोषिता स्यादिति धिया सयुक्ति, सप्रमाणं विचारो व्यधायि । कः पक्षः युक्तियुक्तः इति प्रतिपादितमत्र ।

इह व्याकरणे संज्ञापरिभाषाप्रयोज्यविध्युपकारविषये विद्यते पक्षद्वयम् । तदेव च पक्षद्वैविध्यं बोधयितुमारब्धिमदं परिभाषाद्वयम् –

- यथोद्देशं संज्ञापरिभाषम्
- कार्यकालं संज्ञापरिभाषम्

इति च । नवाह्निके ईदूदेद्द्विवचनं प्रगृह्यमिति सूत्रे भाष्ये स्पष्टमिमौ पक्षौ । तत्रादौ

**यथोद्देशं संज्ञापरिभाषम्**

उद्देशः उपदेशदेशः । उद्देशमनतिक्रम्य यथोद्देशम् । संज्ञा च परिभाषा चेत्यनयोः समाहारः संज्ञापरिभाषम् । एवं च उपदेशदेशमनतिक्रम्य संज्ञापरिभाषं वर्तते इत्यर्थः । तथा चास्मिन् पक्षे संज्ञासूत्राणि स्वोपदेशस्थले एव वृद्ध्यादिपदानां शक्तिं ग्राहयन्ति । इत्थं सकृज्जातेन शक्तिग्रहेण शास्त्रे सर्वत्र संज्ञापदस्य व्यवहारः प्रवर्तते । परितो भाष्यते इत्यन्वर्थाभिधाना परिभाषाऽपि स्वप्रदेशे एव स्वार्थं बोधयन्ती शास्त्रं कृत्स्नमप्युपकरोति । आचार्यप्रणीतत्वात् भविष्यति किञ्चिदनेन प्रयोजनमिति योऽवगच्छति, तदपेक्षोऽयं पक्षः ।

**कैयटदीक्षितादिमते यथोद्देशपक्षः**

संज्ञाविषये परिभाषाविषये च यथोद्देशपक्षाश्रयणफलं प्रस्तूयते । तत्रादौ –

**<u>संज्ञाविषये</u>** – यथोद्देशपक्षाश्रयणादेव 'अग्नी३ इति' इत्यत्र "अणोऽप्रगृह्यस्यानुनासिकः(८/४/५७)" इत्यनुनासिको न भवति । तत्र हि अप्रगृह्यस्येत्यनुनासिको वारणीयः । कार्यकाले तु प्रगृह्यश्रवणेन ईदूदेदित्यस्य उपस्थितौ, अणोऽप्रगृह्यस्येत्येतद्देशस्थस्य ईदूदेदिति संज्ञासूत्रस्य दृष्ट्या प्लुतस्य तृतीयपादस्थस्य सिद्धत्वेन ईदूत्सूत्रे तपरकरणाच्च त्रैमात्रिकस्य प्लुतस्य प्रगृह्यसंज्ञानापत्त्या अप्रगृह्यस्येति निषेधानापत्तिः । अतः यथोद्देशपक्षाश्रयणम् ।

तस्मिंश्च संज्ञासूत्रदृष्ट्या प्लुतस्य असिद्धत्वात् द्विमात्रत्वबुद्ध्यैव त्रिमात्रेऽपि संज्ञासिद्धेः अप्रगृह्यस्येति निषेधप्रवृत्त्या अनुनासिको वार्यते ।

**परिभाषाविषये** – "आमि सर्वनाम्नः सुट् (७/१/५२)" इति सूत्रे पञ्चमीसप्तम्योरुभयोरपि श्रवणात् तस्मिन्निति निर्दिष्टे पूर्वस्येत्यस्योपस्थित्या आमि परतः सर्वनाम्नः इत्यर्थः, आहोस्वित् तस्मादित्युत्तरस्येत्यस्योपस्थित्या सर्वनाम्नः परस्यामः इत्यर्थः इत्येवमव्यवस्थायां सत्यां पञ्चमीनिर्देशस्य बलीयस्त्वं यथोद्देशपक्षमवलम्ब्यैव निश्चेतव्यम् । 'यथोद्देशपक्षे च परिभाषयोः पौर्वापर्यम्' इति पूर्वोक्तं कैयटवचनमेवात्र प्रमाणम् ।

**यथोद्देशविषये नागेशभट्टानां मतम्**

**संज्ञाविषये** – संज्ञासूत्रविषये प्राचां मतापेक्षया एतन्मते नाधिकं भेदः । संज्ञासूत्राणां पृथगेव वाक्यार्थबोधः । आकडाराधिकारस्थभपदसंज्ञाविषये तु यथोद्देशपक्ष एव समाश्रयणीय इत्ययं शेखरकाराणामुद्घोषः । अतः एतदधिकारस्थानां संज्ञासूत्राणां पृथग्वाक्यार्थबोधं तादृशमङ्गीकुर्यात् यो बोधो बाध्यबाधकभावे समुपकुर्यात् । एतत्प्रतिज्ञायाश्च फलं 'राज्ञः' इत्यत्र नलोपवारणम् । तथा च आकडाराधिकारस्थभपदसंज्ञाविषयेऽपि यदि कार्यकालता आश्रीयते, तर्हि नलोपविधायकशास्त्रैकवाक्यतापन्नस्य पदत्वस्य त्रैपादिकत्वेनासिद्धत्वात् भसंज्ञया अबाधात् राज्ञः इत्यादौ पदसंज्ञायाः प्रवृत्त्या 'न लोपः प्रातिपदिकान्तस्य' इति नकारस्य लोपापत्तिः । अतस्तद्विषये यथोद्देशपक्ष एवाश्रयणीयः । नन्वेवं भपदादिसंज्ञानां दृष्ट्या त्रैपादिकस्यासिद्धत्वात् तासामसिद्धकाण्डे अप्रवृत्त्या 'राजा' इत्यादावपि पदसंज्ञाया अप्रवर्तनात् 'न लोपः प्रातिपदिकान्तस्य' इतिसूत्रेण लोपो न स्यादिति चेत् – उच्यते - पक्षेऽस्मिन् स्वस्थले पृथग्वाक्यार्थस्य स्वीकारात् संज्ञादेशे एव भपदादीनां शक्तिग्रहो जायते । तत्रैव च जातशक्तिग्रहेण त्रिपाद्यामपि सम्भवति व्यवहारः इति राजा इत्यादौ पदसंज्ञायाः प्रवृत्त्या नकारस्य लोपः सिध्यति इति नास्त्यवसरो दोषस्यास्मिन् पक्षे । अत एव पूर्वत्रासिद्धमिति सूत्रे भाष्ये परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य कार्यकालपक्षाश्रयेण समाहितं, न तु संज्ञानामप्यप्रवृत्तिम् ।

**परिभाषाविषये** – यथोद्देशेऽपि परिभाषाविषये न पृथग्वाक्यार्थबोधः, किन्तु तासां विधिना सहैव एकवाक्यतया बोधः इति नव्यानां नागेशभट्टानामाशयः । पक्षेऽस्मिन् विधिसूत्राण्येव परिभाषादेशं समुपतिष्ठन्ति । तत्रैवोभयोरेकवाक्यतया बोधः (यथोद्देशपक्षे एव) । तदुक्तं तैः परिभाषेन्दुशेखरे " यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धौ आत्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम् । कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयतीति "षष्ठी स्थानेयोगा" इति सूत्रे भाष्ये उक्तम्" इति । दीपो यथा स्वीयप्रभासंयोगं तत्तत्पदार्थेषु सम्पाद्य तत्तत्पदार्थप्रकाशकः, एवमेतत्परिभाषाशास्त्रमपि स्वविधेयसम्बन्धं विधेयवाक्यार्थे सम्पाद्य विध्युपकारमातनोति इति तदाशयः । परिभाषादेशे एव एकवाक्यतेत्यतः परिभाषासूत्राणां पाठापेक्षयैव पौर्वापर्यनिश्चयः सञ्जायते। फलं तु एतन्मतेऽपि परिभाषाविषये प्राचीनैः प्रदर्शितम् 'आमि सर्वनाम्नः सुट्' इत्याद्येव भवितुमर्हति ।

**परिभाषाविषये नागेशमते अनुपपत्तयः**

- किमस्य शास्त्रस्योपदेशे प्रयोजनमिति प्रयोजनजिज्ञासायाः आचार्यप्रणीतत्वाद् भविष्यति किञ्चिदस्य प्रयोजनमिति यथाश्रुतग्राहिप्रतिपत्रपेक्षोऽयं पक्षः[1] इति कैयटोक्तरीत्या सामान्यप्रयोजनकल्पनया शान्तिवत्

[1] प्रदीपः (ईदूत्सूत्रम् १/१/११) पृ. सं. २६०

क्व सप्तमीनिर्देशः इति प्रदेशजिज्ञासाया अपि (प्रयोजनजिज्ञासातः सर्वथा अविशिष्टायाः) भविष्यति शास्त्रेऽस्मिन् क्वचित् सप्तमीनिर्देशः इति सामान्यकल्पनयैव शान्तिः शक्यसम्भवा । सति चैवं गुणभूतपरिभाषादेशे प्रधानभूतविधिसूत्रोपस्थितिपूर्विका एकवाक्यत्वकल्पना नागेशभट्टोक्ता सुतरामन्याय्या, लोकविरुद्धा च परिदृश्यते ।

तथा हि लोके राज्ञः भृत्यतः उपकारापेक्षायामपि न भृत्यदेशमुपयाति राजा, अपि तु भृत्य एव राजदेशम् । प्रदेशविशेषजिज्ञासा तु कार्यकालपक्षेणैव शाम्यति, न यथोद्देशेन । यतः यथोद्देशपक्षोऽयं यथाश्रुतग्राहिप्रतिपत्त्रपेक्षः इति प्रतिज्ञातत्वात् तत्पक्षे उदीयमाना जिज्ञासाऽपि सामान्यविषयिण्येव भवितुमर्हति, न तु विशेषविषयिणी । अन्यथा कार्यकालापेक्षया अस्य भेद एव न स्यात् । अतः जिज्ञासायाः सामान्यत्वात् तच्छामकेनोत्तरेणापि सामान्येनैव भाव्यम् , न विशेषेण । नागेशभट्टमते तु सप्तमीनिर्देशादि क्व इति जिज्ञासा सामान्यविषयिणी (यथोद्देशपक्षत्वात्), तच्छमनं परं कार्यकालपक्षवत् विधिसूत्रैकवाक्यतापन्नविशिष्टवाक्यार्थबोधेन इत्येद्युक्त्यसहं प्रतिभासते ।

- अपि च नागेशभट्टमते उभयोः पक्षयोर्भिदैव न स्यात्, यथोद्देशकार्यकालयोरुभयोरपि एकवाक्यतास्वीकारात् । “कार्यकालपक्षे त्रिपाद्यां परिभाषाप्रवृत्तिर्विशेषः” इति यदुक्तं तदप्यापाततो युक्तमिव भाति । परं तत्तत्परिभाषासूत्रदेशं यातानां विधिसूत्राणां तद्देशस्थत्वेन[1], परिभाषादेशमुपतिष्ठतां त्रिपादीस्थविधिसूत्राणां विषये ‘पूर्वत्रासिद्धम्’ इत्यस्याप्रवृत्त्या यथोद्देशपक्षेऽपि त्रिपाद्यां परिभाषाणां प्रवृत्त्या नागेशोक्तं विरुध्यते । किञ्च तद्देशं गच्छतामपि न तद्देशस्थत्वमिति परिभाषाविषयिण्यां नागेशीयकल्पनायां कार्यकालपक्षेऽपि त्रिपाद्यां तत्प्रवृत्तिर्दुरुपपादा ।
- किञ्च नागेशभट्टोक्तरीत्या आत्मसंस्काराय गुणदेशमुपसर्पतां प्रधानानां तदितरसकलाङ्गोपेतता, उत तद्रहितता इति विकल्पः । आद्ये एकस्य अङ्गिनः विधेः संस्काराय अनेकस्य संज्ञापरिभाषस्याङ्गतया उपयोगात् प्रस्तुतार्थाप्रयोजनकानेक वाक्यार्थबोधकल्पनापत्तिः । अन्त्ये तु भाष्योक्तवाक्यापरिसमाप्तिन्यायेन निष्कृष्टवाक्यार्थासम्पत्त्या शाब्दबोधानुत्पादः । न च नात्र वयं परिभाषाप्रदेशेषु यत्र विधिसूत्राण्युपतिष्ठन्ते तत्र कृत्स्नो वाक्यार्थ इति ब्रूमहे, किन्तु प्रदेशविषयकसामान्यजिज्ञासाशामकः ‘इह सप्तमीनिर्देशः’ इत्याद्यौत्सर्गिको बोध एव इति वाच्यम् । यथोद्देशकार्यकालपक्षयोः समानाकारकं बोधमभ्युपगच्छतो[2] नागेशभट्टस्य उक्तार्थे अनभिमतेः।

अपि च नागेशोक्ता कल्पना अयुक्ता अप्रसिद्धा च (परिभाषैकवाक्यतापन्नतया विधिवाक्यार्थबोधरूपा) । यथोद्देशपक्षे तत्तद्देशस्थसकलसंज्ञापरिभाषार्थबोधोपस्कृतेन कार्यकालपक्षे च तत्तद्विधिप्रदेशोपस्थितसंज्ञापरिभाषार्थसंवलितेन प्रधानविधिवाक्यार्थेनैव शाब्दबोधोत्पादात् । अप्रसिद्धं च नाम परिभाषास्थले विधिवाक्यार्थनिर्णय इत्येतत् ।

[1] न च व्यवहर्तृदृष्टान्तेन नागेशोक्तेन तद्देशस्थता नास्ति विधिसूत्राणाम् इति वाच्यम् । कश्चिदेकदेशस्थ इत्यत्र कश्चित्-परिभाषारूप इत्येव व्याख्याततया विधिसूत्रदेशे उपतिष्ठतां परिभाषासूत्राणामेव उपदेशदेशत्वं, न तद्देशस्थत्वमिति नागेशेनाभ्यधायि । परिभाषादेशमुपतिष्ठतां विधिसूत्राणां न । अतः तन्मतानुसारेण यथोद्देशपक्षे परिभाषासूत्रदेशमुपतिष्ठतां विधिसूत्राणां तद्देशस्थत्वमेव ।

[2] अधिकारो नाम त्रिप्रकारः इति भाष्यं (म.भा. १।१।४९ वा. ४) पक्षद्वयसाधारणम् (प. शे. प. सं. २,३) पृ. सं. ३०

➢ किञ्च परिभाषादेशे विधिसूत्रोपस्थितौ वाक्यार्थाध्यवसायाय कस्यचिदेकस्यावृत्तिः कल्पनीयैव। तत्र गुणानुरोधेन प्रधानस्य विधेरावृत्तिकल्पने भाष्यविरोधः कैयटग्रन्थविरोधश्च । तथा च वृद्धिरादैच्सूत्रे भाष्ये समुदाये वाक्यपरिसमाप्तिरिति कश्चन न्यायः प्रस्तुतः । तद्विशदीकरणसन्दर्भे उदाहृतोऽयं दृष्टान्तः 'गर्गाः शतं दण्ड्यन्ताम् । अर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति' इति । राज्ञां हि दण्डने हिरण्येनार्थः (प्रयोजनं), गर्गाश्च तत्राङ्गभूता एव । ततश्च गुणभूतगर्गाणामनुरोधेन न प्रधानस्य शतस्यावृत्तिरिति शताहरणं समुदायादेव सम्पद्यते इत्ययं समुदाये वाक्यपरिसमाप्तिन्यायः । तदेव कैयटोऽप्याह – "अत्र शतस्येप्सिततमत्वात् प्राधान्यम्, अपादानस्थानप्राप्ताः गर्गाः गुणकर्म, न च गुणभेदे प्रधानस्य भेदः' इति शतदण्डनं समूहे परिसमाप्यते । अर्थिनश्चेति । शतस्य प्राधान्यं प्रतिपाद्यते । दण्डपरायां चोदनायां शतस्य प्राधान्यमतो वाक्यादवगम्यते" ।[1]

तथा च प्रकृते गर्गस्थानीयाः विध्युपकारकत्वेनाङ्गभूताः परिभाषाः, नागेशमतानुरोधेन तद्देशप्राप्ताः विधयश्च प्रधानभूताः । तत्र वाक्यार्थसंसिद्धये विधीनामावृत्तिकल्पने पूर्वोक्तभाष्यकैयटग्रन्थविरोधः सुस्पष्टो दुर्वारश्च ।

अथ न वयं गुणानुरोधेन प्रधानभेदं ब्रूमः । अपि तु 'यथोद्देशपक्षे प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते' इति कैयटवचनबलात् प्रधानानां गुणदेशसंनिधौ तदनुरोधेन गुणभेदमेव अभ्युपेमः इति चेत्तदपि न युक्तं, युक्तिविरोधात् भाष्यविरोधाच्च । यतो हि सकृच्छ्रुत एव गुणः भेदमन्तरेण युगपदुपस्थितसर्वप्रधानोपकारकः भवितुमीष्टे । तथा च सरूपसूत्रे भाष्ये "यथैव बहवो यञः, एवं प्रकृतयोऽपि बह्व्यः स्युः"[2] इति गुणाभ्यावृत्तिकथनपरं कञ्चन पक्षविशेषमुपन्यस्य परस्तात् 'अथवा पुनरस्त्वेका प्रकृतिः । बहवश्च यञः' इति सिद्धान्तभूतं न्याय्यं च पक्षान्तरं स्थिरीकृतम् । तत्रैव च कैयटः 'एकैकस्यापत्यस्य प्रकृत्यर्थेन योगात् प्रधानभेदे च गुणाभ्यावृत्त्या गर्गशब्दानामेवैकशेषः क्रियते' इति प्रकृतिबहुत्वं प्रथमतः सोपपत्तिकं व्याख्याय 'प्रकृत्यर्थस्यैकत्वात् तेनैव बहूनामपत्यानां सम्बन्धसम्भवात्' इति एका प्रकृतिरिति गुणभेदायुक्तत्वप्रतिपादकं युक्तिमत् द्वितीयपक्षं व्याख्याय समर्थयाञ्चक्रे । अतश्च गुणानुरोधेन प्रधानावृत्तिः, प्रधानानुरोधेन गुणावृत्तिश्चेत्युभयमप्यनुचितमेव, युक्तिप्रमाणविरुद्धत्वाच्च ।

कथं तर्हि एकवाक्यतेति चेत् एकवाक्यता कार्यकालपक्षे एव न तु यथोद्देशे । यथोद्देशे तु संज्ञापरिभाषस्य स्वदेशे स्वार्थमात्रबोधकता, तेनैव प्रदेशोपकार इति प्राचां मतमेवात्र ग्राह्यं प्रतिभाति । इदमेव च "क्वचिदेकदेशस्थः" इति भाष्याक्षरैः ध्वन्यते, तस्य भाष्यस्य यथोद्देशकार्यकालोभयपक्षसाधारण्येन प्रवृत्तत्वात् ।

**संज्ञाविषये नागेशमते अनुपपत्तयः**

- आकडारस्थभपदसंज्ञाविषये यथोद्देशपक्ष एव न कार्यकालपक्षः । राज्ञः इति रूपसिद्धिस्तत्प्रयोजनम् इति नागेशभट्टाः ।

तथा हि अत्र कार्यकालपक्षे आश्रीयमाणे राजन् अस् इति स्थिते भत्वात् अल्लोपोऽनः (६/४/१३४) इत्यकारलोपे जाते नलोपः प्रातिपदिकान्तस्य(८/२/७) इति सूत्रैकवाक्यतापन्नायाः सम्प्रति त्रिपादीस्थायाः स्वादिष्वसर्वनामस्थाने इति पदसंज्ञायाः यचि भम् इति भसंज्ञादृष्ट्या असिद्धतया भत्वेन पदत्वस्य बाधाभावात् नलोपोऽत्र दुर्वारः स्यात् । अनर्थममुं वारयितुं उररीक्रियते यथोद्देशपक्षः एतादृशस्थलेषु । तमेवैतमाशयं मनसिकृत्य

---

[1] प्रदीपः (वृद्धिरादैच्) पृ. सं. १६९

[2] महा. भा. सरूपसूत्रम् (१/२/६४) पृ. सं. ८४

नागेशभट्टः आह – आकडारस्थभपदसंज्ञाविषये यथोद्देशपक्ष एवेति । परमयमाग्रहो नोचितः यथोद्देशपक्ष एवेति । राज्ञः इति रूपसिद्धिस्तु सर्वेषामभीष्टा, भवति च यथोद्देशपक्षावलम्बनेन । किन्तु तत्प्रकरणस्थसर्वसंज्ञानां विषये यथोद्देश एवेत्याग्रहो निर्मूलः । इतरसंज्ञासु यथा यथोद्देशः कार्यकालश्चेत्युभावपि लक्ष्यानुरोधेनाश्रीयेते, तथा अत्रापि तत्तल्लक्ष्यसंसिद्धये स स पक्षः आश्रीयते इत्येव युक्तः पन्थाः । स्तोः श्चुना श्चुः(८/४/४०) इति असिद्धकाण्डस्थसूत्रे अणुदित्सवर्णस्य चाप्रत्ययः(१/१/६९) इति सूत्रमुपस्थाय अर्थनिर्णयं विदधाति यथा, तथैव इतरसंज्ञानां विषये (आकडारस्थभ पदसंज्ञानां विषयेऽपि) क्वचित् कार्यकालपक्षः आश्रीयत एव । अन्यथा नलोपः प्रातिपदिकान्तस्येति सूत्रे सुप्तिङन्तं पदम्(१/४/१४) इति पदसंज्ञासूत्रं नोपतिष्ठेत । राजेत्यादिरूपं च न सिध्येत् ।

नन्वत्र नागेशभट्टाः किं ब्रुवन्ति इति पृष्टे – एतादृशस्थलेषु पदादिसंज्ञानां तत्र स्वदेशे जातशक्तिग्रहेणैवोपस्थितिरिति । कुतोऽयं मुधा आयासः ? प्रथमतः राज्ञः इति रूपसाधनाय आकडारस्थपदादिसंज्ञाविषये यथोद्देश एवेत्यागृह्य परस्तात् राजेत्यादिरूपसिद्धिर्न भवतीति कृत्वा यथोद्देशपक्षेऽपि जातशक्तिग्रहमेव पदादिसंज्ञासूत्रं नलोपसूत्रदेशे उपतिष्ठते इति कल्पनायां प्रतिपत्तिगौरवं कस्य न स्फुटम् ? तस्मात् तत्र परस्परं पूर्वत्वपरत्वाभ्यां बाध्यबाधकभावे यथोद्देशपक्षः, त्रिपादीस्थकार्यसम्बन्धे तु कार्यकालपक्ष इति युक्तं वक्तुम्।

- अपि च भाष्यविरोधोऽप्यस्त्यस्यां व्यवस्थायाम् । तथा च ष्यङः संप्रसारणम्(६/१/१३) इति सूत्रे भाष्ये ‘अनन्त्यविकारे अन्त्यसदेशस्य’ इति परिभाषाप्रयोजननिरूपणावसरे “अल्लोपोऽनः” इति सूत्रमुपन्यस्तम् । तत्र ‘अन्नन्तस्याङ्गस्य भस्य अनः लोपो भवति’ इत्यर्थे अनस्तक्ष्णा इत्यत्र आदेरकारस्य लोपमाशङ्क्य एतत्परिभाषया समाहितम् । ततः “नैतदस्ति प्रयोजनम् – कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्र उपस्थितं द्रष्टव्यम् । अल्लोपोऽनः भस्येत्युपस्थितमिदं भवति यचि भमिति ।” ततश्च सर्वनामस्थानयजादिस्वादिपरो योऽन् तस्य अकारस्य लोप इत्यर्थसिद्धौ परिभाषां विनैव अनस्तक्ष्णेत्यत्र लोपो वार्यते इति परिभाषाप्रयोजनस्यान्यथासिद्धिर्दर्शिता । एवं च आकडारस्थभसंज्ञाविषयेऽपि कार्यकालपक्षः आश्रित एवेति स्पष्टमस्माद्भाष्यात् ।

नागेशभट्टाश्च एतदेकदेशिभाष्यं मन्वते[1], स्वीयप्रतिज्ञाविरुद्धत्वात्! वस्तुतः अस्य सिद्धान्तिभाष्यत्वेऽप्यस्ति युक्तिः। इतोऽग्रे न सम्प्रसारणे सम्प्रसारणमिति सूत्रे भाष्यकारः कथयति – “नैतस्याः परिभाषायाः प्रयोजनमस्ति” इति । अर्थात् पूर्वोक्तं स्वीकृतमित्येव (परिभाषां विना कार्यकालपक्षाश्रयणेनैव अनस्तक्ष्णेत्यत्र लोपवारणम्) तस्य विशदः आशयः प्रतीयते । नागेशभट्टाश्च परं स्वयं कञ्चन सिद्धान्तं प्रतिज्ञाय तमवलम्ब्य च सिद्धान्तभूतस्यापि भाष्यस्य क्वचिदेकदेश्युक्तित्वं कल्पयन्तीत्येतन्न युज्यते ।

**उपसंहारः –**

एवं नागेशमते बह्वः अनुपपत्तयः सन्तीति निरूपितम् । नागेशस्य अन्य एव पक्षः । अयं पक्षः न तस्य इत्यपि व्याख्यानं कृतं व्याख्याकारैः । इह ग्रन्थे तेन परे तु इतु न प्रयुक्तं किन्तु केचित्तु इत्येव प्रयुक्तमिति

---

[1] उद्योतः (ईदूदेसूत्रे) पृ. सं. २६६

तेषामाशयः । परं तु बहुत्र अन्ये, अपरे इत्यादिपुरस्सरमपि नागेशाशयः प्रस्तुतो वर्तते इति कृत्वा तत्र प्रमाणं न भवति । शास्त्रीयविचारसरण्यां क्वचिदेकत्र संमोहः न भवेत् । सप्रमाणं, सयुक्ति च यत्प्रतिपादितं तदादरेणानुशीलनीयम् । क्वचित्तु नागेशपक्षः युक्ततरो भवति । ततः सर्वत्र तथैवेति न चिन्तनीयम् । विचारितमपि पुनः परिशीलनीयम् इत्येव सारः ।

**आकरग्रन्थाः** –


१. **परिभाषेन्दुशेखरः** – नागेशभट्टविरचितः श्रीपादसत्यनारायणमूर्तिसम्पादितः राष्ट्रियसंस्कृतविद्यापीठम् तिरुपति 2004.

२. **लघुश्ब्देन्दुशेखरः** – नागेशभट्टविरचितः श्रीपादसत्यनारायणमूर्तिसम्पादितः राष्ट्रियसंस्कृतविद्यापीठम् तिरुपति 2004.

३. **व्याकरणमहाभाष्यम्** प्रदीपोद्योतसहितम्, पतञ्जलिना विरचितम्, भार्गवशास्त्रिभिः संशोधितम्, चौकम्बा संस्कृतप्रतिष्ठानम् देहली, २००७(पुनर्मुद्रणम्)

४. www.ashtadhyayi.com

# कालिकापुराणस्य वर्ण्यो विषयः वैशिष्ट्यञ्च

**डॉ० विवेक शर्मा**
सहायकाचार्य, संस्कृत विभाग
हिमाचल प्रदेश केन्द्रीय विश्वविद्यालय, धर्मशाला

**शोधपत्रसारः -** कालिकापुराणं शाक्तानां महत्त्वपूर्णः प्रतिनिधिग्रन्थः वर्तते । कालिकापुराणस्य पूर्वार्धे सत्याः चरितं विद्यते । उत्तरार्धे च सत्याः सन्ततीनां वर्णनमस्ति । अतः द्वयोः भागयोः महत्त्वमुपयोगिता च अस्त्येव । वस्तुतः कालिकापुराणं दीनार्तभक्तानां क्षेमकारकः ग्रन्थः, यस्योपासना-पद्धतिः प्रायोगिकी वर्तते । प्रायः संसारस्य कश्चिदपि विषयः नास्ति यः कालिकापुराणेन अस्पृष्टः । स्वमहनीयतया कालिकापुराणमन्येषु पुराणोपपुराणेषु वैशिष्ट्यं धरति । प्रतीयते यत् कालिकापुराणं सर्वदा महापुराणैः सार्धं प्रतिस्पर्धां करोतीत्युपपुराणस्यास्य महनीयता एवेति । अतः साररूपेण कथयितुं शक्यते यत् कालिकापुराणं "**कलौ काली कलौ काली कलौ काली तु केवला**" इदं तथ्यं सततमुद्घोषयति ।

**प्रमुखशब्दाः –** पुराणम्, उपपुराणम्, कालिकापुराणम्, वर्ण्यः, विषयः, लोककल्याणम्, वैशिष्ट्यम्, शाक्तपुराणम्

कालिकापुराणं शाक्तानां महत्त्वपूर्णः प्रतिनिधिग्रन्थः वर्तते । नीलाचले स्थिता या कामाख्या देवी, सैवाऽत्र पुराणेऽस्मिन् शक्तेः प्रतीकरूपेण वर्णिताऽस्ति । कालिकापुराणस्य विविधाः हस्तलिपयो देशस्य विभिन्नग्रन्थालयेषु उपलभ्यन्ते । डॉ० विश्वनारायणशास्त्रिणा एतस्य विंशतेः हस्तलिपीनामुल्लेखः कृतः[1] । कूर्मपुराणोक्तोपपुराणानां या सूची वर्तते तस्यां सूच्यां कालिकापुराणस्य क्रमः द्वादशे क्रमाङ्के वर्तते[2] । एवमेव देवीभागवते कालिकापुराणस्य क्रमः दशमः[3] ।

कालिकापुराणे वक्तृश्रोतृपरम्परा विद्यमाना वर्तते । यस्यां कमठप्रभृतयः ऋषयः ऋषिमार्कण्डेयमुपगम्य कालीशिवयोः सम्बद्धप्रश्नान् अपृच्छन् । तदा तेषां पुरतः मार्कण्डेयो वदति यदहं तं वृतान्तं श्रावयामि, यस्य वाचनं ब्रह्मा नारदं प्रति, नारदः बालखिल्यं प्रति, बालखिल्यः यवक्रीतं प्रति, यवक्रीतः असितं प्रति एवञ्च असितः मां प्रति अकरोत् । अहं तां कथामेव भवन्तं श्रावयामि[4] ।

---

[1] उपपुराणदिग्दर्शनम् (डॉ० लीलाधरवियोगी, आई०बी०ए० पब्लिकेशन्सप्रकाशनम्, अम्बाला-छावनी, प्रथमसंस्करणम् २००७), पृष्ठम् ३२४, पङ्क्तिः १८

[2] आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् । तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीश भाषितम् । दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् ॥
कापिलं वामनञ्चैव तथैवोशनसेरितम् । ब्रह्माण्डं वारुणञ्चैव कालिकाह्वयमेव च ॥
माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् । पराशरोक्तं मारीचं तथैव भार्गवाह्वम् ॥ कूर्मपुराणम्, १ / १७ - २०

[3] तथैवोपपुराणानि श्रृण्वन्तु ऋषिसत्तमाः । सनत्कुमारं प्रथमं नारसिहं ततः परम् ॥
नारदीयं शिवं चैव दौर्वाससमनुत्तमम् । कापिलं मानवं चैव तथा चौशनसं स्मृतम् ॥
वारुणं कालिकाख्यं च साम्बं नन्दिकृतं शुभम् । सौरं पाराशरं प्रोक्तमादित्यं चातिविस्तरम् ॥ माहेश्वरं भागवतं वासिष्ठं च सविस्तरम् । एतान्युपपुराणानि कथितानि महात्मभिः ॥ देवीभागवतपुराणम्, प्रथमः भागः, ३ / १३ - १६

[4] अहं वः कथयिष्यामि कथामेतां पुरातनीम् ।
प्रणम्य परमात्मानं चक्रपाणिं जगत्पतिम् ॥ कालिकापुराणम्, १ / १८

**अ) कालिकापुराणस्य वर्ण्यो विषयः -** कालिकापुराणस्य वर्ण्यविषये प्रवेशात् पूर्वं तस्य स्वरूपस्य ज्ञानमावश्यकम् । नाम्ना एव प्रतीयते यत् पुराणमेतत् कालिकया सम्बद्धमस्ति । अतः अस्योपपुराणस्य आधारभूता नायिका कालिका । कालिकापुराणस्य वर्ण्यविषयः सत्याः एवञ्च तस्याः सन्ततेः वर्णनमस्ति । कालिका दक्षप्रजापतेः प्रार्थनायाः कारणात् सतीरूपं दधाति । एवमेव कालिका मैनायाः स्नेहं दृष्ट्वा अथ च पार्वतीशिवाभ्यां सह स्वसम्बन्धानां पराकाष्ठायाम् अर्धनारीश्वरस्य रूपं दधाति । तर्हि कालिकापुराणस्य सोपानानि एतानि सन्ति - सतीजन्म, सतीविवाहः, सतीवियोगः, सत्याः पार्वती-रूपेण पुनर्जन्म, सत्याः अर्धनारीश्वरस्य रूपधरणम्, सत्याः विशिष्टसन्ततीनां वर्णनञ्च[1] । एवं प्रकारेण कालिकापुराणे कालिकायाः सत्याः योगमायायाः च वर्णनानि विद्यन्ते । समग्रस्य कालिकापुराणस्य विषयवस्तु नवत्यामध्यायेषु विभक्तम् । अस्योपपुराणस्य द्वौ खण्डौ वर्तेते । आरम्भिकपञ्चचत्वारिंशदध्यायाः **चरितखण्डः** इत्युच्यन्ते । उत्तरार्धपञ्चचत्वारिंशदध्यायाः **उपासनाखण्डः** इति नाम्नाऽभिधीयन्ते[2] । कालिकापुराणस्य विभाजनस्य अन्यः प्रकारोपि समुपलभ्यते यस्मिन् पूर्वार्धः **कालिकाखण्डः**, उत्तरार्धः च **कालिकेयखण्डः** इति कथितः[3] । कालिकापुराणस्य पूर्वार्धे सत्याः चरितं विद्यते । उत्तरार्धे च सत्याः सन्ततीनां वर्णनमस्ति । अतः द्वयोः भागयोः महत्त्वमुपयोगिता च अस्त्येव ।

क) **कालिकाखण्डः -** कालिकाखण्डस्य चरितखण्डस्य वा प्रारम्भिकेषु सप्ताध्यायेषु सत्याः जन्मसम्बद्धपृष्ठभूमिः प्रस्तुता । आरम्भे 'हरिचरणसरोजयुग्मस्य[4]' वन्दनात् परं महामायायाः स्तुतिर्वर्तते[5] । प्रष्टारः ऋषयः कमठादयः वर्तन्ते । एवञ्च मार्कण्डेयमुनिना प्रष्टाः प्रश्नाः एव कालिकापुराणस्याऽऽधारः[6] । अस्मिन्नध्याये कालिकापुराणस्य परम्परायाः, दक्षप्रजापतेः, मरीच्यादिदशमानसपुत्राणाम्, सन्ध्या इति नाम्न्याः मानसी-पुत्र्याः, काम इति नाम्नः मानसपुत्रस्य उत्पत्तेः च वर्णनानि सन्ति । ब्रह्मणः पुत्रस्य कामदेवस्य नामकरणम्, ब्रह्मणः सम्मोहनम्, सन्ध्यां प्रति ब्रह्मणः आकृष्टिः इत्येतेषां विषयानां वर्णनं प्राप्यते द्वितीयेऽध्याये । अपि च ब्रह्मणः अग्निष्वात्तबर्हिषद्भ्यामुत्पत्तेः, दक्षात् रत्याः उत्पत्तेः, क्रतुवशिष्ठपुलस्त्याङ्गिरेभ्यः क्रमशः सोमपा-आज्यपा-सुकालिन-हविष्मत् इत्येतेषामुत्पत्तेः, शिवेन ब्रह्मणः भर्त्सनायाः च वर्णनान्यपि अस्मिन्नेव द्वितीयेऽध्याये वर्तन्ते[7] । कालिकाखण्डे एव दक्षकन्यायाः रत्याः जन्मनः, कामदेवेन तस्याः ग्रहणस्य, ब्रह्मणः निःश्वासात्

---

[1] कालिकापुराणम् (मृत्युञ्जयत्रिपाठी, नवशक्तिप्रकाशनम्, वाराणसी, प्रथमसंस्करणम् २००६), भूमिकाभागः, पृष्ठम् १०, पङ्क्तिः २७

[2] तत्रैव (मृत्युञ्जयत्रिपाठी, नवशक्तिप्रकाशनम्, वाराणसी, प्रथमसंस्करणम् २००६), भूमिकाभागः, पृष्ठम् ११, पङ्क्तिः ५

[3] तत्रैव (मृत्युञ्जयत्रिपाठी, नवशक्तिप्रकाशनम्, वाराणसी, प्रथमसंस्करणम् २००६), भूमिकाभागः, पृष्ठम् ११, पङ्क्तिः ८

[4] यद्योगिभिर्भवभयार्ति विनाशयोग्यमासाद्य वन्दितमतीव विविक्तचित्तैः ।
तद् वः पुनातु हरिपादसरोजयुग्ममाविर्भवत् क्रमविलङ्घित-भूर्भुवः स्वः ॥
कालिकापुराणम्, १ / १

[5] सा पातु वः सकलयोगिजनस्यचित्तेऽविद्यातमिस्रतरणिर्मतिमुक्ति-हेतुः ।
या चास्य जन्तुनिवहस्य विमोहिनीति माया विभोर्जनुषि शुद्धकुबुद्धिहन्त्री ॥तत्रैव,१/२

[6] तत्रैव, १ / ९ - १३

[7] तत्रैव, द्वितीयोऽध्यायः

वसन्तस्योत्पत्तेः च वर्णनं विद्यते, अपि च अत्रैव वसन्तस्य सौन्दर्यस्य वर्णनमप्यस्ति[1] । अस्य खण्डस्य प्रमुखं वैशिष्ट्यमेतदप्यस्ति यदस्मिन् भगवत्याः कृते "काली" इति शब्दस्य प्रयोगः कृतः, यः कालिकापुराणस्य मूलचरितस्य नामकरणस्याधारः च वर्तते[2] ।

इतः परमस्ति योगमायायाः वर्णनम्, महामायाकालिकायाः तपसा दक्षेण पुत्रीरूपेण सत्याः प्राप्तिः, सत्याः बाललीलायाः वर्णनम्, दक्षस्य गृहे ब्रह्मानारदयोः आगमनं च[3] । नवाध्यायात् त्रयोदशाध्यायपर्यन्तं, सतीविवाहः, शिवस्य वरयात्रा, ब्रह्मणि शिवस्य क्रोधः इत्येतेषां वर्णनं विद्यते[4] । इतः परं साङ्ख्यसम्मतसृष्टेः वर्णनम्, अथ च देवत्रये एकत्वस्य विधानमस्ति । अत्रैव सतीशिवयोः विहारस्य सम्भोगश्रृङ्गारात्मकं सुमधुरकाव्यात्मकं च चित्रणमुपलभ्यते[5] । अग्रे विद्यते दक्षेण शिवस्यापमानम्, सत्याः देहत्यागः, सत्याः मृतशरीरं गृहीत्वा शिवस्य विषादः, विष्णुना सत्याः मृतदेहस्य छेदनम्, सत्याः अङ्गैः च शक्तिपीठानां स्थापना[6] । इतः परं शिप्रासरोवरः, शिप्रोद्गमः, चन्द्रभागोत्पत्तिस्थलम्, चन्द्रभागायाः विशिष्टता इत्येतेषु विषयेषु पर्याप्तसूचना दत्ताऽस्ति[7] । अग्रे वाराहसर्गस्य वर्णनमप्यस्ति, अस्मिन्नेव क्रमे प्रलयकथनम्, शिवस्य शरभावतारः, नरनारायणस्यावतारः, यज्ञवाराहस्योत्पत्तिः, यज्ञवाराहस्य पुत्रोत्पत्तिः, यज्ञपात्राणामुत्पत्तिः, मत्स्यावतारः, अन्ते पार्वत्याः चरित्रवर्णनञ्चास्ति[8]।

ख) **कालिकेयखण्डः -** अस्य खण्डस्यारम्भे एव भङ्गिनः उत्पत्तिः भवति एवञ्च शिवस्य महामैथुनस्य वर्णनं वर्तते[9] । इतः परं वेतालभैरवस्य जन्म, शिवस्य मनुष्यावतारस्य चन्द्रशेखरस्य चरितम्, तारावत्याः रूपे काल्याः जन्म, चन्द्रशेखरेण तस्याः विवाहः चेत्येतेषु विषयेषु पर्याप्तचर्चा कृताऽस्ति । अस्मिन्नेव क्रमे तारावतीकपोतमुन्योः उपाख्यानम्, चित्राङ्गस्योत्पत्तिः, तारावतीरूपीकाल्याः कपालीरूपमयेन शिवेन संयोगः, यस्मात् संयोगात् वेतालभैरवयोः उत्पत्तिः, विशिष्ठगुरोः वर्णनञ्चोपलभ्यते[10] ।

एतदनन्तरम् और्वसगरयोः वशिष्ठवेतालयोः च संवादे काल्याः विविधरूपाणां पूजाविधयः वर्णिताः । प्रसङ्गेऽस्मिन् महिषासुरस्य जन्मनः वर्णनम् एवञ्च दुर्गोत्सवस्य रमणीयं वर्णनमस्ति । अग्रिमे क्रमे तन्त्रमाध्यमेन शक्तेः साधनायाः वर्णनमस्ति[11] । इतः परं कामाख्यादेव्याः माहात्म्यस्य कवचस्य च वर्णनमस्ति, अग्रे च त्रिपुरा-माहात्म्यं पूजाविधानञ्च आयाति[12] । ततः परं कामरूपमण्डलस्य स्थितिः, ब्रह्मपुत्रनद्याः उद्गमः, परशुरामचरितम्,

---

1 कालिकापुराणम्, अध्यायः ३ - ४

2 तत्रैव, पञ्चमोऽध्यायः

3 तत्रैव, अध्यायः ६ - ७

4 तत्रैव, एकादशोऽध्यायः

5 तत्रैव, अध्यायः १२ - १५

6 तत्रैव, अध्यायः १६ - १८

7 कालिकापुराणम्, अध्यायः १९ - २१

8 तत्रैव, अध्यायः २४ - २५

9 तत्रैव, षट्चत्वारिंशोऽध्यायः

10 तत्रैव, अध्यायः ४७ - ५१

11 तत्रैव, अध्यायः ५२ - ७१

12 कालिकापुराणम्, अध्यायः ७२ - ७५

राजधर्मवर्णनम्, वैतालभैरवयोः सन्ततेः वर्णनं चेति विषयाः प्रतिपादिताः । अन्ते च उपसंहाररूपेण कालिकापुराणस्य माहात्म्यस्य वर्णनमस्ति[1] ।

**आ) कालिकापुराणस्य वैशिष्ट्यम् -** कालिकापुराणं महापुराणं वा भवतु उत वा उपपुराणम्, किन्तु एतत्तु निश्चितमस्ति यत् विस्तृतपौराणिकवाङ्मये कालिकापुराणस्य महत्त्वपूर्णं स्थानं वर्तते यस्मात् उपपुराणस्यास्य भूयसी ख्यातिः वर्तते । अस्मिन् कालिकापुराणे शक्तिसम्बद्धविषयाः विस्तरेण वर्णिताः यस्मादुपपुराणमेतत् शाक्तपुराणमित्युच्यते । शक्तेः पूजाविषये बहूनि पुराणानि रचितानि तेषु सर्वेषु अस्य कालिकापुराणस्य आदरणीयं महनीयञ्च स्थानं वर्तते । पुराणेऽस्मिन् शक्तेः विस्तृतोल्लेखः प्राप्यते, यतोहि अत्र देव्याः नवरूपाणि उत्कृष्टतया वर्णितानि सन्ति[2] । कालिकापुराणं योगनिद्रा, महामाया, सतीत्यादीनां देव्याः विभिन्नानां रूपाणां वर्णने वैशिष्ट्यं धरति । कालिकादिचरित्रचित्रणे कालिकापुराणस्य अधिकवैशिष्ट्यमस्ति । अस्य वैशिष्ट्यं तु तावदस्ति यत् साहित्यादर्शः इत्याख्ये पुराणालोचनग्रन्थे हिमाद्रिमहोदयस्य मतमुल्लिखितं यस्यानुसारं कालिकापुराणं मूलभागवतमस्ति[3] ।

देवीमाहात्म्यं यदत्र वर्णितमस्ति, तस्य वक्ता मार्कण्डेयमुनिरस्ति । यतोहि देव्याः विभिन्नरूपाणामुपासनापद्धतीनामुल्लेखः मार्कण्डेयमुनिना एव कृतः[4] । वस्तुतः कमठादिमुनीन् प्रति समग्रस्य कालिकापुराणस्य वाचनं मार्कण्डेयमुनिना एव कृतम्[5] । कालिकापुराणे किमिति वैशिष्ट्यम् एतदर्थं कालिकापुराणस्थानां वर्णितानां मुख्यबिन्दूनां विचारः करणीयः । आरम्भिकेषु अध्यायेषु कामस्य प्रादुर्भावः वर्णितः । अस्य प्रादुर्भावात् ये मुख्यानि कामजन्यानि तथ्यानि अस्माकं पुरतः आगच्छन्ति, ते सन्ति – ब्रह्मणः सतीं प्रति आकर्षणम्, शिवेन तस्य भर्त्सना, कामप्रभावं शमयितुं सन्ध्यायाः तपस्यायाः विधानस्योल्लेखः, वाराहस्य पृथिव्या सार्धमधार्मिकाचरणेन देवतानां व्यग्रता, भङ्गीमहाकालयोः वेतालभैरवयोः रूपयोः उत्पत्तिः, चन्द्रमसः स्त्रीप्रसङ्गः, कपोतमुनेः तारावतीं प्रति कामभावना इत्यादयः[6] । कालिकापुराणे एतेषां दुराचरणानां

---

1 तत्रैव, अध्यायः ७७ - ९०

2 प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥
पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ।
सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥
नवमं सिद्धिदात्री च नवदुर्गाः प्रकीर्तिताः । श्रीदुर्गासप्तशती, देव्याः कवचम् ३ - ५

3 यदिदं कालिकाख्यं च मूलं भगवत स्मृतम् । पुराणसाहित्यादर्शः (वृजेशकुमारशुक्लः, न्यू-भारतीय-बुक-कोर्पोरेशन-प्रकाशनम्, दिल्ली, १९९८), पृष्ठम् १६५, पङ्क्तिः ११

4 कालिकापुराणम् (मृत्युञ्जयत्रिपाठी, नवशक्तिप्रकाशनम्, वाराणसी, प्रथमसंस्करणम् २००६), भूमिकाभागः, पृष्ठम् १५, पङ्क्तिः १५

5 अहं (मार्कण्डेयः) वः कथयिष्यामि कथामेतां पुरातनीम् ।
प्रणम्य परमात्मानं चक्रपाणिं जगत्पतिम् । तत्रैव, १ / १८

6 कालिकापुराणम् (मृत्युञ्जयत्रिपाठी, नवशक्तिप्रकाशनम्, वाराणसी, प्रथमसंस्करणम् २००६), भूमिकाभागः, पृष्ठम् १५, पङ्क्तिः १५

विषये वर्णनं विद्यते । अपि च एतेषां कामजन्यबिन्दूनां नियन्त्रणस्य विषयेऽपि कालिकापुराणे पर्याप्तोल्लेखः लभ्यते ।

कालिकापुराणे महामाया-कामाख्या-त्रिपुरा-चण्डिकादीनां देवीनां स्वरूपस्य प्रतिपादनम्, उपासनापद्धत्याः प्रतिपादनञ्च साङ्गोपाङ्गतया कृतमस्ति । अस्मिन्नुक्तं यत् वस्तुतः तु कामाख्या मूलमूर्तिः एव, किन्तु यदा एषा विभिन्नैः पीठैः सह सम्बन्धं स्थापयति तदा एव नानारूपाणि धरति[1] । उपपुराणेऽस्मिन् न केवलं देव्याः पूजा-पद्धतयः दर्शिताः, अपि च विष्णु-शिव-गणपत्यादीनां देवानां अर्चनाविधानमपि सम्यक्तया प्रतिपादितमस्ति[2] ।

वाचस्पत्यमित्यस्मिन्नपि कालिकापुराणसम्बद्धकथानामुल्लेखः कृतः[3] । विल्सनमहोदयस्य मतस्योल्लेखः पुराणसाहित्यादर्शकारेणापि विहितः, यस्यानुसारं कालिकापुराणे गिरिजा-भद्रकाली-महामाया इत्यादीनां पूजनपद्धतयः उल्लिखिताः[4]।

कालिकापुराणे त्रिदेवानामेकत्वप्रतिपादनं यत् कृतं तत् महत्त्वपूर्णं वर्तते । एवञ्च कालिकापुराणेऽस्मिन् अर्धनारीश्वरप्रसङ्गे शिवा-शिवयोः एकात्मकतायाः अद्भुतं वर्णनं प्रस्तूयते[5] । ब्रह्मविष्णुमहेशानाम् अभेदं निर्णीय कालिकापुराणं शैववैष्णवशाक्तादीनां ग्रथनमेकस्मिन्नेव सूत्रे यत् कृतं तदद्भुतमस्ति । इत्युक्ते उपपुराणमेतद्धार्मिकसङ्कीर्णतां कदापि न स्वीकरोति, न च विस्तारयति ।

एतदुपपुराणं शाक्ततान्त्रिक-उपासनयोः विशिष्टः ग्रन्थः । कथानकदृष्ट्या चिन्त्यते चेत् सतीचरितं पार्वतीचरितं वा शिवपुराणादिष्वप्युपलभ्यते, किन्तु अरुन्धती-नरकासुर-वेतालभैरवादीनां चरितानां योजना[6] उत्कृष्टा प्रतिभाति ।

---

1 मूलमूर्तिर्महामाया योगनिद्रा जगन्मयी । तत्रैव, ५८ / ४८ ;
एकैव तु महामाया कार्यार्थं भिन्नतां गता ।
कामाख्या तु महामाया मूलमूर्तिः प्रगीयते ॥ तत्रैव, ५८ / ५० - ५१

2 तत्रैव (मृत्युञ्जयत्रिपाठी, नवशक्तिप्रकाशनम्, वाराणसी, प्रथमसंस्करणम् २००६), भूमिकाभागः, पृष्ठम् १५, पङ्क्तिः २४

3 वाचस्पत्यम्, तृतीयभागः, (सी०गिरि, राष्ट्रियसंस्कृतसंस्थानम्, नईदिल्ली, २००६), पृष्ठम् २०१३, पङ्क्तिः ६१

4 The KalikaPurana contains about nine thousand stanzas in ninty eight chapters, and is the only work of the series dedicated to recommend the worship of the bribe of shiva, in one or other of her manifold forms as Girija, Devi, Bhadrakali, Kali Mahamaya.
पुराणसाहित्यदर्शः (वृजेशकुमारशुक्लः, न्यू-भारतीय-बुक-कोर्पोरेशन-प्रकाशनम्, दिल्ली, १९९८), पृष्ठम् १६५, पङ्क्तिः २४

5 न ब्रह्मा भवतो भिन्नो न शम्भुर्ब्रह्मणस्तथा ।
न चाहं युवयोर्भिन्नोऽभिन्नत्वं सदातनम् । कालिकापुराणम्, ११ / ५१

6 तत्रैव (मृत्युञ्जयत्रिपाठी, नवशक्तिप्रकाशनम्, वाराणसी, प्रथमसंस्करणम् २००६), भूमिकाभागः, पृष्ठम् १५, पङ्क्तिः २५

विविधानां मनोवैज्ञानिकानां सामाजिकानां वैज्ञानिकानाञ्च विषयाणां प्रतिपादनं पुराणेऽस्मिन् मौलिकरीत्या कृतमस्ति, यथा पुराणेऽस्मिन् चन्द्रभागानदीप्रसङ्गे पर्यावरणस्य महत्त्वं प्रतिपादितमस्ति । अपि च सतीवियोगप्रसङ्गे अतिवृष्टि-जलाप्लावनादीनां समस्यानां समाधानं व्याख्यातमस्ति । चन्द्रचरिते बहुपत्नीत्वस्य दोषकथनमस्ति । एवञ्च अतिभोगेन क्षयरोगोत्पत्तेः सूचना पुराणेऽस्मिन् दत्ताऽस्ति, अत्रैव चोपपुराणकारेण अस्य रोगस्य निवारणमपि सूचितम् । एतदतिरिच्य शनिग्रहस्योपासनादिविषयाणां समावेशः अप्युपपुराणकारेण विहितः । कालिकापुराणस्थानामेतेषामुपर्युक्तानां सर्वेषां मनोवैज्ञानिक-सामाजिक-वैज्ञानिकानाञ्च विषयाणां महत्त्वं वर्तमानयुगे अधिकमनुभूयते, यतोहि एतेषां विषयाणां वर्तमानप्रासङ्गिकता अधिका अस्ति ।

दार्शनिकतत्त्वान्वेषणाय कालिकापुराणमग्रगण्यम् । न केवलं दार्शनिकतत्त्वानामुपस्थापनमपितु अस्य पुराणस्य साहित्यिकसौन्दर्यमपि उत्कृष्टतमं वर्तते । देव्याः गीतात्मिकायै स्तुत्यै, साहित्यिकसुषमायै, कोमलपदविन्यासाय, गूढभक्तिभावनायै उपपुराणमेतत् अतीव महत्त्वपूर्णमस्ति । एते सर्वे महत्त्वपूर्णाः विषयाः कालिकापुराणे समाविष्टाः, यस्मादस्योपपुराणस्य ख्यातिः चिरस्थायिनी ।

वस्तुतः कालिकापुराणं दीनार्तभक्तानां क्षेमकारकः ग्रन्थः, यस्योपासना-पद्धतिः प्रायोगिकी वर्तते । प्रायः संसारस्य कश्चिदपि विषयः नास्ति यः कालिकापुराणेन अस्पृष्टः । स्वमहनीयतया कालिकापुराणमन्येषु पुराणोपपुराणेषु वैशिष्ट्यं धरति । प्रतीयते यत् कालिकापुराणं सर्वदा महापुराणैः सार्धं प्रतिस्पर्धां करोतीत्युपपुराणस्यास्य महनीयता एवेति । अतः साररूपेण कथयितुं शक्यते यत् कालिकापुराणं **"कलौ काली कलौ काली कलौ काली तु केवला"** इदं तथ्यं सततमुद्घोषयति ।

# गोले कदम्बभ्रमवृत्त-जिनवृत्तयोः बन्धनद्वारा वलनगणिते उत्क्रमज्यानिरासः

**गिरीशभट्टः बि**

सिद्धान्तज्यौतिषशास्त्रे विद्यावारिधि(Ph.D)-शोधच्छात्रः

राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

**सारांशः –** ग्रहस्थानात् नवत्यंशमितेऽन्तरे कृते ग्रहक्षितिजाख्यवृत्ते क्रान्तिवृत्तप्राचीतः नाडीवृत्तप्राची यद्दिशि यावद्भिरंशैः वलति तद्दिक्कं तावदायनं वलनम् । तथा नाडीवृत्तप्राचीतः समवृत्तप्राची यद्दिशि यावद्भिरंशैः वलति तद्दिक्कं तावदाक्षजं वलनम् । क्रान्तिवृत्तप्राचीतः समवृत्तप्राची यद्दिशि यावद्भिरंशैः वलति तद्दिक्कं तावत्स्फुटवलनम् । इति वलनपरिभाषा । लल्लादिभिः आचार्यैः भ्रान्त्या वलनगणिते उत्क्रमज्या स्वीकृता । किन्तु उत्क्रमज्यया साधितं वलनं वास्तवं वलनं भवितुं नार्हति । अतः वलनगणिते उत्क्रमज्या न स्वीकरणीया, क्रमज्यया एव वलनं साधनीयमिति भास्कराचार्यः गोलाध्याये ग्रहणवासनायां वलनवासनाप्रसङ्गे बहुभिः गोलयुक्तिभिः गणितयुक्तिभिश्च प्रतिपादितवान् । तेषु गोले कदम्बभ्रमवृत्तं जिनवृत्तं च बद्ध्वा उत्क्रमज्यानिरासार्थं भास्कराचार्योक्तं युक्तिद्वयम् अत्यन्तं प्रधानं भवति । तद्युक्तिद्वयम् अस्य शोधपत्रस्य प्रतिपाद्यविषयः ।

**कूटशब्दाः –** वलनम्, आक्षवलनम्, आयनवलनम्, स्फुटवलनम्, जिनवृत्तम्, कदम्बभ्रमवृत्तम्, क्रमज्या, उत्क्रमज्या,

**प्रस्तावना –**

वस्तुतः क्रमज्यां स्वीकृत्य वलनं साधितं चेदेव वास्तवं वलनप्रमाणं लभ्यते । उत्क्रमज्यां स्वीकृत्य वलनं साधितं चेत् वास्तवं वलनप्रमाणं न प्राप्यते । तथापि लल्लादयः गणकाः भ्रान्त्या वलनगणिते उत्क्रमज्यां स्वीकृतवन्तः । तेषां भ्रान्तेः कारणं प्रायः एवं भवितुमर्हति –

परमक्रमज्या अपि त्रिज्यामिता एव भवति । परमोत्क्रमज्या अपि त्रिज्यामिता एव भवति । अपि च क्रमज्यायाः परमस्थानं शून्यस्थानं च यत्र भवति तत्रैव उत्क्रमज्यायाः अपि परमस्थानं शून्यस्थानं च भवति । प्रायेण तद् दृष्ट्वैव लल्लादिभिः आचार्यैः भ्रान्त्या क्रमज्यया यद् वलनमानीयते तदेव वलनप्रमाणम् उत्क्रमज्यया गणितं कृतं चेदपि लभ्यते इति मत्वा उत्क्रमज्यां स्वीकृत्य वलनगणितं कृतं स्यादिति भाति । परन्तु येन क्रमेण क्रमज्यायाः वृद्धिह्रासौ भवतः तेनैव क्रमेण उत्क्रमज्यायाः वृद्धिह्रासौ न भवतः । अतः यद्यपि क्रमज्यायाः परमस्थाने उत्क्रमज्यायाः अपि परमत्वं (त्रिज्यामितं) तथा क्रमज्यायाः शून्यस्थाने उत्क्रमज्यायाः अपि शून्यत्वं भवति तथापि तयोः शून्यपरमस्थानयोरन्तराले विद्यमानेषु स्थानेषु क्रमोत्क्रमज्ययोः वृद्धिह्रासयोः असमत्वात् निर्दिष्टस्थाने क्रमज्या यावत्मिता भवति तावन्मिता एव उत्क्रमज्या न भवति । अतः उत्क्रमज्यां स्वीकृत्य गणितकरणेन यद्वलनमागतं भवति तत् क्रमज्यां स्वीकृत्य आनीतात् वलनप्रमाणात् भिद्यते । अत एव लल्लादिभिराचार्यैः उत्क्रमज्याभिः यद्वलनगणितं कथितं तदसत् । वलनगणिते क्रमज्या एव स्वीकरणीया । उत्क्रमज्या न स्वीकरणीया ।

क्रान्तिवृत्त-समवृत्तयोः सम्पातः ययोः बिन्द्वोः भवति तत्र स्फुटं वलनं परमं भवति । तस्मात् अग्रतः पृष्ठतश्च त्रिभेऽन्तरे स्फुटं वलनं शून्यं भवति । यदि क्रमज्यां स्वीकृत्य वलनगणितं क्रियते तदानीमेव क्रान्तिवृत्त-

समवृत्तयोः सम्पातस्थानयोः परमं स्फुटवलनं तथा तस्मात् त्रिभेऽन्तरे स्पष्टवलनाभावः गणितेन लभ्यते । उत्क्रमज्यां स्वीकृत्य वलनगणितं क्रियते चेत् क्रान्तिवृत्त-समवृत्तयोः सम्पातस्थानयोः परमं स्फुटवलनम् अर्थात् परमक्रान्त्यंशैर्युक्तं स्वदेशीयाक्षांशमितं स्फुटवलनं न लभ्यते । सम्पातस्थानाभ्यामन्यत्र परमं स्फुटवलनं लभ्यते । तथा च सम्पातस्थानाभ्यां त्रिभेऽन्तरे दक्षिणतः उत्तरतश्च (स्फुटवलनाभावस्थानयोः) अपि स्फुटवलनप्रमाणमागच्छति । स्पष्टवलनाभावः अन्यस्मिन् स्थाने आगच्छति । एवम् उत्क्रमज्यां स्वीकृत्य वलनगणितं क्रियते चेत् स्फुटवलनस्य परमस्थान-शून्यस्थाननिर्णये एव दोषः जायते । परम-शून्यस्थानयोः निर्णये दोषः समुत्पन्नश्चेत् तयोरन्तराले कृतः अनुपातविधिरपि निश्चयेन दोषयुक्तः एव भवतीति सर्वेऽपि गणितज्ञाः जानन्त्येव । अतः लल्लादिभिः गणकैः उत्क्रमज्यां स्वीकृत्य यद्वलनमानीतं तदसत् । तन्न स्वीकारयोग्यम् । अतः वलनगणिते क्रमज्या एव स्वीकरणीया, उत्क्रमज्या न स्वीकरणीया इति स्पष्टतया एव ज्ञायते । पुनः अन्यैः युक्तिभिः अस्य प्रतिपादनस्य आवश्यकता एव नास्ति । तथापि दार्ढ्यार्थं (वलनगणिते क्रमज्या एव स्वीकरणीया इति दृढतया प्रतिपादयितुं) तथा येषां कृते गणितशास्त्रस्य ज्ञानं नास्ति तेषां तथा मन्दमतीनामपि बोधार्थं भास्कराचार्यैः अन्यैः बहुभिः युक्तिभिः वलनगणिते उत्क्रमज्या न स्वीकरणीया, क्रमज्या एव स्वीकरणीया इति प्रतिपादितम् । यथोक्तं भास्कराचार्येण –

**न स्पष्टवलनाभावस्तत्र स्यादुत्क्रमज्यया ।**
**क्रमज्यया ततः कार्यं दार्ढ्यार्थं कथ्यते पुनः ॥**[1]

इति ।

वलनगणिते उत्क्रमज्यानिरासार्थं भास्कराचार्योक्तासु गोलयुक्तिषु गोले कदम्बभ्रमवृत्त-जिनवृत्तयोः बन्धनद्वारा वलनगणिते उत्क्रमज्यानिरासार्थं भास्कराचार्योक्तं युक्तिद्वयम् अधिकृत्य अस्मिन् शोधपत्रे चर्च्यते ।

**गोले कदम्बभ्रमवृत्तस्य बन्धनद्वारा वलनगणिते उत्क्रमज्यानिरासः –**

गोलयन्त्रे कदम्बभ्रमवृत्तं बद्ध्वा तद्द्वारा वलनस्वरूपं प्रदर्श्य वलनगणिते क्रमज्या एव स्वीकरणीया, उत्क्रमज्या न स्वीकरणीया इति भास्कराचार्यः अधोनिर्दिष्टेषु श्लोकेषु प्रतिपादयति –

**सर्वतः क्रान्तिसूत्राणां ध्रुवे योगो भवेद्यतः ।**
**विषुवन्मण्डलप्राच्या ध्रुवे याम्या तथोत्तरा ॥**
**सर्वतः क्षेपसूत्राणां ध्रुवाज्जिनलवान्तरे ।**
**योगः कदम्बसंज्ञोऽयं ज्ञेयो वलनबोधकृत् ॥**
**तत्रापमण्डलप्राच्या याम्या सौम्या च दिक् सदा ।**
**कदम्बभ्रमवृत्तं च बध्नीयात् परितो ध्रुवात् ॥**
**गोले तु जिनतुल्यांशैस्तत्र ज्या क्रान्तिशिञ्जिनी ।**
**सर्वतः समवृत्ताच्च याम्योदक्कुजसङ्गमे ॥**

[1] सिद्धान्तशिरोमणिः – गोलाध्यायः – श्लोकः ४०

**तत्तिर्यग्गतसूत्राणां योगः स समसंज्ञकः ।**
**समध्रुवकदम्बानामुपरि द्युचरान्नयेत् ॥**
**सूत्राणि वृत्तरूपाणि वलनानि तदन्तरे ।**
**अक्षजं वलनं मध्ये स्यात् समध्रुवसूत्रयोः ॥**
**कदम्बध्रुवसूत्रान्तरायनं च त्रिभे ग्रहात् ।**
**कदम्बसमसूत्रान्तः स्फुटं सर्वदिशां च तत् ॥**
**अथवा परितः खेटात् खाङ्कभागान्तरे न्यसेत् ।**
**त्रिज्यावृत्तं ततस्तत्र विषुवत्समवृतयोः ॥**
**मध्येऽक्षवलनं विद्याद्विषुवत्क्रान्तिवृत्तयोः ।**
**अन्तरं चायनं क्रान्तिसमवृत्तान्तरे स्फुटम् ॥**
**तत्रापमण्डलं प्राची तस्या याम्योत्तरः शरः ।**
**वलनानयने क्षेपः क्षिप्तो यैस्ते कुबुद्धयः ॥**
**नक्रादिश्च कदम्बश्च स्यातां याम्योत्तरे समम् ।**
**आयनं वलनं तस्मान्नायनादौ प्रजायते ॥**
**ततो भ्रमति गोले च मकरादिर्यथा यथा ।**
**तथा तथा भ्रमत्येष कदम्बो निजमण्डले ॥**
**कुम्भादावथ मीनादौ याम्योदग्वलयस्थिते ।**
**अयनाद्गतकालांशक्रमक्रान्तिज्यका हि सा ॥**
**उत्क्रमज्या यतो बाणः शिञ्जिनी तु क्रमज्यका ।**
**सत्रिभार्कात् क्रमक्रान्तिज्यातो वलनमायनम् ॥**
**यैरुक्तमुत्क्रमक्रान्त्या भ्रान्त्या तैर्नाशितं हि तत् ।**
**युक्त्यानयैव विज्ञेयमक्षजं च क्रमज्यया ॥**
**परोक्तेरन्यथा ब्रूयाद्यः परान्न प्रदूषयेत् ।**
**अस्यैव दूषणं तद्धि न दोषोऽतोऽन्यदूषणे ॥**[1]

इति ।

नाडीवृत्त-क्रान्तिवृत्तयोः याम्योत्तरमन्तरमेव क्रान्तिः । सा क्रान्तिः नाडीवृत्तस्य लम्बरूपा भवति । सा क्रान्तिः यस्मिन् सूत्रे वर्तते तदेव क्रान्तिसूत्रम् । सर्वाण्यपि क्रान्तिसूत्राणि (नाडीवृत्तस्य लम्बरूपेण कल्पितानि सूत्राणि) ध्रुवस्थानं प्रति गच्छन्ति । अतः सर्वेषामपि क्रान्तिसूत्राणां योगः ध्रुवस्थाने भवति । अत एव क्रान्तिसूत्राणां "ध्रुवसूत्रम्" इत्यपि नाम भवति । एवं सर्वेषामपि क्रान्तिसूत्राणां योगः ध्रुवस्थानयोः भवतीति हेतोः विषुवन्मण्डलप्राच्या ध्रुवे याम्या उत्तरा च दिक् सदा भवतः । अर्थात् नाडीवृत्तस्य प्राच्यपरायाः दक्षिणदिशि यत्र

[1] सिद्धान्तशिरोमणिः – गोलाध्यायः – ४१ तः ५७ श्लोकाः

क्रान्तिसूत्राणां योगो भवति तत्र दक्षिणध्रुवस्थानं भवति । नाडीवृत्तप्राच्यपरायाः उत्तरदिशि यत्र क्रान्तिसूत्राणां योगो भवति तत्र उत्तरध्रुवस्थानं भवति । एवं क्रान्तिः सर्वदा ध्रुवस्थानस्य अभिमुखा भवतीति हेतोः “ध्रुवाभिमुखी क्रान्तिः” इति क्रान्तेः निर्वचनं कृतम् । एवं विषुवद्वृत्तस्य दिङ्निर्णयः ।

क्रान्तिवृत्त-ग्रहविक्षेपवृत्तयोः याम्योत्तरमन्तरमेव शरः अथवा विक्षेपः (क्षेपः) इत्युच्यते । शरस्तु क्रान्तिवृत्तस्य लम्बरूपेण भवति । स च शरः यस्मिन् सूत्रे वर्तते तदेव शरसूत्रम् अथवा क्षेपसूत्रम् इत्युच्यते । सर्वाण्यपि क्षेपसूत्राणि ध्रुवात् जिनलवान्तरे (ध्रुवस्थानात् २४˚ मिते अन्तरे) विद्यमानं कदम्बस्थानं प्रति गच्छन्ति । अतः सर्वेषामपि क्षेपसूत्राणां (क्रान्तिवृत्तस्य लम्बरूपेण कल्पितानां सर्वेषामपि सूत्राणां) युतिः कदम्बस्थाने भवति । अत एव क्षेपसूत्राणां “कदम्बसूत्रम्” इति संज्ञा । उत्तरध्रुवस्थानात् दक्षिणतः जिनलवान्तरे (२४˚ मिते अन्तरे) उत्तरकदम्बस्थानं भवति । दक्षिणध्रुवस्थानात् उत्तरतः जिनलवान्तरे दक्षिणकरम्बस्थानं भवति । तच्च कदम्बस्थानं वलनबोधकृत् भवति । गोले ध्रुवात् परितः जिनतुल्यांशैः कदम्बभ्रमवृत्तं तथा कदम्बं परितः जिनतुल्यांशैः जिनवृत्तं च विन्यस्य वलनस्य स्वरूपं ज्ञातुं शक्यते इति हेतोः कदम्बस्थानं वलनबोधकृत् भवति इत्युक्तं भास्कराचार्येण । अस्मिन् कदम्बस्थाने अपमण्डलप्राच्या अर्थात् क्रान्तिवृत्तपूर्वापरया याम्या सौम्या च दिक् सदा भवति । अर्थात् क्रान्तिवृत्तपूर्वापरायाः दक्षिणदिशि यत्र क्षेपसूत्राणां योगो भवति तत्र दक्षिणकदम्बस्थानम् । क्रान्तिवृत्तपूर्वापरायाः उत्तरदिशि यत्र क्षेपसूत्राणां योगो भवति तत्र उत्तरकदम्बस्थानम् । एवं क्रान्तिवृत्तस्य दिङ्निर्णयः ।

विषुवद्वृत्तं समवृत्तं प्रकल्प्य दक्षिणोत्तरवृत्तस्थे अर्थात् याम्योत्तरवृत्तस्थे ग्रहे आयनवलनस्य उपपत्तिप्रतीत्यर्थं पृथक् प्रदर्शयेत् । तत्क्रमः एवं भवति –

गोले ध्रुवं परितः जिनतुल्यांशैः (२४˚) कदम्बभ्रमवृत्तं बध्नीयात् । कदम्बभ्रमवृत्ते या ज्या भवति सा क्रान्तिशिञ्जिनी (क्रान्तिज्या) भवति । कदम्बभ्रमवृत्तस्य ज्या अधिकाधिकं नाम परमक्रान्तिज्यामिता (ज्या२४˚) भवितुमर्हति ।

समवृत्तात् (अस्मद्देशीयपूर्वापरवृत्तात्) सर्वतः याम्योदक्कुजसङ्गमे अर्थात् दक्षिणोत्तरक्षितिजसङ्गमे तत्तिर्यग्गतसूत्राणां योगः यस्मिन् स्थाने भवति सैव समसंज्ञकः (समस्थानं) भवति । अर्थात् पूर्वापरवृत्तस्य तिरश्चीनभागेन यानि सूत्राणि निर्गतानि तेषां सूत्राणां योगः समस्थाने भवति । तच्च समस्थानम् उत्तरसमस्थानं दक्षिणसमस्थानञ्चेति द्विविधम् । पूर्वापरवृत्तस्य तिरश्चीनभागेन निर्गतानां सूत्राणाम् उत्तरदिशि यत्र बिन्दौ योगः भवति तदुत्तरसमस्थानम् । दक्षिणदिशि यत्र बिन्दौ तेषां सूत्राणां योगो भवति तद्दक्षिणसमस्थानम् ।

एवं गोले ध्रुवः, कदम्बः, समश्चेति त्रयः प्रमुखाः बिन्दवः ज्ञेयाः । द्युचरः (ग्रहः) यत्र वर्तते तस्मात् स्थानात् सम-ध्रुव-कम्बानामुपरि वृत्तरूपाणि सूत्राणि नयेत् । तान्येव सूत्राणि क्रमात् सम-ध्रुव-कदम्बसूत्राणि भवन्ति । अर्थात् ग्रहात् समस्थानोपरि वृत्तस्य यत्सूत्रं नीयते तत्समसूत्रम् । तथा ग्रहात् ध्रुवस्थानोपरि वृत्तरूपं यत्सूत्रं नीयते तद्ध्रुवसूत्रम् । तथा ग्रहात् कदम्बस्थानोपरि वृत्तरूपं यत्सूत्रं नीयते तत्कदम्बसूत्रम् । तेषां सम-ध्रुव-कदम्बसूत्राणामन्तरे वलनानि सम्भवन्ति । तद्यथा –

ग्रहात् त्रिभेऽन्तरे समसूत्र-ध्रुवसूत्रयोर्मध्ये अक्षजं वलनं भवति । यतो हि समवृत्तप्राचीतः नाडीवृत्तप्राची यद्दिशि यावच्चलति तद्दिक्कं तावदाक्षवलनम् । नाडीवृत्तस्य लम्बरूपेण यत्सूत्रं भवति तदेव ध्रुवसूत्रम् । समवृत्तस्य

लम्बरूपेण यत्सूत्रं भवति तदेव समसूत्रम् । अत एव सम-ध्रुवसूत्रयोर्मध्ये ग्रहात् त्रिभेऽन्तरे अक्षजं वलनं भवतीत्युपपन्नम् ।

एवमेव ग्रहात् त्रिभेऽन्तरे कदम्बसूत्र-ध्रुवसूत्रयोर्मध्ये आयनं वलनं भवति । तद्यथा – क्रान्तिवृत्तप्राचीतः नाडीवृत्तप्राची यद्दिशि यावता प्रमाणेन वलति तद्दिक्कं तावदायनं वलनम् । ध्रुवसूत्रं नाडीवृत्तस्य लम्बरूपेण भवति । कदम्बसूत्रं क्रान्तिवृत्तस्य लम्बरूपेण भवति । अतः ग्रहात्त्रिभेऽन्तरे क्दम्ब-ध्रुवसूत्रयोर्मध्ये आयनं वलनं भवतीत्युपपन्नम् ।

तथा च समवृत्तप्राचीतः क्रान्तिवृत्तप्राची यद्दिशि यावच्चलति तद्दिक्कं तावत् स्फुटं वलनम् । तच्च स्फुटं वलनं ग्रहात् त्रिभेऽन्तरे कदम्बसूत्र-समसूत्रयोर्मध्ये भवति ।[1]

एतानि आयनाक्षजस्फुटवलनानि सर्वास्वपि दिक्षु भवन्ति । यतो हि प्राची दिक् येन प्रमाणेन वलति तदनुसारेण तेनैव प्रमाणेन अन्याः अपि दिशः वलन्ति । एवं गोले कदम्बभ्रमवृत्तं बद्ध्वा आयनाक्षजस्फुटवलनानां स्वरूपाणि प्रदर्शयेत् । अथवा ग्रहक्षितिजाख्यवृत्ते एव वलनानां स्वरूपाणि प्रदर्शयितुं शक्यते । तद्यथा – खेटं (ग्रहं) परितः खाङ्कभागान्तरे (९० ̊ अन्तरे) अर्थात् त्रिज्यातुल्यान्तरे गोले वृत्तमेकं बध्नीयात् । तत् त्रिज्यावृत्तमेव ग्रहक्षितिजाख्यवृत्तं भवति । तस्मिन् ग्रहक्षितिजाख्यवृत्ते विषुवद्वृत्त-समवृत्तयोर्मध्ये यदन्तरं भवति तदेव अक्षजं वलनम् । तथा ग्रहक्षितिजाख्यवृत् क्रान्तिवृत्त-समवृत्तयोर्यदन्तरं भवति तदेव आयनं वलनम् । ग्रहक्षितिजाख्यवृत्ते क्रान्तिवृत्त-समवृत्तयोर्यदन्तरं भवति तदेव स्फुटं वलनम् । एवं गोले ग्रहस्थानात् त्रिभेऽन्तरे ग्रहक्षितिजाख्यवृत्तस्य बन्धनेन तस्मिन् ग्रहक्षितिजाख्यवृत्ते आयनाक्षजस्फुटवलनानां प्रमाणानि गणितेन विना गोले एव (प्रत्यक्षत एव) लभ्यन्ते । क्रमज्यां स्वीकृत्य यदि वलनानि आनीयन्ते तदानीमेव अत्र गोले ग्रहक्षितिजाख्यवृत्ते यावन्ति वलनप्रमाणानि दृश्यन्ते तावन्त्येव वलनप्रमाणानि गणितेनापि आगच्छन्ति । उत्क्रमज्यां स्वीकृत्य वलनगणितं क्रियते चेत् गोले ग्रहक्षितिजाख्यवृत्ते प्रत्यक्षतः यावन्मितानि वलनानि दृश्यन्ते तावन्मितान्येव वलनानि गणितेन नागच्छन्ति । तस्माद् भिन्नान्येव वलनप्रमाणानि गणितेन आगच्छन्ति । अतः वलनगणिते क्रमज्या एव गणकैः स्वीकरणीया । उत्क्रमज्या न स्वीकरणीया ।

नक्रादिः (मकरादिः) कदम्बस्थानञ्च याम्योत्तरे = याम्योत्तरवृत्ते समौ स्याताम् । एवमेव कर्क्यादिः कदम्बस्थानं चापि याम्योत्तरे समौ स्याताम् । अत एव अयनादौ नाम अयनसन्धौ (नक्रादौ कर्क्यादौ च) आयनं वलनं नैव प्रजायते । यतो हि क्रान्तिवृत्तप्राचीतः नाडीवृत्तप्राची यद्दिशि यावता प्रमाणेन वलति तद्दिक्कं तावदायनं वलनम् । राशयः सर्वेऽपि क्रान्तिवृत्ते एव भवन्ति । अतः नक्रादिः कर्क्यादिश्चापि क्रान्तिवृत्ते एव भवतः । ग्रहात् त्रिभेऽन्तरे कल्पिते ग्रहक्षितिजाख्यवृत्ते कदम्ब-ध्रुवसूत्रयोर्मध्ये आयनं वलनं भवति । नाडीवृत्तस्य लम्बरूपं

---

[1] ग्रहस्थानात् सम-ध्रुवसूत्रयोः, ध्रुव-कदम्बसूत्रयोः, सम-कदम्बसूत्रयोश्च अन्तरं सर्वत्र तुल्यं न भवति । वलनानि तु ग्रहस्थानात् त्रिभेऽन्तरे कल्पिते ग्रहक्षितिजाख्यवृत्ते सम्भवन्ति । एवं सर्वत्र सम-ध्रुवसूत्रयोः तुल्यान्तराभावात् सम-ध्रुवसूत्रयोरन्तरं ग्रहक्षितिजाख्यवृत्ते (ग्रहात् त्रिभऽन्तरे) यद्भवति तदेव आक्षवलनप्रमाणमिति ज्ञेयम् । एवं सर्वत्र कदम्ब-ध्रुवसूत्रयोः तुल्यान्तराभावात् कदम्ब-ध्रुवसूत्रयोः अन्तरं ग्रहक्षितिजाख्यवृत्ते यद्भवति तदेव आयनं वलनं ज्ञेयम् । तथा च सर्वत्र कदम्ब-समसूत्रयोः तुल्यान्तराभावात् ग्रहक्षितिजाख्यवृत्ते तयोः वृत्तयोः यदन्तरं वर्तते तदेव स्फुटं वलनं ज्ञेयम् । एवं, ग्रहात् त्रिभेऽन्तरे कल्पिते ग्रहक्षितिजाख्यवृत्ते एव वलनानि ज्ञेयानि इति ज्ञापयितुमाचार्यैः श्लोके, "त्रिभे ग्रहात्" इत्युपन्यस्तम् ।

ध्रुवसूत्रम् । क्रान्तिवृत्तस्य लम्बरूपं कदम्बसूत्रम् । एवं मकरादि-कदम्बस्थानयोः तथा कर्क्यादि-कदम्बस्थानयोः याम्योत्तरदिशोः साम्यं भवति । अत एव मकरादौ कर्क्यादौ च (अयनसन्धौ) आयनं वलनं नैव प्रजायते ।

गोले यथा यथा मकरादिः भ्रमति तथा तथा एषः कदम्बः अपि निजमण्डले = कदम्बभ्रमवृत्ते भ्रमति । एषः कदम्बः क्रमेण कुम्भादौ, मीनादौ, मेषादौ......... इति क्रमेण यथा यथा भ्रमति तथा तथा सौम्यसूत्र(याम्योत्तरसूत्र)-कदम्बयोर्मध्ये शिञ्जिनीरूपम् आयनं वलनं प्रजायते । अर्थात् यथा यथा कदम्बभ्रममण्डले कदम्बस्थानस्य भ्रमणवशात् कुम्भादिः, मीनादिः, मेषादिः....... इति क्रमेण क्रान्तिवृत्तस्य भागाः (प्रदेशाः) याम्योदग्वलयस्थिताः = याम्योत्तरवृत्तस्थिताः भवन्ति तथा तथा एतेषां क्रान्तिवृत्तप्रदेशानां तथा कदम्बस्य च याम्योत्तरदिशोः भेदः प्रजायते । याम्योत्तरदिशोः भेदात् पूर्वापरदिशोरपि भेदः । अत एव तदानीं याम्योत्तरसूत्र-कदम्बयोर्मध्ये 'शिञ्जिनीरूपम्' आयनं वलनं कदम्बभ्रममण्डले प्रजायते । न तु बाणरूपमायनं वलनम् ।

**"ज्याचापमध्ये खलु बाणरूपा स्यादुत्क्रमज्या"**[1] इत्युक्तरीत्या उत्क्रमज्या बाणरूपा भवति । क्रमज्या-तच्चापयोर्मध्ये बाणरूपं यदन्तरं भवति तदेवोत्क्रमज्या (versine) इत्युच्यते । क्रमज्या (sine) तु शिञ्जिनीरूपा भवति । अत्र कदम्बभ्रममण्डले कदम्बस्य भ्रमणवशात् शिञ्जिनीरूपा आयनवलनज्या प्रजायते । न तु बाणरूपा आयनवलनज्य । सा आयनवलनज्या अयनागतकालांशक्रमक्रान्तिज्यकातुल्या भवति । न तु उत्क्रमक्रान्तिज्यकातुल्या । अत एव सत्रिराशिग्रहक्रमक्रान्तिज्या एव आयनं वलनं भवति । न तु सत्रिराशिग्रहोत्क्रमक्रान्तिज्या ।

एवं यैः गणकैः भ्रान्त्या उत्क्रमक्रान्तिज्यया आयनवलनमानीतं तेषां गणकानां भ्रान्तिः अत्र कदम्बभ्रमवृत्तेन आयनवलनस्य स्वरूपप्रदर्शनद्वारा भास्कराचार्येण विनाशितम् ।[2]

एवमनया युक्त्या यथा आयनवलनगणिते उत्क्रमज्यायाः निरासः कृतः तया एव युक्त्या आक्षवलनगणितेऽपि उत्क्रमज्या निरस्ता भवति । अतः आक्षवलनगणिते आयनवलनगणिते च क्रमज्या एव स्वीकरणीया । उत्क्रमज्या न स्वीकरणीया इति उपपन्नम् ।

---

[1] सिद्धान्तशिरोमणिः – गोलाध्यायः – स्फुटगतिवासना – श्लोकः ३

[2] मकरादौ कर्क्यादौ च क्रान्तिः परमा, आयनं वलनं शून्यम् । मेषादौ तुलादौ च क्रान्तिः शून्या, आयनं वलनं परमम् । एवं यत्र आयनं वलनं परमं तत्र क्रान्तिः शून्या, तथा यत्र क्रान्तिः परमा तत्र आयनं वलनं शून्यम् । यदा मकरादिः कर्क्यादिर्वा याम्योत्तरवृत्ते भवति तदैव कदम्बोऽपि याम्योत्तरवृत्ते भवति । अतस्तदानीं विषुवद्वृत्त-क्रान्तिवृत्तयोः एकैव याम्योदक् भवति । यदा कुम्भादिः याम्योत्तरवृत्ते भवति तदा दक्षिणोत्तरवृत्तस्य (याम्योत्तरवृत्तस्य) कुम्भादेश्च मध्ये स्वाहोरात्रवृत्ते पञ्चाङ्कगुणचन्द्राः असवः (१९३५ असवः) वर्तन्ते । ते असवः षष्ट्या भाजिताश्चेत् कालांशाः भवन्ति । अर्थात् –

$\frac{१९३५}{६०}$ = ३२°१५' = कुम्भादौ कालांशाः ।

अथ कुम्भादिः यावत् दक्षिणोत्तरवृत्तं नीयते तावत् कदम्बः निजमण्डले = कदम्बभ्रममण्डले चक्रांशाङ्कितैः तावद्भिरेव कालांशैः (३२°१५') क्रमज्या एव भवति । न तूत्क्रमज्या । यतो हि उत्क्रमज्या बाणरूपा । क्रमज्या शिञ्जिनीरूपा । आयनं वलनं शिञ्जिनीरूपेण प्रजायते । न तु बाणरूपेण । कदम्बवृत्ते (कदम्बभ्रमवृत्ते) या ज्या सा क्रान्तिज्या । अतस्तेषां कालांशानां क्रमक्रान्तिज्यका एव आयनं वलनं भवति । अतः कुम्भादौ ३२°१५' अंशानां क्रमक्रान्तिज्यका आयनवलनज्या भवति । अथवा खेटकोट्यंशानां क्रमक्रान्तिज्यका त्रिज्यागुणा द्युज्याहृता चेदपि सैव भवति । एवं कुम्भादौ (१०°००'००") भुजः = १२-१० = २ राशी । कुम्भादौ कोटिः = ३-२ = १ राशिः । अतः एकराशेः क्रमक्रान्तिज्या त्रिज्यागुणा दयुज्यागृता चेत् कुम्भादावायनं वलनं भवति । एवमन्यत्रापि आयनं वलनं क्रमक्रान्तिज्यया एव साध्यम् ।

अत्र सिद्धान्तशिरोमणिग्रन्थे भास्कराचार्येण बहुषु विषयेषु पूर्वाचार्याणां (लल्ल-चतुर्वेदादीनां) दोषाः उद्धृताः । अतः भास्कराचार्यः परनिन्दनदोषभाग्भवति खलु ? इति यः कोऽपि आक्षिपति चेत् भास्कराचार्यः अस्यापि समाधानं ददाति –

**परोक्तेरन्यथा ब्रूयाद्यः परान्न प्रदूषयेत् ।**
**तस्यैव दूषणं तद्धि न दोषोऽतोऽन्यदूषणे ॥**[1]

इति ।

केचन केवलं परेषां दूषणमेव कुर्वन्ति । किन्तु तेषां कथं दोषः ? किमर्थम् अत्र दोषः ? तैः कथितं दुष्टं चेत् निर्दुष्टं किम् ? इत्यादिकं न चिन्तयन्ति । तादृशाः जनाः दोषैकदृशः भवन्ति । किन्तु यः परदोषान् युक्तियुक्ततया खण्डयित्वा निर्दुष्टं किमिति कथयति सः दोषज्ञः भवति । न तु दोषैकदृक् । यो दोषैकदृग्भवति सैव परनिन्दनदोषभाग्भवति । न तु दोषज्ञः । अत्र तु भास्कराचार्येण न केवलं वलनगणिते ये गणकाः उत्क्रमज्यां स्वीकृतवन्तः तेषां दूषणं कृतम्, अपि च किमर्थं वलनगणिते क्रमज्या एव स्वीकरणीया ? इति बहुभिर्युक्तिभिः प्रतिपादितम् । अन्येष्वपि विषयेषु भास्कराचार्येण यत्र यत्र पूर्वाचार्याणां दोषाः उद्धृताः तत्र सर्वत्रापि किं निर्दुष्टमिति युक्तियुक्ततया प्रतिपादितम् । अत एव भास्कराचार्यः दोषज्ञः भवति । न तु दोषैकदृक् । अतः भास्कराचार्यः परनिन्दनदोषभाक् न भवति ।

**गोले जिनवृत्तस्य बन्धनद्वारा वलनगणिते उत्क्रमज्यानिरासः –**

एवं गोले कदम्बभ्रमवृत्तं बद्ध्वा वलनगणिते उत्क्रमज्यायाः निरासं कृत्वा जिनवृत्तद्वारा अपि उत्क्रमज्यायाः निरासं करोति भास्कराचार्यः । तद्यथा –

**उत्क्रमज्यानिरासोऽयमन्यथा वाऽथ कथ्यते ।**
**जिनांशैर्जिनवृत्ताख्यं कदम्बात्परितो न्यसेत् ॥**
**क्रान्तियाम्योत्तरं वृत्तं कदम्बद्वयकीलयोः ।**
**प्रोतं कृत्वा चलं न्यस्तं द्वन्द्वान्ते स्याद्ध्रुवोपरि ॥**
**द्वन्द्वान्ताच्चाल्यतेंऽशैर्यैस्तैरेव चलति ध्रुवात् ।**
**जिनवृत्ते तदंशानां तत्र ज्या क्रान्तिशिञ्जिनी ॥**
**ग्रहध्रुवान्तरे यस्माद् द्युज्याचापांशकाः सदा ॥**
**त्रिज्यावृत्ते यतो देयं तत्रातः परिणाम्यते ॥**[2]

इति ।

अयम् उत्क्रमज्यानिरासः अन्येनापि प्रकारेण कथ्यते । गोले कदम्बं परिः जिनांशैः (२४°) एकं वृत्तं न्यसेत् । तदेव जिनवृत्तं भवति । कदम्बद्वयकीलयोः क्रान्तियाम्योत्तरं वृत्तं प्रोतं कृत्वा द्वन्द्वान्ते अर्थात् मिथुनान्ते ध्रुवोपरि चलं न्यस्तं स्यात् । तच्च वृत्तं द्वन्द्वान्तात् = मिथुनान्तात् यैरंशैश्चाल्यते तैरेवांशैः ध्रुवादपि चलति । जिनवृत्ते तदंशानां या ज्या भवति सैव क्रान्तिशिञ्जिनी अर्थात् क्रान्तिज्या । सा क्रान्तिशिञ्जिनी एवायनवलनज्या

---

[1] सिद्धान्तशिरोमणिः – गोलाध्यायः – ग्रहणवासना – श्लोकः ५७

[2] सिद्धान्तशिरोमणिः – गोलाध्यायः – ग्रहणवासना – ५८ तः ६१$^{१}/_{२}$श्लोकाः

भवति । स्वकीयद्युज्यावृत्ते ग्रहस्य सञ्चारात् सा आयनवलनज्या ग्रहात् द्युज्याग्रे जायते । यतो हि ग्रह-ध्रुवयोरन्तराले सदैव द्युज्याचापांशकाः भवन्ति । ग्रहः स्वकीयद्युज्यावृत्ते अर्थात् स्वाहोरात्रवृत्ते सञ्चरति चेदपि वयं ग्रहं त्रिज्यावृत्ते पश्यामः । अतः द्युज्यावृत्तगतमायनं वलनं त्रिज्याग्रे परिणाम्यते । तदर्थमनुपातः – यदि द्युज्यावृत्ते एषा आयनवलनज्या लभ्यते तर्हि त्रिज्यावृत्ते किमिति । तदानीं समानयोः गुणहारकयोस्त्रिज्ययोः नाशात् आयनवलनानयनसूत्रे भाजकरूपेण द्युज्या एव तिष्ठति । एवं गोले जिनवृत्ते यावन्मिता आयनवलनज्या प्रत्यक्षत एव दृश्यते तावन्मिता आयनवलनज्या यदि क्रमक्रान्तिज्यया आयनवलनज्यासाधनं क्रियते तदानीमेव लभ्यते । उत्क्रमक्रान्तिज्यया साध्यते चेत् एतावन्मिता आयनवलनज्या न लभ्यते ।

एवं जिनवृत्तद्वारा अपि वलनगणिते क्रमज्या एव स्वीकरणीयेत्युपपन्नम् ।

**निष्कर्षः** – वलनगणिते सर्वदा क्रमज्या एव स्वीकरीया, उत्क्रमज्या न स्वीकरणीया इति अस्य शोधपत्त्रस्य निष्कर्षः । भास्कराचार्येण वलनगणिते उत्क्रमज्यानिरासार्थं बह्व्यः गोलयुक्तयः गणितयुक्तयश्च प्रतिपादिताः । किन्तु अस्मिन् शोधपत्रे पत्त्रविस्तरभयात् केवलं गोले कदम्बभ्रम-जिनवृत्तयोः बन्धनद्वारा भास्कराचार्येण वलनगणिते उत्क्रमज्यानिरासार्थं यद् युक्तिद्वयं प्रतिपादितं तद्विषये एव मया चर्चितम् । अन्यासां युक्तीनां विषये न चर्चितम् । पत्त्रविस्तरभयात् अत्रैव अस्य शोधपत्त्रस्य कृते पूर्णविरामः दीयते ।

## सन्दर्भग्रन्थसूची


1. **सिद्धान्तशिरोमणेर्गोलाध्यायस्योपपत्तिः** – लेखकः – डॉ॥ प्रेमकुमारशर्मा, संस्करणम् : सा.यु..२००५, प्रकाशनसंस्था – नागप्रकाशनम्, नवदेहली
2. **श्रीमद्भास्कराचार्यप्रणीतः सिद्धान्तशिरोमणिः – स्वोपज्ञवासनाभाष्यसंवलितो नृसिंहदैवज्ञकृतवार्त्तिकोपेतश्च** – सम्पादकः – डॉ॥ मुरलीधरचतुर्वेदः; तृतीयं संस्करणम्; संस्करणवर्षम् – सा.यु.२०१०; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी
3. **"ज्या-सिद्धान्ताः" Formulas of Sine;** सम्पादकः – पं. शिवचरणशास्त्री; प्रकाशनवर्षम् – सा.यु.२०१४; प्रकाशनसंस्था – राष्ट्रियसंस्कृतसाहित्यकेन्द्रम्, जयपुरम्
4. **ज्योतिष-सिद्धान्त-मञ्जूषा;** ग्रन्थकर्ता – डॉ ॥ विनयकुमारपाण्डेयः; संस्करणवर्षम् – सा.यु.२०२०; प्रकाशनसंस्था – चौखम्बा सुरभारती प्रकाशनम्, वाराणसी
5. **मन्दशीघ्रफलसाधनसमीक्षा;** ग्रन्थकर्ता – विद्यावाचस्पतिः डॉ ॥ रामजीवनमिश्रः; प्रथमसंस्करणम् – सा.यु.२००५; प्रकाशनसंस्था – ठाकुरप्रकाशनम्
6. **ग्रहनक्षत्राणि;** ग्रन्थकर्ता – डॉ ॥ सम्पूर्णानन्दः; अनुवादकः सम्पादकश्च – पण्डितश्रीकमलापतिमिश्रः; प्रकाशनवर्षम् – सा.यु.२०१६; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी
7. **सुराकान्तसङ्कलितः ज्योतिर्विज्ञानशब्दकोषः**; लेखनं सम्पादनञ्च – डॉ ॥ सुराकान्तझा; प्रथमं संस्करणम्; संस्करणवर्षम् – सा.यु.२००९; प्रकाशनसंस्था – चौखम्बा कृष्णदास अकादमी, वाराणसी

8. **सूर्यसिद्धान्तः (आर्षग्रन्थः)**; व्याख्याकारः – श्रीकपिलेश्वरशास्त्री; संस्करणवर्षम् – सा.यु.२०१५; प्रकाशनसंस्था – चौखम्भा संस्कृतभवनम्, वाराणसी

9. **म.म.सुधाकरद्विवेदिप्रणीतया 'सुधावर्षिणी'टीकया संवलितः सूर्यसिद्धान्तः;** सम्पादकः – विद्यावारिधिः श्रीकृष्णचन्द्रद्विवेदी; द्वितीयं संस्करणम्; संस्करणवर्षम् – सा.यु.२०१६; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

10. **स्वकृतया अङ्कविवृतिव्याख्यासहितं सपरिशिष्टं 'केतकीग्रहगणितम्' – श्रीवेङ्कटेशतनयश्रीदत्तराजविरचितेन केतकीपरिमलेन वासनाभाष्येण समुल्लसितम्;** ग्रन्थकर्ता – श्रीवेङ्कटेशकेतकर्; तृतीयं संस्करणम्; संस्करणवर्षम् – सा.यु.२०१४; प्रकाशनसंस्था – भारतीयविद्याप्रकाशनम्, नवदेहली

11. **भारतीयज्यौतिषे संस्थानविद्या;** अन्वेषकः लेखकश्च – प्रो ॥ सच्चिदानन्दमिश्रः; सम्पादकः – डॉ ॥ शिवाकान्तमिश्रः; प्रथमसंस्करणम् – सा.यु.२०१७; प्रकाशनसंस्था – भारतीयविद्यासंस्थानम्, नवदेहली

12. **भास्करीयगोलमीमांसा;** प्रधानसम्पादकः – प्रो ॥ वाचस्पति उपाध्यायः, लेखकः – प्रो ॥ देवीप्रसादत्रिपठी, सम्पादकः – प्रो ॥ रमेशकुमारपाण्डेयः, संस्करणम् – सा.यु.२०१०, प्रकाशनसंस्था – श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली

13. **उपपत्तीन्दुशेखरः;** महामहोपध्यायश्रीदुर्गाप्रसादद्विवेदेन सङ्कलितः, सम्पादकः – श्रीगिरिजाप्रसादद्विवेदी, संस्करणम् – सा.यु.२००८, प्रकाशनसंस्था – भारतीयबुक् कारपोरेशन् – नवदेहली

# दिनकरी-प्रभानुसारि सिद्धान्तमुक्तावलीग्रथितात्मपदार्थसमीक्षणम्

**सुव्रत-गायेनः**
सहायक-आचार्यः, संस्कृतविभागस्य,
चन्दननगर-महाविद्यालयस्य,चन्दननगरस्थस्य,
हुँगली-मण्डलस्थस्य, पश्चिमवङ्गस्य, 712136.

**शोधसारः –** नव्यन्यायसम्प्रदाये षोडशपदार्थान् अनादृत्य **मानाधीना मेयसिद्धि**रिति नयेन प्रमेयप्रतिपिपादयिषायाः प्रमाणायत्तसिद्धिकतया प्रमाणपदार्थमात्रमुपजीव्य निरतिशयवाङ्गाधुरीगुम्फितो निखिलशास्त्रकृदादरणीयतमः तत्त्वचिन्तामणिग्रन्थो विरचितः श्रीमद्गङ्गेशोपाध्यायैः। किन्तु करालकालकवलितमनुजनूनां स्वाध्यायविद्याशक्त्यादिह्रासात् अनायासतत्त्वावधारणेन विद्यासमृद्धये बालानां सुखबोधाय च आकरग्रन्थानां प्रकरणबन्धनिबन्धनप्रयासो परिदृश्यते विदुषाम्। सत्स्वपि प्रकरणग्रन्थान्तरेषु विश्वनाथन्यायपञ्चाननविरचितो न्यायसिद्धान्तमुक्तावलीग्रन्थः कीर्त्तिगरिम्ना ग्रन्थान्तरान् अतिशेते। सिद्धान्तमुक्तावल्याः गूढतत्त्वप्रकाशार्थं नैकैर्विद्वद्भिर्नैकाः टीकाः आटीकिताः। तासु टीकासु महादेवभट्टप्रारब्धो दिनकरभट्टप्रपूरितः प्रकाशः, रायनृसिंहशास्त्रिणः प्रभा च सर्वाः टीका अतिशय्य विद्योतेतेतमाम्। एतासु टीकासु यद्यपि समानमेव विषयं समाश्रित्य व्याख्यातारः स्वस्वबन्धेषु स्वस्वसिद्धान्तानुगुणम् आकरग्रन्थव्याख्यानतत्पराः तथापि व्याख्यातृबुद्धिवैषम्यान्मिथो वैमत्यं सुलभम्। अत्र सिद्धान्तमुक्तावल्याः प्रत्यक्षखण्डे निरूपिततत्त्वेषु दिनकरीप्रभाटीके समाश्रित्य आत्मनः समीक्षणं वितन्यते।

**कुञ्चीशब्दाः –** मुक्तावली, आत्मत्वजातिसिद्धिः, सुख, दुःख, ज्ञानत्वावच्छिन्न, तादात्म्यसम्बन्धाच्छिन्न, समवायसम्बन्धावच्छिन्न, शक्यतावच्छेदक इत्येते।

**उपोद्घातः – आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तवो निदिध्यासितव्यः।**[1] इति भागवती श्रुतिर्भवबन्धननाशनसाधनत्वेन श्रवणमनननिदिध्यासनानि उपदिशति। तेषु **न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।**[2] इति। भगवताक्षचरणेन महर्षिणा सर्वजन्तूनामात्यान्तिकदुःखोन्मूलनार्थं **प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः।**[3] इति प्रथमसूत्रेण निःश्रेयससाधनतया प्रतिपादितं षोडशपदार्थतत्त्वज्ञानं तदनुवर्तिभिः सर्वैरेव विद्वद्वरैः तत्तद्ग्रन्थेषु अनुमोदितम्। परं परवर्त्तिनि काले नव्यन्यायसम्प्रदाये षोडशपदार्थान् अनादृत्य **मानाधीना मेयसिद्धि**रिति नयेन प्रमेयप्रतिपिपादयिषामात्रस्यैव प्रमाणायत्तसिद्धिकतया प्रमाणपदार्थमात्रमुपजीव्य निरतिशयवाङ्गाधुरीगुम्फितो निखिलशास्त्रकृदादरणीयतमः निसर्गसुन्दरातिसंक्षिप्तपदसङ्घटनैर्विनिर्मितोऽपि बह्वर्थगर्भितः तत्त्वचिन्तामणिग्रन्थो विरचितः श्रीमद्गङ्गेशोपाध्यायैः। किन्तु करालकालकवलितमनुजनूनां स्वाध्यायविद्याशक्त्यादिह्रासात् अनायासतत्त्वावधारणेन विद्यासमृद्धये बालानां सुखबोधाय च आकरग्रन्थानां प्रकरणबन्धनिबन्धनप्रयासो

---

[1] बृहदाण्यकोपनिषदि

[2] श्यामापदमिश्रसम्पादित-न्यायकुसुमाञ्जलौ, पृष्ठाङ्कः 4

[3] न्यायसूत्रम् 1.1.1

परिदृश्यते विदुषाम्। सत्स्वपि प्रकरणग्रन्थान्तरेषु विश्वनाथन्यायपञ्चाननविरचितो न्यायसिद्धान्तमुक्तावलीग्रन्थः कीर्त्तिगरिम्ना ग्रन्थान्तरान् अतिशेते। न्यायसिद्धान्तमुक्तावल्याः निगूढतत्त्वप्रकाशार्थं नैकैर्विद्वद्भिर्नैकाः टीकाः आटीकिताः। तासु महादेवभट्टप्रारब्धो दिनकरभट्टप्रपूरितः प्रकाशः, रायनृसिंहशास्त्रिणः प्रभा च सर्वाः टीका अतिशय्य विद्योतेतेतमाम्। यद्यपि एकमेव विषयमाश्रित्य व्याख्यातारः स्वबन्धेषु स्वसिद्धान्तानुगुणम् आकरग्रन्थव्याख्यानतत्पराः तथापि व्याख्यासु व्याख्यातृबुद्धिवैषम्यान्मिथो वैमत्यं सुलभम्।

विश्वनाथन्यायपञ्चाननप्रपञ्चितायां न्यायसिद्धान्तमुक्तावल्यां प्रत्यक्षखण्डे द्रव्यादिसप्तपदार्थानां तथा पृथिव्यादिनवद्रव्याणां साङ्गोपाङ्गं व्याख्यानं दृश्यते। ततो नवद्रव्येषु आत्मनो निरूपणादनन्तरं बुद्धेर्निरूपणमकारि विश्वनाथेन। अस्मिन् प्रत्यक्षखण्डे चतुर्षु प्रमाणेषु केवलं प्रत्यक्षप्रमाणस्य एव निरूपणं दृश्यते। प्रमाणान्तराणां तथा गुणादीनाम् अवशिष्टविषयाणां प्रतिपादनं न्यायसिद्धान्तमुक्तावल्याः अनुमानादिखण्डान्तरे लक्ष्यते। अथ प्रत्यक्षखण्डे निरूपिततत्त्वेषु दिनकरीप्रभाटीके समाश्रित्य आत्मनः समीक्षणं वितन्यते।

- **न्यायसिद्धान्तमुक्तावल्या आत्मप्रकरणे दिनकरी-प्रभाश्रितं समीक्षात्मकमध्ययनम्**

द्रव्यादीनां नवानाम् उद्देशक्रमेण निरूपणावसरे समागतस्य आत्मनः पर्यालोचनावसरे न्यायसिद्धान्तमुक्तावल्यां कारिका उदीरिता विश्वनाथन्यायपञ्चाननेन –

**आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम्।**[1] इति।

अत्र कारिकया तद्व्याख्यया च न्यायसिद्धान्तमुक्तावल्यां विश्वनाथन्यायपञ्चाननेन आत्मत्वजातिः साधिता। तन्नये सुखदुःखादिसमवायिकारणतावच्छेदकतया आत्मत्वजातिः सिद्ध्यति। तथाहि तेन उक्तम् –

**आत्मानं निरूपयति आत्मेन्द्रियाद्यधिषत्ठातेति।**

**आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्ध्यति।**[2] इति।

अत्र आदिपदेन सुखदुःखानामिव ज्ञानेच्छाद्वेषप्रयत्नधर्माधर्मभावनानामपि समवायिकारणतावच्छेदकतया आत्मत्वजातिः सिद्ध्यति इति बोध्यम्। आत्मत्वजातेः आत्मान्तरे अप्रत्यक्षत्वे अपि स्वात्मनि तस्य प्रत्यक्षं भवत्येव। अत्र कारणं हि अहं सुखी, अहं दुःखी इत्यादिप्रत्यक्षे स्वात्मा विषयो भवति। एतादृशावस्थायां यद्यपि आत्मत्वस्य सिद्धिः प्रत्यक्षप्रमाणेन एव सम्भवति तथापि तत्र सकलात्मसाधारणस्य अप्रत्यक्षत्वात् जातिः न सिद्ध्यति। जातिलक्षणं हि **नित्यत्वे सत्यनेकसमवेतत्वम्** इति। जातिविषये अनेकसमवेतत्वप्रत्यक्षं प्रति अनेकव्यक्तीनां प्रत्यक्षमपि अपेक्षितं वर्तते। एवम् आत्मत्वजातेः प्रत्यक्षेण असिद्धेः अनुमानं प्रमाणम् आश्रियते। तथा च, अनुमानेन प्रमाणेन सुखदुःखादिसमवायिकारणतावच्छेदकतया आत्मत्वजातिं साधयति भाषापरिच्छेदकारः।

ननु सुखदुःखादीन् प्रत्यात्मनः कारणत्वे प्रसिद्धे एव सुखदुःखादिसमवायिकारणतावच्छेदकतया आत्मत्वजातिः सिद्ध्येत्। सुखदुःखादीन् प्रति नात्मनः कारणत्वम्। अपि तु, सुखदुःखद्वेषभावनाधर्माधर्मान् प्रति धर्माधर्मानिष्टसाधनत्वज्ञानानुभवविहितकर्मनिषिद्धकर्माणि कारणानि। एतेभ्यो निमित्तकारणेभ्य एव तत्तदात्मसु सुखदुःखादीनां तत्तद्विशेषगुणानामुत्पत्तिः सम्भवतीत्यात्मनः सुखदुःखादीन् प्रति पृथक्तया कारणतास्वीकारः अनावश्यकः। अन्यदीयसुखस्य अन्यात्मनि उत्पत्तिनिवारणार्थं सुखदुःखादीन् प्रति तादात्म्येनात्मनः कारणत्वं

[1]. पञ्चाननभट्टाचार्यशास्त्रिसम्पादित-भाषापरिच्छेदे, पृष्ठाङ्कः 205

[2]. तत्रैव, पृष्ठाङ्कः 205-206

स्वीकार्यमासीत् परं समवायेन धर्मस्य सुखं प्रति कारणत्वे स्वीकृते उक्तापत्तिर्दूरीभूता भवति। यद्यपि भावकार्यमात्रं प्रति समवायिकारणम् आवश्यकमिति नियमात् सुखदुःखादीन् प्रति सत्सु अपि धर्माधर्मादिषु निमित्तकारणेषु समवायिकारणत्वेन आत्मा स्वीकार्यस्तथापि भावकार्यं प्रति समवायिकारणतावच्छेदकरूपेण द्रव्यत्वस्य अथवा तद्व्यक्तित्वस्य वा स्वीकारे अप्युक्तनियमस्य निर्वाहो भवतीति सुखदुःखादीनां समवायिकारणतावच्छेदकरूपेण आत्मत्वजातिसद्धिः अनावश्यिकी।

अत्र केचन प्राचीना आचार्या आक्षिपन्ति यत् कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वम् इति नियमात् कार्यमात्रवृत्तिसुखत्वदुःखत्वादीनां यत्किञ्चिन्निष्ठकारणतानिरूपितकार्यतावच्छेदकत्वं वक्तव्यम्। अतः सुखत्वादेः आत्मत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वनिर्वाहाय सुखत्वाद्यवच्छिन्नं प्रति आत्मत्वेन कारणत्वं कल्पनीयम्। यद्यपि सुखत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकता सत्तायां द्रव्यत्वे वा स्वीकर्तुं शक्यते तथा प्रागुक्तरीत्या समवायसम्बन्धेन सुखदुःखादीन् प्रति धर्माधर्मादीनां निमित्तकारणत्वे स्वीकृते उपर्युक्तव्यभिचारः दूरीकर्तुं शक्यते तथापि व्याप्यो लघुभूतश्च यो धर्मस्तस्य कारणतावच्छेदकत्वे सम्भवति व्यापकस्य धर्मस्य कारणतावच्छेदकत्वं न युक्तम् इति नियमात् व्याप्यस्य आत्मत्वस्यैव सुखादिकारणतावच्छेदकत्वं स्वीकार्यम्। अस्मिन् प्रसङ्गे दिनकरीकारेण सुखादिकं प्रति आत्मनो द्रव्यत्वेन कारणत्वे अनुपपत्त्यनन्तरमाह –

**वस्तुतस्तु मनसि ज्ञानोत्पत्तिवारणाय ज्ञानत्वावच्छिन्नं प्रत्यात्मत्वेन हेतुत्वमावश्यकम्।**[1] इति।

**<u>तदाशयः</u>** तु इत्थम्, द्रव्यत्वस्य मनसि अपि सत्त्वात् तत्र ज्ञानोत्पत्तिवारणाय ज्ञानत्वावच्छिन्नं प्रत्यात्मत्वेन हेतुत्वं वक्तव्यम्। मनसि आत्मत्वविरहान्न ज्ञानोत्पत्त्यापत्तिः। तथा च ज्ञानत्वावच्छिन्नसमवायिकारणतावच्छेदकतया आत्मत्वजातिसिद्धिः इति भावः।

परं प्रभाकारस्तु नेदं मतं सहते। तथाहि तेन उक्तम् –

**केचित्तु वस्तुतस्तु मनसि ज्ञानोत्पत्तिवारणाय ज्ञानत्वावच्छिन्नं प्रत्यात्मत्वेन हेतुत्वमावश्यकमिति व्याचक्रुः। तदसत्, तथापि तावतापीश्वरे ज्ञानोत्पत्त्यापत्तेर्दुर्वारत्वात्। न च समवायेन ज्ञानोत्पत्तौ शरीरस्यावच्छेदकतया ईश्वरस्य शरीराभावेन न तत्र समवनायेन ज्ञानोत्पत्त्यापत्तिरिति वाच्यं तथा सति मनसः अपि शरीराभावेनैव तत्र ज्ञानोत्पत्त्यभावात् आत्मत्वेन हेतुत्वे उक्तापत्तिवारणरूपप्रमाणासम्भवात्। ... वस्तुतस्तु आत्मपदशक्यतावच्छेदकतया आत्मत्वजातिसिद्धिः असति बाधके शक्यतावच्छेदकतया जातिसिद्धेः सकलतन्त्रसिद्धत्वाददृष्टपदस्य नानार्थकत्वेनादृष्टपदशक्यतावच्छेदकतया जातिसिद्धेरपि वारितत्वात्।**[2] इति।

अत्र प्रभाकारस्य अयमाशयः, यदि ज्ञानादीन् प्रति आत्मत्वेन आत्मनः समवायिकारणत्वं स्वीक्रियते तर्हि आत्मनि अर्थात् जीवात्मनि तथा परमात्मनि ज्ञानोत्पत्तिः स्वीकर्तव्या। परमीश्वरो हि नित्यज्ञानवान् भवति इति न्यायसिद्धान्तः। अतः स्वसिद्धान्तविरोधापत्तिर्दुर्वारा। किञ्च, यदि शरीरावच्छेदकतया आत्मनः ज्ञानादीन् प्रति कारणत्वम् अङ्गीक्रियते तर्हि नेश्वरे ज्ञानोत्पत्तेः आपत्तिः इति चेत् तेनैव मनसि अपि ज्ञानोत्पत्त्यापत्तिः निराकृता भवतीति तेनैव ज्ञानादीन् प्रत्यात्मनः कारणत्वं वक्तव्यं न तु आत्मत्वेन। तेन च मनसि ज्ञानोत्पत्तिवारणाय

---

[1] . शङ्कररामशास्त्रिसम्पादित-कारिकावल्याम्, पृष्ठाङ्कः 382

[2] . तत्रैव, पृष्ठाङ्कः 381

ज्ञानत्वावच्छिन्नं प्रति आत्मत्वेन हेतुत्वं वक्तव्यं तथा ज्ञानादिसमवायिकारणतावच्छेदकतया आत्मत्वजातिसिद्धिः इति महादेवमतं तुच्छम्। परम् असति बाधके शक्यतावच्छेदकतया जातिसिद्धिनियमादत्र आत्मपदशक्यतावच्छेदकतया आत्मत्वजातिसिद्धिः बोध्या इति प्रभाकृतां सिद्धान्तः।

**<u>उपसंहारः</u>** – प्रकृते प्रबन्धे न्यायसिद्धान्तमुक्तावल्यां प्रतिपादितस्य आत्मप्रकरणस्य दिनकरी-प्रभा-टीकाद्वयदिशा यथामति समीक्षणं कृतम्। तत्र आत्मनिष्ठात्मत्वजातिः कथं सिद्ध्यतीत्यस्य विचारवेलायां दिनकरीकारेण ज्ञानत्वावच्छिन्नं प्रति आत्मत्वेनात्मनः हेतुत्वमङ्गीकृतम्। एवं हेतुत्वाङ्गीकारे मनसि ज्ञानोत्पत्तिनिराकृतिर्भवतीति दिनकरीकारमतम्। परं प्रभाकृन्नैतन्मतं स्वीकृतवान्। तन्नये शरीरावच्छेदकतयात्मनः कारणत्वाङ्गीकारे नेश्वरे ज्ञानोत्पत्त्यापत्तिः, नापि मनसि ज्ञानोत्पत्त्यापत्तिः शरीराभावात्। अनयोर्मतयोः पर्यालोचनेनैतद्वक्तुं शक्यते यत्प्रभाकृतां मतमेव श्रेयः। तत्र प्रभानुसारं शरीरावच्छेदकतयात्मनि ज्ञानोत्पत्तिस्वीकारे न कश्चन दोष इत्यलं पल्लवितेन।

वस्तुतस्तु महादेवभट्टग्रथितो दिनकरभट्टप्रपूरितो दिनकरीय इति प्रसिद्धः प्रकाशाख्यो व्याख्याग्रन्थो ग्रन्थग्रन्थिजालजटिलोऽपि अनायासतयाकरग्रन्थनिगूढार्थनिरूपणेन न्यायनये निपुणानां मनआवर्जनकर इति विदुषां निर्विवादविषयः अयम्। प्रभा हि अनितरसाधारणी ग्रन्थकर्त्तुर्निगूढतात्पर्यप्रकाशिनी ग्रन्थान्तरापेक्षया विचारगाम्भीर्यमुद्वहन्ती इतरदुरूहग्रन्थग्रन्थिमोचनेन बन्धेतरमतमर्दनेन च आवर्जयति शास्त्रानुशीलनपरिशीलितधीषणानां सतां चेतांसि इति शम्।

**<u>सहायकग्रन्थाः</u>**


- न्यायपञ्चाननः, विश्वनाथः। *कारिकावली* (प्रभा-मञ्जूषा-दिनकरीय-रामरुद्रीय-गङ्गारामीय-सहिता)। सम्पा. शङ्कररामशास्त्री, वाराणसीः चौखम्बा-संस्कृत-प्रतिष्ठानम्, 2016.
- न्यायपञ्चाननः, विश्वनाथः। *कारिकावली* (मुक्तावली-दिनकरी-रामरुद्रीसनाथिता)। सम्पा. आत्मारामशर्मा, वाराणसीः चौखम्बा-संस्कृत-सिरिज्-अफिस्, 2012.
- न्यायपञ्चाननः, विश्वनाथः। *कारिकावली* (मुक्तावली-दिनकरी-रामरुद्रीसनाथिता)। सम्पा. आत्माराम-नारायण-जेरे, नवदेहलीः राष्ट्रिय-संस्कृत-संस्थानम्, 2002.
- न्यायपञ्चाननः, विश्वनाथः। *कारिकावली* (प्रत्यक्षखण्डान्ता) (सिद्धान्तमुक्तावली-सूर्यनारायणशुक्लकृतमयूख-प्रकाशव्याख्योपेता)। सम्पा. रामगोविन्दशुक्लः, वाराणसीः चौखम्बा-संस्कृत-सिरिज्-आफिस, 2008.
- न्यायपञ्चाननः, विश्वनाथः। *कारिकावली* (सिद्धान्तमुक्तावलीसहिता)। सम्पा. जीवरामशास्त्री, मुम्बइः गुजराती-प्रिन्टिंग्-प्रेस्, 1923 (प्रथमप्रकाशः)।
- न्यायपञ्चाननः, विश्वनाथः। *न्यायसिद्धान्तमुक्तावली* (दिनकरी-रामरुद्री-हिन्दीव्याख्या-समेता)। सम्पा. हरिरामशुक्लशास्त्री, वाराणसीः चौखम्बाप्रकाशनम्, 2011.
- न्यायपञ्चाननः, विश्वनाथः। *न्यायसिद्धान्तमुक्तावली* (दिनकरी-हिन्दीव्याख्यासमेता)। सम्पा. राजारामशुक्लः, शिमलाः इन्डियान्-इन्स्टिटिउट्-अव्-आड्भान्स्ड्-स्टाडिज्, 2015 (प्रथम-प्रकाशः)।

- न्यायपञ्चाननः, विश्वनाथः। *न्यायसिद्धान्तमुक्तावली* (प्रत्यक्षखण्डात्मिका) (बालप्रिया-व्याख्योपेता)। सम्पा. गजाननशास्त्रि-मुसलगाँवकरः, वाराणसी: चौखम्बा-सुरभारती-प्रकाशनम्, 2014 (प्रथमप्रकाशः)।
- न्यायपञ्चाननः, विश्वनाथः। *न्यायसिद्धान्तमुक्तावली* (मुक्तावलीसंग्रहसहिता)। सम्पा. पञ्चाननशास्त्री, कलिकाता: महाबोधि-बुक्-एजेन्सिः, 2016 (पुनर्मुद्रणम्)।
- न्यायपञ्चाननः, विश्वनाथः। *न्यायसिद्धान्तमुक्तावली*। सम्पा. श्रीकृष्णवल्लभाचार्यः, वाराणसी: चौखम्बा-संस्कृत-प्रतिष्ठानम्, 2014 (द्वितीयप्रकाशः)।
- न्यायपञ्चाननः, विश्वनाथः। *भाषापरिच्छेदः* (ज्वालाप्रसादगौडकृत-विलासिनीसमाख्य-व्याख्यासमेतः)। सम्पा. ढुण्ढीराजशास्त्री, दिल्ली: चौखम्बा-संस्कृत-प्रतिष्ठानम्, 2003.

# पुरुषार्थानामुत्सनिरूपणम्

डा. वाणेश्वरजाना

**विषयसार**:-

प्राणिभिः परिपूर्णमिदं जगत्।तत्र तेषु मनुष्यः श्रेष्ठः। परमब्रह्मणा विनिर्मिते अस्मिन् विश्वे मनुष्याणां भिन्नत्वस्य कारणमपि भगवता निर्धारितम्। पुरुषार्थः खलु वुद्धिमतां मनुष्याणां भिन्नत्वकारणम्। अयं पुरुषार्थश्चतुर्विधः धर्मार्थकाममोक्षभेदेन। तत्र धर्मः खलु धारकः। जगतः धारकः। वस्तुतः धर्मो नियमस्य नामान्तरमेव। अर्थपदेन जागतिकविषया बोध्यन्ते। जगतः यानि कान्यपि प्रयोजनसाधकानि, तान्यर्थपदवाच्यानि। प्रवृत्तिमूलकपुरुषार्थः कामः। कामवशादेव जगन्निर्माणम्। एवञ्चान्तिमे एतेषां त्रयाणां यः फलभूतः, स खलु परमपुरुषार्थः मोक्षः। परन्तु कुत्रायं पुरुषार्थः निहितोऽस्ति ? वेदादीनि शास्त्राणि पुरुषार्थानामुत्सस्वरूपाणि। वेदे यद्यपि पुरुषार्थानां बीजं निहितमासीत्, परन्तु तस्य बीजस्य विकाशः परवर्तिकालेऽभवत्, येषां वर्णनमस्मिन् प्रबन्धे संक्षेपेण यथामत्युपस्थाप्यते।

**मूलपदानि**-

पुरुषार्थः, धर्मः, अर्थः, कामः, मोक्षः इत्यादीनि।

अखिलवैचित्र्यात्मके विश्वेऽस्मिन् मनुष्याः खलु विचारबुद्धिशीलजीवाः। तेषु पुनः वयं भारतीयाः सर्वदा आध्यात्मवादस्य प्रत्ययिनः। अतो विचारशीलानामस्माकं भारतीयानां जीवने पुरुषार्थानां प्रभूतं गुरुत्वमस्ति। मानवजीवनस्य सार्विकविकाशः पुरुषार्थाद् भवति इति सर्वैः मन्यते। अतो भारतीयमनीषायां पुरुषार्थो हि चरमप्रतिपाद्यरूपेण विवेचितः। तस्मादस्माकं विविधशास्त्रादिषु साहित्यादिषु च ग्रन्थेषु पुरुषार्थलाभ एव हि मूललक्ष्यरूपेण निर्धारितः। पुरुषार्थोऽस्माकं जागतिकेन कर्मणा सह पारलौकिककर्मणां योगसाधनं करोति। कर्मानुसारं फलं भुङ्क्ते मनुष्यः। अतो जन्मनः परं जगति यस्य यदृशं कर्म, तदनुसारं स फलं लभते। पुरुषार्थः स एव विषयः, यः पुरुषं सम्यक् कर्मद्वारा मृत्योः परं सम्यक्क्षेत्रे प्रेरयति। धर्मलाभद्वारा तथा तदनुसारमर्थकामयोः लाभेन मोक्षः प्राप्यते नरैः, एवञ्च प्रारब्धकर्मणां क्षये यदा ते परलोकं गच्छन्ति,तदा परमात्मना सह सायुज्यं लभन्ते।

साधारणव्युत्पत्त्या पुरुषाणामर्थः खलु पुरुषार्थ इति षष्ठीतत्पुरुषसमासेन पदमिदं सिद्धम्। अर्थ्यते यत्तत् इति विग्रहे (अर्थ+घञ्) अर्थशब्दो निष्पन्नः। अत्र अर्थशब्दः प्रयोजनार्थकः। अमरकोषे उक्तम्- "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु।"[१] अतः पुरुषस्य प्रयोजनं हि पुरुषार्थः।[२] पुरुषाणामर्थः पुरुषार्थः, अथवा पुरुषैः अर्थ्यते प्रार्थ्यते इति पुरुषार्थः। अस्माकं वेदोपनिषदादिप्राचीनशास्त्रेषु तथा तत्परवर्तिसंस्कृतवाङ्मयेषु चत्वारः पुरुषार्थाः स्वीकृताः। धार्मार्थकाममोक्षाः। अस्माकं भारतीयसंस्कृतौ सर्वविषयाणां मूलाधारो खलु वेदः। किन्तु वेदे एतेषां वर्णनं भिन्नभावेन कृतम्। तत्र पुरुषार्थ इति पदस्य तथा चतुर्वर्ग इति पदस्य व्यवहारः न दृश्यते। परन्तु जीवनधारणस्य माननिर्धारणकाले एतेषां चतुर्वर्गाणामेव वर्णनं परिलक्ष्यते।

जगत्सृष्टेः रहस्यं वेदे निहितमस्ति। नासदीयसूक्ते उक्तं जगत्सृष्टेः प्राक् तत्र नासीत् किमपि। प्रलयकाले कामः खलु परमतत्त्वमधिकृतवान्। "कामस्तदग्रे समवर्तताधि।"[३] ईश्वरेण तस्येच्छावशात् स्वशरीराद् जगन्निर्माणं

कृतम्। स यद्यपि एकः तथापि बहुः अभवत्। “एकं सद्विप्रा बहुधा वदन्ति”[४] ऋग्वेदस्य पुरुषसूक्ते भगवतः शरीरात् खलु सर्वविषयाणां निर्माणस्य वर्णनमस्ति। पुनः ऋग्वेदस्य यमयमीसंवादसूक्ते संसारसृजनार्थं कामस्य उल्लेखो दृश्यते। तत्र यमं प्रति यम्या उक्तौ कामभावः स्पष्टः।[५] पुरुषस्य जीवनधारणाय जागतिकविषयाणामावश्यकतास्ति। योऽर्थपदवाच्यः। यस्य वर्णनं विविधसूक्तेषु उपनिषदादिषु च स्पष्टम्। कठोपनिषदि प्रेयसः वर्णनद्वारार्थस्य नूनता प्रतिपादिता।[६] पुनः “न वित्तेन तर्पनीयो मनुष्यो”[७] इत्यादिमन्त्रेऽर्थस्य स्वरूपं प्रतिपादितम्। अथर्ववेदस्य पृथिवीसूक्ते पृथिवी सर्वधनस्याश्रयरूपेण तथा भरणपोषणयोः कारणरूपेण वर्णिता। “विश्वम्भरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशानी”[८] जगतः परिचालनार्थं नियमस्यावश्यकता भवति। यः खलु जगत्परिचालयति स धर्मः। वेदे धर्मोऽनुशासनस्य नामान्तरमासीत्।[९] तत्र ऋतशब्दस्य प्रयोगः धर्मार्थे कृतः। “ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत।”[१०] धर्मपदस्योल्लेखः पुरुषसूक्ते क्लीवलिङ्गे कृतः। तत्रोक्तं “तानि धर्माणि प्रथमान्यासन्।”[११] पुनः का कथा मोक्षस्य। वेदे सर्वत्रैव मोक्षस्य तत्त्वं प्रतिपादितम्। आरण्यकोपनिषदादिकं तस्य प्रमाणभूतम्। यत्र ब्रह्मतत्त्वमेवालोचितम्। एवम्भावेन वेदे धर्मार्थकाममोक्षाणां वर्णनं स्पष्टम्। अतः कथितुं शक्यते यदपरसर्वविषयवत् पुरुषार्थानामुत्सोऽपि वेद एव। पुरुषार्थानां बीजं वेदे एव निहितमस्ति। तत्र यद्यपि पुरुषार्थपदस्याथवा चतुर्वर्गपदस्योल्लेखः न दृश्यते, तथापि वेदस्य मूलतत्त्वं खलु एतेषु चतुर्विधेषु निहितमस्तीति नास्ति संशयः।

स्मृतिशास्त्रेष्वपि चतुर्वर्गस्य वर्णनं स्पष्टम्। वेदे निहितस्य धर्मादीनां बीजस्य विकाशः स्मृतिशास्त्रेऽभवत्। स्मृतिशास्त्रकारेषु मनोः प्राथम्यम्। मनुना तस्य मनुसंहितायाः सप्तमाध्याये राज्ञः कर्तव्यालोचनावसरे उक्तं राजा सर्वदालब्धवस्तुनो लाभार्थं प्रचेष्टां कुर्यात्। ततः लब्धवस्तु रक्षेत्, लब्धधनं वर्द्धयेदेवञ्च ततः सत्पात्रे निक्षिपेत्। एवम्भावेन चतुर्विधकर्मणामुल्लेखं कृत्वा उच्यते यत् पुरुषार्थलाभाय एतानि कर्माणि साधनभूतानि। “एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम्।”[१२] तत्रोक्तं येऽर्थकामयोः नासक्तास्तेषामेव धर्मस्य प्रकृतज्ञानं भवति। एवञ्च तत्र धर्मासक्तानां समीपे वेदः श्रेष्ठप्रमाणभूतः।[१३] पुरुषार्थानां प्रकर्षताविषयेऽपि मतभेदो दरीदृश्यते। केचन कामस्य हेतुः इति मत्वा धर्मार्थयोः श्रेष्ठत्वं स्वीकुर्वन्ति, पुनः केचन सुखस्य साधनत्वात् अर्थकामयोः प्राधान्यं स्वीकुर्वन्ति। कैश्चन धर्मस्य श्रेष्ठता स्वीकृता। कैश्चन पुनरर्थस्यैव प्रकर्षत्वं स्वीकृतम्। परन्तु मनुमते पुरुषार्थरूपेण एतत्त्रिविधमेव परस्परमविरोधेन श्रेष्ठमिति।

“धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः॥”[१४]

याज्ञवल्क्यसंहितायां याज्ञवल्केन धर्मार्थकाममोक्षाणां वर्णनं कृतम्। तत्राचाराध्यायस्य प्रथमश्लोकस्य धर्मपदस्य व्याख्यायां मिताक्षराटीकायामुक्तं यदिदं शास्त्रं खलु धर्मार्थकाममोक्षाणां प्रतिपादकम्। अत्र धर्मपदं धर्मस्य प्रधान्यप्रतिपादनार्थमुक्तम्।“तत्र यद्यपि धर्मार्थकाममोक्षाः शास्त्रेणानेन प्रतिपाद्यन्ते, तथापि धर्मस्य प्राधान्याद्धर्मग्रहणम्।”[१५]

रामायणमहाभारतयोः युगे पुरुषार्थचतुष्टयस्य विस्तारः अधिकरूपेणाभवत्। महाभारते व्यासदेवेन स्वयमेव भणितं यत् धर्मार्थकाममोक्षाणामेव वर्णनमत्र महाभारतेऽस्ति। यत्किमपि महाभारतेऽस्ति तत्सर्वमस्त्यपरशास्त्रेष्वपि। परन्तु यो विषयोऽत्र नास्ति, स विषयो नास्ति कुत्रापि।

"धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्॥"[१६]

पुनः शान्तिपर्वणि पुरुषार्थापेक्षया दैवस्य श्रेष्ठत्वं प्रतिपाद्यते। तत्र युधिष्ठिरस्य प्रश्नस्योपरि भीष्मेणोक्तं-

"दैवं पुरुषकारेण को को वारयितुमर्हति।
दैवमेव परं मन्ये पुरुषार्थो निरर्थकः॥"[१७]

धर्मार्थकामविषये शान्तिपर्वण्यप्युक्तं यत् त्रिवर्गाणामर्जने दोष आपतति। तत्र प्रायशो धर्मे फलस्य लोभः, अर्थस्योपयोगे समस्या, एवञ्च कामे मोहोत्पादनमित्येतद्भावेन त्रिवर्गो दोषयुक्तो भवति।

"अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम्।
सम्प्रमोहमलः कामो भूयस्तद्गुणवर्द्धितः॥"[१८]

एवम्भावेन महाभारस्य शान्तिपर्वणः त्रयोविंशत्यधिकं शततममध्यायं परिव्यप्य भीष्मयुधिष्ठिरयोः प्रश्नोत्तरमाधमेन धर्मार्थकामानां स्वरूपं प्रतिपादितम्।

रामायणे वाल्मीकिनापि एतेषामुल्लेखः कृतः। अयोध्याकाण्डे कुशलप्रश्नद्वारा भरताय राजनीतिज्ञानप्रदानकाले भगवता रामेण त्रिवर्गाणामपि ज्ञानं प्रदत्तम्।

"कच्चिदर्थेन वा धर्ममर्थं धर्मेण वा पुनः।
उभौ वा प्रीतिलाभेन कामेन न विबाधसे॥"[१९]

वस्तुतः समयानुसारं यथार्थभावेन एतेषां धर्मार्थकामरूपाणां त्रिवर्गाणां सेवनं करणीयम्।[२०] एवम्भावेन त्रिवर्गेण सह मोक्षस्यापि तत्र वर्णनमस्ति।

दर्शनशास्त्रे पुरुषार्थपदस्योल्लेखः स्पष्टतया कृतः। सांख्यदर्शनस्य प्रथमसूत्रे एव पुरुषार्थपदस्योल्लेखो दृश्यते। यत्रास्यार्थो मोक्षः। "अतः त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः।"[२१] परवर्तिकाले सांख्यकारिकायामपि पुरुषार्थपदस्योल्लेखः दृश्यते "पुरुषार्थमिदं गुह्यम्।"[२२] योगशास्त्रे भोगार्थे तथापवर्गार्थे पुरुषार्थपदं गृहीतम्। तत्र "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति।"[२३] इत्यस्य सूत्रस्य पुरुषार्थशून्यानामिति पदस्य व्याख्याप्रसङ्गे व्यासभाष्ये उक्तं "कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्यकारणात्मनां गुणानां तत् कौवल्यम्।"[२४] अत्र कथितुं शक्यते यत् भोगोऽर्थादानन्दः, य आनन्दः त्रिवर्गाणां फलभूतः। अतो योगशास्त्रे पुरुषार्थपदं त्रिवर्गेण सह मोक्षस्य द्योतकम्।

विविधपुराणे पुरुषार्थानामालोचनं वैशद्येन परिलक्ष्यते। पुराणस्य युगे पुरुषार्थरूपो वृक्षः परिपूर्णतां प्राप्नोति। धर्मार्थकाममोक्षाः खलु चतुर्विधपुरुषार्था इत्यस्य विषयस्योल्लेखः अग्निपुराणेऽस्ति। "धर्मार्थकाममोक्षाश्च पुरुषार्थोदाहृताः।"[२५] एतेषां चतुर्विधपुरुषार्थानां पालनं मनुष्याणामावश्यकम्। कूर्मपुराणे उक्तं चतुर्विधपुरुषार्थेषु धर्माथौ साधनरूपौ एवञ्च काममोक्षौ साध्यरूपौ। एते मिलित्वा चत्वारः पुरुषार्थाः। येषां पालनं भगवत्पदस्य साधकं भवति।[२६] श्रीमद्भागवतमहापुराणे पुरुषार्थवाधकानां विषयाणामुल्लेखं कृत्वा उक्तं यो जनो मोक्षमिच्छति तस्य कृते पुरुषार्थवाधकानां पदार्थानां परित्यागः करणीयः।

"न कुर्यात्कर्हिचित्सङ्गं तमस्तीव्रं तितीरिषुः।
धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम्॥"[२७]

भागवतमहापुराणे पुरुषार्थलाभस्य सरलमार्गरूपेण भगवतः पादसेवनस्योल्लेखः क्रियते। "धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः"[२८] एवम्भावेन सर्वेषां पुराणानामपि मूललक्ष्यरूपेण पुरुषार्थानामेवोल्लेखः दृश्यते।

परवर्तिसमये लौकिकसंस्कृतसाहित्ये पुरुषार्थानां विकाशः सम्पूर्णतयाभवत्। तत्र यथा कौटिल्यस्यार्थशास्त्रस्य तथा वात्स्यायनस्य कामसूत्रस्य रचनाभवत्, तथैव विविधानि महाकाव्यान्यपि विरचितानि। यत्र पुरुषार्थानामलोचनं वैशद्येन कृतम्। रघुवंशानुसारं चतुर्वर्गस्योत्पत्तिः भगवत एवाभवत्।

"चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगम्।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात्॥"[२९]

दशरथस्य चत्वारः पुत्राः आसन्। ये खलु धर्मार्थकाममोक्षाणां चतुर्वर्गाणामवताररूपा अभवन् रघुवंशे।[३०] पुनः किरातार्जुनीयस्य प्रथमसर्गे उक्तं दुर्योधनस्य त्रिगणः परस्परं न वाधते- " न वाधतेऽस्य त्रिगणः परस्परम्"।[३१] शिशुपालवधस्याष्टमसर्गेऽर्थस्य कुफलं प्रतिपादितम्। तत्रोक्तं यो विशेषविषयमिच्छति स औचित्यस्य विचारं न करोति। "औचित्यं गणयति को विशेषकामः।"[३२] नैषधचरितेऽपि चतुर्वर्गलाभस्य कारणरूपेणेश्वरः कथितः। नलस्य भक्तिं दृष्ट्वा उच्यते यदि कोऽपि नलस्य भक्त्या शतभागस्यैकभागमपि करोति स चतुर्वर्गपुरुषार्थं प्राप्तुं शक्नोति।

"फलसोमां चतुर्वर्गं यच्छतांशोऽपि यच्छति।
नलस्यास्मदुपघ्ना सा भक्तिर्भूतावकेशिनी॥"[३३]

एवम्भावेन लौकिकसंस्कृतसाहित्यस्य प्रत्येकमंशे पुरुषार्थानामालोचनं स्पष्टम्। मनुष्याणां मुख्यप्रयोजनभूता एते चत्वारः पुरुषार्थाः। हितोपदेशे उक्तं यस्य समीपे एतेषु चतुष्टयेषु एकोऽपि नास्ति, तस्य जन्म निरर्थकम्।

"धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते।
अजागलस्तनस्येव तस्य जन्म निरर्थकम्॥"[३४]

अतोऽस्माकं भारतीयसभ्यातायाः प्रतिक्षेत्रमेतेषां प्रतिष्ठा दृश्यते। संस्कृतवाङ्मयस्य सर्वत्र एतेषां पुरुषार्थानां प्रतिष्ठा परिलक्ष्यते। एतेषां सम्पादनस्य क्षमता केवलं पुरुषस्य मध्ये अस्ति। अपरे जीवा पुरुषार्थानां सम्पादने समर्था न भवन्ति। यतः केवलं पुरुष एवास्य सम्पादने समर्थोऽतोऽस्य नाम पुरुषार्थ इति।

अत्र प्रश्नो भवितुं अर्हति यत् पुरुषपदेन यदि केवलं पुरुषो गृह्यते तर्हि किं नारीणामस्मिन् पुरुषार्थे नास्त्यधिकारः? इति जिज्ञासायामुच्यते पुरं –शरीरम्, पुरि (शरीरे) शेते यः स पुरुष इति व्युत्पत्त्यनुसारमत्र पुरुषपदेन आत्मा बोध्यते।[३५] तदा पुरुषस्य(आत्मनः) अर्थः, एवम्भावेन यदि विश्लेषणं क्रियते तर्हि पुरुषार्थपदेन यथा पुरुषाणां तथा नारीणामपि बोधः। अतः पुरुषार्थलाभे नारीपुरुषयोरुभयोरेव समान गतिः।

पुनरयं प्रश्नो भवितुमर्हति कथं मनुष्याः केवलं पुरुषार्थलाभे समर्थाः? न तु अपरे जीवाः? इति जिज्ञासायामुच्यते भगवता ब्रह्मणा जगत्सृजनकाले विविधयोनौ विविधजीवानां सृजनं कृतम्। परन्तु तेन स स्वयमपि प्रसन्नो नाभवत्। यतः तेषां जीवानां मध्ये कोऽपि आत्मसाक्षात्कारे समर्थो नासीत्। तदा बहुचिन्तनानन्तरं स मनुष्यशरीरमसृजत्। भागवतमहापुराणे भगवता कृष्णेनापि अस्य विषयस्य वर्णना कृता।

"सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या
वृक्षान् सरीसृपपशून् खगदंशमत्स्यान्।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावलोकधिषणं मुदमाप देवः॥"[३६]

भागवते भगवता स्वयमेव भणितं यत् स स्वयं द्विपद-चतुष्पदविशिष्टानां प्राणिनां निर्माणं कृतम्। तेषु मनुष्या एव श्रेष्ठाः। अतो मानवशरीरं प्राप्य विविधोपायद्वारा परमब्रह्मलाभस्य पन्था चिन्तनीयः। य एतन्न करोति स कस्मिन्नपि योनौ जन्म प्राप्य शान्तिं न प्राप्नोति।

"लब्ध्वेह मानुषीं योनिं ज्ञानविज्ञानसम्भवाम्।
आत्मानं यो न बुद्ध्येत न क्वचिच्छममाप्नुयात्॥"[३७]

धर्मार्थकाममोक्षाः इत्येतेषां पुरुषार्थानां क्रमोल्लेखेऽपि कारणमस्ति। चर्तुर्वर्गेषु सर्वदा पूर्वापेक्षयोत्तरस्य प्राधान्यं वर्तते। कुतः ज्ञातमिति जिज्ञासायामुच्यते -धर्मार्थौ खलु साधनरूपौ। तयोः साध्यौ काममोक्षौ। धर्मो मुख्यरूपेण मोक्षस्य साधकः, पुनः कामपूर्तयेऽर्थस्यैव प्राधान्यम्। साध्यस्यालोचनायाः पूर्वं साधनस्योल्लेख आवश्यकः। अतः प्रथमे धर्मार्थयोरुल्लेखो विहितः। ततः काममोक्षयोः। तयोः काममोक्षयोः पुनः मोक्षस्य प्रकर्षात् कामात्परं तस्योल्लेखो भवति। अत्र प्रश्नो भवति, कामाद्मोक्षस्य प्रकर्षात्, तस्य मोक्षस्य साधनभूतस्य धर्मस्य प्रकर्षातिशयादर्थात्परं धर्मस्योल्लेखः करणीयः। कथमर्थात्प्राक् धर्मस्योल्लेखः क्रियते? अत्रोच्यते सुखसन्निकृष्टतरत्वमत्र कारणम्। धर्मापेक्षया अर्थः सुखस्याधिकः सन्निकृष्टः। वक्तव्यस्याशयोऽयं वर्तते पुरुषार्थानां मध्ये सुखसाधनभूतौ धर्मार्थौ। एवञ्च कममोक्षौ सुखस्वरूपभूतौ। सुखस्य साधनभूतयोः धर्मार्थयोर्मध्येऽर्थः सुखस्य सन्निकृष्टः, धर्मस्तु विप्रकृष्टः। अतोऽर्थात् परं काममोक्षयोरुल्लेखः कृतः, न धर्मात्परमिति। मीमांसान्यायप्रकाशे वासुदेवाभ्यङ्करशास्त्रिणोक्तं प्रास्ताविके "पुरुषार्थचतुष्टयमध्ये चोत्तरोत्तं प्रकर्षाधिक्यम्। तथा हि पुरुषेणार्थ्यते प्रार्थ्यते इति पुरुषार्थः। प्रार्थनाविषयत्वं च सुखस्येत्यावालबृद्धत्वं प्रसिद्धम्। तत्र काममोक्षयोः सुखस्वरूपत्वात् प्रार्थनाविषयत्वम्। धर्मार्थयोस्तु सुखसाधनत्वात् प्रार्थनाविषयत्वं न स्वरूपतः। अतः काममोक्षयोः प्रकृष्टत्वम्। तत्रापि च मोक्षस्य प्रकृष्टतरत्वम्। यतः कामे दुःखसंभिन्नं सुखं मोक्षे तु दुःखासंभिन्नमिति। सुखसाधनत्वेन प्रार्थ्यमानयोर्धर्मार्थयोर्मध्ये चार्थः सुखस्य सन्निकृष्टो धर्मस्तु विप्रकृष्टः इत्यर्थस्य प्रकर्षः। अतः अर्थापेक्षया धर्मस्य प्राङ्निर्देशः।"[३८]

मनुष्याः खलु सुखान्वेषिणः। दुःखमये संसारेऽस्मिन् सुखमेव तस्य परमं लक्ष्यम्। अस्माकं समीपे यत्सुखरूपेण प्रतिभाति न तत् सुखम्। जगत् दुःखयुक्तम्। प्रायशः सर्वे दार्शनिकाः तत्त्वमिदं स्वीकृतवन्तः। अत्र एव प्रश्न आगच्छति कुतस्तस्माद्दुःखान्मुक्तिः? तदोच्यते मोक्षलाभः सर्वदुखमुक्तेः उपायः। यो मोक्षो लभ्यते धार्मार्थकामानां समन्वयेनानुष्ठानेन। यो मोक्षः सर्वदुःखस्याभावरूपः। तस्मात् भारतीयजनालोके पुरुषार्थः सदैव कामनीयविषयः।

मनुष्या इन्द्रियसुखस्य वशिनः। विषयसुखासक्ता मनुष्याः सर्वदा पार्थिवविषयान् प्रत्यधिकमाकृष्टा भवन्ति। पुनः का कथा कलिकालस्य। अधुना वयं मनुष्याः केवलं विषयकेन्द्रिका अभवन्। अधुना अस्माकं पार्थिवसुखं प्रति अधिकमाकर्षणम्। अतः प्रकृतसुखाभावे वयं प्रतिक्षणं दुःखाक्रान्ता भवामः। विषयसुखासक्ता जनास्तत् लाभार्थमधर्माचरणं कुर्वन्ति। अधुनाधर्मादेः प्रभावाद्यथा मनुष्याणां चारित्रिकवैशिष्ठ्यं विनष्टमभवत्तथैव

तेषां कार्यक्रमोऽप्यधुना विपदापन्नः। येन समाजोऽधुना कलुषितः। श्रीमद्भागवतमहापुराणस्य माहात्म्यालोचनावसरे दृश्यते तत्र कलिकालस्य अनैतिकपरिस्थितेः वर्णना क्रियते। तत्र प्रश्नः पृष्टः शौनकेन सुतं प्रति- यतः अधुना घोरे कलौ प्रायशः सर्वे जीवाः असुरतां प्राप्तवन्तः, विविधक्लेशाक्रान्तानां तेषां जीवानां शोधनस्य क उपायोऽस्ति?

“इह घोरे कलौ प्रायो जीवश्चासुरतां गतः।
क्लेशाक्रान्तस्य तस्यैव शोधने किं परायणम्॥”[३९]

एतस्मात् कारणात् भारतीयवाङ्मये सर्वत्र पुरुषार्थस्य वैशद्येन वर्णनं परिलक्ष्यते। वैदिकयुगतः लौकिकयुगपर्यन्तं यदि समग्रसंस्कृतवाङ्मयं पश्यामः तर्हि द्रष्टुं शक्नुमः,यत् वैदिकवाङ्मये यथा धर्मार्थकाममोक्षरूपाणां चतुर्विधपुरुषार्थानां वर्णनमुपलभ्यते, तथैव लौकिकसंस्कृतशास्त्रेष्वपि विस्तृतरूपेण तेषामेव चर्चा कृता। येषां गुरुत्वमस्माकं जीवनेऽपरिहार्यम्। तस्मादेव कारणादस्मिन् विषयेऽस्माकं प्रवृत्तिः।

**तथ्यसूत्राणि**

१. अमर.पृ.२१९।
२. श.क.द्रु.भाग ३.पृ.१९६।
३. ऋ.वे.१०.१२९.४।
४. ऋ.वे.१०.९०.३।
५. ऋ.वे.१०.१०.१,३,६।
६. कठो. १.२.२।
७. तदेव १.१.२७।
८. अथ.१२.१.६।
९. ऋ.वे.१.१२.१८, ५.२६.६, ८.४३.२४।
१०. तदेव १०.१९०.१।
११. तदेव १०.९०.१६।
१२. मनु.७.१००।
१३. तदेव २.१३।
१४. तदेव २.२२४।
१५. मि. टी.१.१।
१६. महा.१.६२.५३।
१७. तदेव ३.१७९.२७।
१८. तदेव १२.१२३.१०।
१९. रामा.२.१००.६२।
२०. तदेव. २.१००.६३।
२१. सा.सू.१.१।
२२. सां.का.६९।
२३. योग. ४.३४।
२४. यो.व्या.भा. ४.३४।
२५. न्या.को. पृ.५०८।
२६. कूर्म. २.५९।
२७. श्रीमद्भा. ४.२०.३४।
२८. तदेव. ४.८.४१।
२९. रघु. १०.२२।
३०. तदेव. १०.८५।
३१. किरा. १.११।
३२. शिशु. ८.१०।
३३. नैष.१७.१४१।
३४. हितो. १.२६।
३५. पु.च. पृ.५।
३६. श्रीमद्भा. ११.०७.२२।
३७. तदेव. ११.१६.५८।
३८. मी.न्या.प्र. प्रास्ताविकः पृ.१।
३९. श्रीमद्भा.मा. १.६।

**सहायकग्रन्थपञ्जी**

१. कालिदासः, कुमारसम्भवम्; सम्पा. शेषराजशर्मा रेग्मी, वाराणसी, चौखाम्भा संस्कृत संस्थानम्,२०६८ वि.सं।
२. कालिदासः, रघुवंशम्, (हरिप्रिया-हिन्दीव्याख्योपेतम्); सपा. रामचन्द्रझाव्याकरणाचार्यः, वाराणसी, चौखम्बा कृष्णदास अकादमी, २०१२(पुनर्मुद्रणम्)।
३. भारविः, किरातार्जुनीयम्, (सरलाहिन्दीव्याख्योपेतम्); सम्पा. सुधाकरमालवीयः, वाराणसी, चौखाम्बा कृष्णदास अकादेमी,२०१४ (तृतीयसंस्करणम्)।

४. माघः, शिशुपालवधम्, (मणिप्रभाहिन्दीटीकासहितम्); सम्पा. पण्डितहरगोविन्दशास्त्री, वराणसी, चौखाम्बाविद्याभवन, २०१३ (पुनर्मुद्रणम्)।

५. श्रीहर्षः, चन्द्रिकाहिन्दीव्याख्योपेतं नैषधीयचरितम्,(उत्तरार्धः); सम्पा. डा. देवर्षिसनाढ्यशास्त्री, वाराणसी, चौखाम्बासंस्कृतसिरिज आफिस, २०१६ (चतुर्थसंस्करणम्)।

६. शर्मा नायारणः, हितोपदेशः, सम्पा. वालशास्त्री, वाराणसी, चौखम्बासुरभारतीप्रकाशनम्, २०१५ (संस्करणम्)।

७. विष्णुशर्मा, पञ्चतन्त्रम्, सम्पा.वालशास्त्री, वाराणसी, चौखम्बासुरभारतीप्रकाशन, २०१६ (संस्करणम्)।

८. वात्स्यायणः, कामसूत्रम्; सम्पा.रामचन्द्रशास्त्री,दिल्ली, मनोजपाब्लिकेशन,२००९ई।

९. वेदव्यासः, महाभारतम्; सम्पा. श्रीपाददामोदरसातवलेकरः, पारडी, साध्यायमण्डलम्, १९७९ई.।

# वाल्मीकीयरामायणे वेदोपदिष्टमदृष्टतत्त्वम्

**शुकदेव साउः**

**सारसंक्षेपः** आर्षकाव्यद्वयोर्मध्ये वाल्मीकिना विरचितं रामायणमन्यतमम्। राम+ष्णायन इत्यनेन रामायणमिति पदम् सिद्धम्। रम्-धातोः घञि प्रत्यते राम इति शब्दः निष्पन्नः,यस्यार्थः हि शुभ्रः शुद्धः कृष्णश्चेति। ष्णायन इत्यस्य अय्-धातोः ल्युटि प्रत्यये अयनशब्दः निष्पन्नः,यस्यार्थः खलु गतिः गमनम् वा। अत एवम्प्रतीयते यत् शुद्ध-प्रब्रह्म-रामचन्द्र एव महाकाव्यस्य अस्य उपजीव्यविषयः तथा गतिस्वरूपम्। रामायणस्य जनप्रियता तथा धर्ममूलकता एतादृशी यत् अद्यावधि धनिनः प्रासादात् दरिद्रस्य पर्णकुटीरपर्यन्तं परमश्रद्धया सह तद् गृहीयते। अस्य माहात्म्यस्य कारणानि हि नानाविधानि अपरिहार्य्योपादानानि। येषां उपादानानाम् उत्सभूतानि खलु निर्णीयन्ते वेदनिर्भराणि नानाविधानि तत्त्वानि। रामायणे आख्यानम् उपाख्यानम्, समाजः, संस्कृतिः, यागः, दर्शनभावना, भाषा, छन्दश्चेति इत्येतानि उपादानानि परिदृश्यन्ते। एतेषां तत्त्वानां मध्ये वेदोपदिष्टदर्शनभावनाद्वारा **"वाल्मीकीयरामायणे वेदोपदिष्टमदृष्टतत्त्वम्"** इति शीर्षके अदृष्टतत्त्वम् आलोच्यते।

**मूलशब्दाः** रामायणम्, अदृष्टतत्त्वम्, कर्मफलम्, पुनर्जन्म, परलोक इत्यादयः

**उपोद्घातः** न दृष्टः अदृष्ट इत्यनेन अस्यार्थः अप्रत्यक्षम्। तस्य भावः इत्यनेन तत्+त्व=तत्त्वम् इति पदं निष्पन्नम्। यथायथरूपेण वस्तुज्ञानं हि तत्त्वम्। अतएव यद् तत्त्वं ज्ञानं वा प्रत्यक्षेण न अवगम्यते तद् विषयः हि अदृष्टतत्त्वम्। वेदे बहुविधानि अदृष्टतत्त्वानि यद्यपि आलोचितानि तथापि एतेषां तत्त्वानां मध्ये किञ्चित् प्रतिफलनं वाल्मीकीय-रामायणे दृश्यते। यथा कर्मफल-जन्मान्तर-परलोकतत्त्वप्रभृतयः। युगस्य परिवर्तनं यद्यपि अभवत् तथापि दर्शनालोके वेदोपदिष्टस्य अदृष्टतत्त्वस्य किमपि न परिवर्तनं रामायणे दृश्यते।

## वेदोपनिषदि कर्मफल-जन्मान्तर-परलोकतत्त्वानि

भारतीयदर्शने कर्मफल-जन्मान्तर-परलोकतत्त्वानां प्रधानः उत्सः हि वेदः। न केवलं वेदेऽपि तु उपनिषदि एतेषां विस्तृतिः प्रतिफलिता। वेदविहितश्रौतकर्मादिवशात् सर्वे जनाः यद्यपि पुण्यस्वर्गादिसुखं लभन्ते तथापि पुण्यक्षयावसरे पुनः जन्ममृत्योऽधीनं प्राप्नुवन्ति। मानवाः मरणशीलाः जीवाः। जातजीवस्य मृत्युरवश्यम्भावी। परन्तु आत्मा कदापि न म्रियते। मृत्युहीन आत्मा पितृलोकस्य गमनं करिष्यति। पुनः स आत्मा पितृलोकात् देवलोकं गमिष्यति एवञ्च कर्मफलवशात् जन्मान्तरग्रहनं करिष्यति। ऋग्वेदसंहितायाः दशममण्डलस्य चतुर्दशसूक्ते उच्यते यथा-

"परेयिवांसं प्रवतो महीरनु वहुभ्यः पन्थानमनुपस्पशानम्।
वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॥
यमो नो गाअतुं प्रथमो विवेद नैषा गव्युतिरपभर्तवा उ।
यत्रो नः पूर्वे पितरः परेषुरेणा जज्ञानाः पथ्या अनु स्वाः॥"[1]

[1]ऋग्वेदसंहिता १०/१४/१-२.

वैदिकयुगे अन्त्येष्टिक्रियायां दाहसंस्कारस्य प्रचलनमासीत्। दाहसंस्कारकाले अग्निदेवतां प्रति प्रार्थना क्रियते यथा जातवेदोवह्निना येन केनाप्युपायेन मृतजनं पुण्यलोके नीयते ,स एव अग्निः स्वकृपया तद् जनं पुनः जन्मग्रहणे सहायतां कुर्यात्।[1] एवम्प्रकारेण उपनिषद्यपि कर्मफल-जन्मान्तर-परलोकतत्त्वानामालोचना स्वीक्रियते। अतः जनान् निकषा कर्मफलाकाङ्क्षायां श्रौतयागादिकर्म यद्यपि पुण्यस्वर्गादिसुखस्य कारणं तथापि पुण्यक्षयान्तरे पुनः ते जनाः जरामृत्योरधीनं प्राप्नुवन्ति। मुण्डकोपनिषदि आम्नातः –

"प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म।
एतत् श्रेयो येऽभिनदन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति॥"[2]

परन्तु धनासक्त-विवेकहीन-मत्त-बालकसदृशजनान् निकषा परलोकतत्त्वमेव न अवगम्यते। अर्थात् इहलोकोऽस्ति न तु परलोकः, एवं मन्यमानास्तज्जनाः पुनरेव जन्ममृत्युचक्रे आवर्त्तन्ते। कठोपनिषदि उल्लिख्यते-

"न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे॥"[3]

**कर्मफलवादः** कृ धातोः मनिन्-प्रत्ययेन कर्मशब्दः निष्पद्यते। कर्मणः फलमित्यनेन कर्मफलम्। सुतरां कर्मफलं सततमेव कर्मानुसारि। वैदिकयुगे पुण्यस्वर्गपुत्रसुखायुशान्तिसमृद्ध्यादयः कर्मफलरूपेण स्वीक्रियन्ते। एतेषां कर्मफलानां मध्ये किञ्चित् अदृष्टमुलकम् एवञ्च प्रत्येकं कर्मणः पृथक् पृथक् फलमुपदिष्टम्। यथा पुत्रलाभार्थं पुत्रेष्टियागकर्म विधीयते तथा स्वर्गलाभार्थमपि अश्वमेधयज्ञकर्म अस्ति। एवम्प्रकारेण फलाकाङ्क्षायां बहुविधानि कर्माणि यथा वेदे गृह्यन्ते तथैव रामायणे तान्येव कर्माणि स्वीक्रियन्ते। इक्ष्वाकुवंशीयराजा दशरथः यथा पुण्यस्वर्गप्राप्त्यर्थम् अश्वमेधयज्ञकर्म करोति स्म तथैव पुत्रलाभार्थं पुत्रेष्टियागकर्मापि कृतवान्।[4] न केवलं दशरथः अपि तु श्रीरामचन्द्रेण अश्वमेधयज्ञादिश्रौतयज्ञकर्मानुष्ठानं क्रियते।[5] अतएव दशरथरामचन्द्रौ उभयौ मुलतः दृष्टफललाभार्थं यज्ञकर्म कृतवन्तौ तथापि अदृष्टफलप्राप्त्यर्थमपि नानाविधानि कर्माणि कुरुतः स्म। यतः तपस्वाध्यायसन्ध्यावन्दनादयः स्वर्गादिफललाभस्य कारणरूपेण विविच्यन्ते तस्मात् तेषां बहुदृष्टान्तः रामायणे प्राप्यते। एतेषां दृष्टान्तानां मध्ये मया एक उल्लिख्यते- यदा अयोध्यायाः राजा दशरथः मृगयाव्यसननिमित्तं वनं गतवान् तदा तत्र स एव राजा शब्दभेदिवाणेन अन्धमुनेः एकमात्रं पुत्रं हन्ति स्म। शराघातेन मुनिपुत्रस्य पञ्चत्वप्राप्तिः अभवत्। गतप्राणपुत्रस्य उद्देश्ये शोकार्तपितुः अन्धमुनेः वार्ता उच्यते-

"कस्य वा पररात्रेऽहं श्रोष्यामि हृदयङ्गमम्।
अधीयानस्य मधुरं शास्त्रं वन्यद् विशेषतः ॥

---

[1]ऋग्वेदसंहिता १०/१६/४-५.

[2]मुण्डकोपनिषद् १/२/७.

[3]कठोपनिषद् १/२/६.

[4]वाल्मीकीयरामायणम् १/१४/५७-५९. १/१५/३

[5]तदेव ६/१२८/९४-९५.

को मां सन्ध्यामुपास्यैव स्नात्वा हुतहुताशनः।
श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितम्॥"[1]

अर्थात् स्वाध्यायसेवापरिचर्यादि यतः स्वर्गादिसुखस्य कारणं तद् वचनमत्र आशीर्वादज्ञापनमाध्यमेन अन्धमुनेः कण्ठे प्रतिध्वनितमिति। एतद्व्यतिरिच्य वेदविहितधर्मकर्मादिवशात् मुनिपुत्रः यद् दिव्यधामं गत्वा स्वर्गादिसुखं प्राप्नोति तदपि रामायणकारेण उल्लिख्यते। सुतरां एवमेव प्रतीयते यत् कर्मभिः स्वर्गाद्यदृष्टसुखस्य प्राप्तिः सम्भवति।

**जन्मान्तरवादः -** मृत्योः परं पुनः जन्मनः कल्पनमिति जन्मान्तरः। जन्मान्तरसम्बन्धी आलोचना तु जन्मान्तरवाद इति। इहजगति प्राणिनां देहः यद्यपि नश्वरः तथापि तेषामात्मा कदापि नश्वरः भवितुं नार्हति। अर्थात् आत्मा देहात् देहान्तरं गच्छति। तद्यथा-

"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥"[2]

शास्त्रानुसारेण जीवः संस्कारवशात् पूर्वजन्मनः कर्मफलानुसारम् इहजन्मनि मनुष्यजन्म किंवा मनुष्येतरजन्म लभते। फलतः इहजन्मनि सुखदुःखयोः कारणस्य बीजं अदृष्टवशतः सुप्तभावेन पुर्वजन्मनः कर्मफलेभ्यः आयाति। एवम्विधस्य जन्मान्तरवादस्य प्रामाण्यं रामायणेऽपि दर्शितम्, यथा अनुजलक्ष्मणस्य मरणादनन्तरं रामचन्द्रस्य क्रन्दने –

"किं मे युद्धेन किं प्राणैर्युद्धकार्यं न विद्यते।
यत्रायं निहतः सेते रणमूर्धनि लक्ष्मणः।।
यथैव मां वनं यान्तमनुयाति महाद्युतिः।
अहमप्यनुयास्यामि तथैवैनं यमक्षयम्।।
इहैव मरणं श्रेयो न तु बन्धुविगर्हणम्।
किं मया दुष्कृतं कर्म कृतमन्यत्र जन्मनि॥"[3]

एवं विषयः पुनः उत्तरकाण्डे दृश्यते, यदा दशाननरावणः वलपूर्वकं सुन्दरीनारीः अपहृतवान्। अपहृतत्वात् ताः नार्य्यः रावणस्य दासत्वम् अस्वीकृत्य आत्मविलापं कुर्वन्ति। कारणं खलु ताः विना आत्मीयजनाः तासां कृते चिन्तां करिष्यन्ति। इदं विचिन्त्य ताः निदारुणभावेन क्रन्दनं कुर्वन्ति। ताः मन्यन्ते अस्माकं दुःखं पूर्वजन्मनः कर्मफलानुसारं संस्कारवशात् इहजन्मनि पीडाकारणम्।[4] पुनश्च सप्तमकाण्डे रावणेन अपहृता सीता कलङ्कवशात् रामेण परित्यक्ता ।प्रजानुरञ्जनवशात् श्रीरामचन्द्रस्य अस्मिन् सिद्धान्तग्रहणे सीता रामचन्द्रं न तिरस्करोति तथापि

---

[1]तदेव २/६४/३२-३३.

[2]श्रीमद्भगवद्गीता २/२२।

[3]वाल्मीकीयरामायणम् ६/१०१/१२-१३, १९।

[4]वाल्मीकीयरामायणम् ७/२४/१४-१६।

आत्मानः भाग्यं निन्दति। पूर्वजन्मनः केन पापेन मम इदृशी अवस्था सञ्जाता यस्मात् कारणात् नृपतिना रामचन्द्रेण अहं परित्यक्ता। तद्यथा-

"किं नु पापं कृतं पूर्वं को वा दारैर्वियोजितः।
याहं शुद्धसमाचारा त्यक्ता नृपतिना सती॥"[1]

एतद्विहाय सप्तमकाण्डे ब्रह्मर्षिकुशध्वजस्य कन्या आसीत् वेदवती। सा कन्या पितुरभिप्रायानुसारेण पतिरूपेण विष्णोः प्राप्त्यर्थं तपस्कर्म कृतवती। तद् कर्मजनितसंस्कारवशात् सा कन्या परवर्तीनि जन्मनि मिथिलायां जनकतनयासीतारूपेण आविर्भूता भूत्वा विष्णुस्वरूप-रामचन्द्रं पतिरूपेण प्राप्तवतीति।[2]

**परलोकप्रसङ्गः** इहलोकभिन्नः अपरलोकः भवति परलोकः। मरणात् परं जीव मूलतः परलोकं गमिष्यति। परलोक इत्यस्य पर्यायवाचकशब्दः यथा यमालयः, यमसदनम्, यमकक्षश्चेति। एतस्मात् कारणात् अहं मन्ये यमः परलोकस्य अधिष्ठातारूपेण अधितिष्ठति। परलोकादृष्टस्वरूपं तथापि अदृष्टपरलोकविषये वाल्मीकिना विशेषदृष्टान्तः उपस्थाप्यते- अयोध्याकाण्डे यदा अन्धमुनेः पुत्रः शरेण विद्ध्यते तदा स एव शोकार्तमुनिः वदति- भो! पुत्र त्वम् अस्मिन् क्षणे यमलोकं प्रति मा गच्छ, परदिवसे आवाभ्यां सह तत्र गमिष्यसि।[3] एतेन स्पष्टीक्रियते यत् यमसदनरूपेण अत्र परलोकः स्वीक्रियते। पुनश्च काण्डेऽस्मिन् परलोकतत्त्वस्य उदाहरणमेकं दृश्यते, अर्थात् रामचन्द्रः यदा सीता-लक्ष्मणेन सह अयोध्यां परित्यज्यति तदा रामविरहवशात् शोकात् तस्य पितुः दशरथस्य मृत्युः अभवदिति संवादस्य परिवेशनाय कैकेय्या पुत्र-भरतं प्रति उच्यते-

"रामेति राजा विलपन् हा सीते लक्ष्मणेति च।
स महात्मा परं लोकं गतो मतिमतां वरः॥"[4]

अर्थात् राजा दशरथः सीता-लक्ष्मण-रामचन्द्राणां दुःखेन विलापानन्तरं परलोकप्रस्थानं करोति। अयोध्याकाण्डे न केवलं कैकेय्याः वचनद्वारा परलोकतत्त्वमुल्लिखितमपि तु कौशल्यायाः वचनेनापि परलोकतत्त्वं प्रकटितम्। यदा प्राणप्रिय-रामचन्द्रः वनवासं गमिष्यति तदा कौशल्या इहलोकं परित्यज्य यमसदने परलोके वा सुस्थिरभावेन जीवनातिवाहितुम् इच्छति चेत् तथापि तद् न सम्भवति। तेन उच्यते-

"ममैव नूनं मरणं न विद्यते न चावकाशोऽस्ति यमक्षये मम।
यदन्तकोऽद्यैव न मां जिहीर्षति प्रसह्य सिंहो रुदतीं मृगीमिव॥"[5]

युद्धकाण्डे पुनः लक्ष्मणस्य यदा मृत्युः अभवत् तदा श्रीरामचन्द्रेण लक्ष्मणं प्रति उच्यते-भो! वीरश्रेष्ठलक्ष्मण त्वं किमर्थं मां परित्यज्य परलोके गमनं करिष्यति। अनया उक्त्या रामायणे मरणादनन्तरं परलोकगमनस्य वृत्तान्तः सूच्यते। अतः श्रीरामचन्द्रेण उक्तम्-

---

[1] तदेव ७/४८/४।
[2] तदेव ७/१७/४३-४४, ४०।
[3] वाल्मीकीयरामायणम् २/६४/३६।
[4] तदेव २/७२/३६।
[5] तदेव २/२०/४०।

"हा भातुर्मनुजश्रेष्ठ शूराणां प्रवर प्रभो।
एकाकी किं नु मां त्यक्त्वा परलोकाय गच्छति॥"[1]

एवम्विधेन दृष्टान्तेन वेदोपनिषदि उपदिष्टम् अदृष्टपरलोकतत्त्वं रामायणे उक्तिप्रत्युक्तिमाध्यमेन स्वीक्रियते।

**उपसंहृतिः** – इदानीन्तनसमाजे अपि वेदस्य प्रभावः स्पष्टतया दृश्यते। अतः रामायणमिति ग्रन्थस्य वेदोत्तरकालीनत्वात् तस्मिन् ग्रन्थेऽपि वेदस्य प्रभावः स्थास्यति इति नास्ति विवादः। एतदर्थं रामायणे प्रतिपादितमदृष्टतत्त्वं वेदोपदिष्टादृष्टतत्त्वस्यैव अनुकरणमिति नास्ति संशयः। तथापि प्रश्न उदेति यत् अदृष्टतत्त्वरूपेण परलोक-जन्मान्तर-कर्मफलादीनामस्तित्वमस्ति न वा? यदि अस्ति तर्हि कथं तस्य न प्रत्यक्षम्? एतदुत्तरे कतिपयानि मतानि उपस्थाप्यन्ते। यथा वेदविरुद्धचार्वाकदार्शनिकैः वेदप्रामाण्यं न अङ्गीक्रियते अतएव तेषां मते परलोक-जन्मान्तर-कर्मफलादीनाम् अस्तित्वं नास्ति । ते वदन्ति-

"न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥"(वार्हस्पत्यसूत्रम्-१)

प्रत्युत्तरे एवं वक्तुं शक्यते यत्- प्रत्यक्षं विना नास्ति किमपि अन्यप्रमाणमित्यनेन चार्वाकः यतः प्रत्यक्षभिन्नम् अन्यप्रमाणं न स्वीकुर्वन्ति तद्वत् इहलोकभिन्नं कस्यापि अस्तित्वं न स्वीकर्तव्यमिति वचनेन पुनः परलोकस्य अस्तित्वं सिद्ध्यते। यद्यपि इहजगति प्रत्यक्षं विना कस्यापि वस्तुनः ज्ञानं न सम्भवति तथापि अप्रत्यक्षत्वात् अदृष्टतत्त्वस्य ज्ञानमपि कल्पितानुमानेनैव स्वीक्रियते। योगिपुरुषं निकषा अदृष्टतत्त्वस्य ज्ञानं किन्तु प्रत्यक्षेण जायते। एतद्विहाय अपि यथा हि वेद श्रुतिजनितत्वात् आगमप्रमाणस्वरूपम्, अतः वेदोपदिष्टरामायणे प्रतिपादितस्य अदृष्टतत्त्वस्य प्रामाण्यम् आगमप्रमाणेनैव स्वीक्रितम्। अतएव अदृष्टतत्त्वस्वरूपपरलोकस्य अस्तित्वनिरूपणे नास्ति कोऽपि संशयः। प्रसङ्गानुसारेण उल्लिख्यते यत् परलोकोऽस्ति अत जन्मान्तरकर्मफलयो उभयोरपि अस्तित्वम् अस्ति। कारणं खलु त्रीणि अदृष्टतत्त्वानि परस्परयोर्मध्ये एकमपरस्य प्रयोजनं साधयति। जन्मान्तरस्य अस्तित्वविषये मया लौकिकोदाहरणमालोच्यते। अर्थात् शिशुरेकः जन्मनः परं स्वतप्रवृत्तत्वात् यथा क्रन्दनं करोति तथा तस्य मातृदुग्धपाने प्रवृत्तिरपि जायते। इयं प्रवृत्तिः पूर्वजन्मजनितसंस्कारवशात् तस्य शरीरे सुप्तावस्थायां विद्यमानत्वात् तद् भवितुमर्हति। अतएव जन्मान्तरजनितसंस्कारः यदि न स्यात् तर्हि केनोपायेन इयं प्रवृत्तिरुत्पद्यते, इयं जिज्ञासा सञ्जाता। अतः अस्य जन्मान्तरस्यापि प्रामाण्यमस्ति। पुनः कर्मफलमेव तिष्ठति तद् विषयः उदाहरणेन अवगम्यते। यथा जन्मनः किञ्चित् समयानन्तरं यदि शिशोः मृत्युः संघटते तर्हि एतेन अनुमीयते यत् तस्य पूर्वजन्मजनितकर्मफलम् अतीव न्यूनमासीत्। एतदर्थं तस्य अकस्मात् मृत्युः भवति। अनेन उदाहरणेन एवं प्रतीयते यत् कर्मफलरूपेण कोऽपि विषयः अस्ति। परिशेषे एवमुच्यते न केवलं वाल्मीकीय-रामायणे अपि तु विविधकाव्यशास्त्रेष्वपि अदृष्टतत्त्वमुल्लिखितमिति। यथोच्यते रघुवंशमहाकाव्ये-

"तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तनस्य इव॥"[2]

---

[1]वाल्मीकीयरामायणम् ६/१०१/२०-२१।

[2]रघुवंशम् १.२०

**सहायकग्रन्थावली-**

१.*ऋग्वेदसंहिता*(अष्टमखण्डः); सम्पा. रामगोविन्द-त्रिवेदी, वाराणसी, चौखम्बाविद्याभवनम्, २०११।

२.*कठोपनिषद्*; अनु. स्वामी-जुष्टानन्दः, कोलकाता, उद्बोधनकार्यालयः, २०११(पञ्चमसंस्करणम्)।

३.*मुण्डकोपनिषद्*; अनु. स्वामी-जुष्टानन्दः, कोलकाता, उद्बोधनकार्यालयः, २०१२(चतुर्थसंस्करणम्)।

४.*श्रीमद्वाल्मीकीयरामायणम्* (प्रथमखण्डः); गोरक्षपुरः, गीताप्रेसः, २०१५।

५.*वाल्मीकिः*, रामायणम्(द्वितीयखण्डः); सम्पा.ध्यानेशनारायणचक्रवर्ती, कोलकाता, १९९७।

६. कालिदासः, *रघुवंशम्*(प्रथमसर्गः); सम्पा. देवकुमारदासः, कोलकाता, सदेशः, बङ्गीय १४२०(पञ्चमप्रकाशः)।

७. व्यासदेवः, *श्रीमद्भगवद्गीता*; सम्पा. रामसुन्दरदासः, गरोक्षपुरः, गीताप्रेसः, २०१७(पुनर्मुद्रणम्)।

८. *चार्वाकदर्शन*; सम्पा. अमितभट्टाचार्यः, कोलकाता, संस्कृत बुक डिपो, बङ्गीय १४१५(द्वितीयसंस्करणम्)

९. Mukhopadhyaya Govindagopal, *A New Tri Lingual Dictionary*; Kolkata, Sanskrit Book Depot, 2013(reprint)

# <u>शब्दशक्तिप्रकाशिकादिशा लिट्-लङ्-लुङर्थविमर्शः</u>

**<u>डा. सन्तुसिंहः</u>**

सहायकाध्यापकः, संस्कृतविभागः

बाँकुडाविश्वविद्यालयः, पश्चिमवङ्गः

**<u>शोधसारः</u> –** प्रथितेषु वङ्गीयनैयायिकेषु अनन्यो हि जगदीशतर्कालङ्कारः। जगदीशतर्कालङ्काराणां सर्वस्वं हि शब्दशक्तिप्रकाशिका। तत्र तर्कालङ्कारैः शब्दप्रामाण्यं निरूप्य सुपामर्था यथा निरूपिता तथा लकाराणामप्यर्था निरूपिताः। अत्रायं विशेषो यद्धि तर्कालङ्कारैः सुपामिव लकाराणामप्यर्था नैयायिकदिशा एव निरूपिताः। न केवलं स्वमतानुसारं लकारार्था विवेचितास्तैः तत्र मतान्तरमुपन्यस्य तच्च सयुक्ति तिरस्कृत्य स्वीयं मतं प्रतिपादितम्। अत्र प्रबन्धे जगदीशदिशा लिट्लकारस्य, लङ्लकारस्य, लुङ्लकारस्य चार्थाः निरूपिताः। प्रसङ्गात् अन्येषां मतान्यपि अत्र तर्कालङ्कारदिशा चर्चितानि।

**<u>कुञ्चीशब्दाः</u>** - अनद्यतनत्वम्, ह्यस्तनत्वम्, तिङ्, लिट्, आनुपूर्वी, जनकतावच्छेदकम्, कारणतावच्छेदकम्, धात्वर्थः।

**<u>उपोद्घातः</u> -** जगदीशतर्कालङ्काराणां सर्वस्वं हि शब्दशक्तिप्रकाशिका। तत्र तर्कालङ्कारैः शब्दप्रामाण्यं निरूप्य सुपामर्था यथा निरूपिता तथा लकाराणामप्यर्था निरूपिताः। अत्रायं विशेषो यद्धि तर्कालङ्कारैः सुपामिव लकाराणामप्यर्था नैयायिकदिशा एव निरूपिताः। न केवलं स्वमतानुसारं लकारार्था विवेचितास्तैः तत्र मतान्तरमुपन्यस्य तच्च सयुक्ति तिरस्कृत्य स्वीयं मतं प्रतिपादितम्। तत्सर्वं पारिभाषिकशब्दजालाबद्धं शब्दशक्तिप्रकाशिकायां दरीदृश्यत इत्यत्र यथामति गुरुकृपया तत्सर्वं निरूप्य उपंसहृतौ तर्कालङ्कारमतस्य श्रेष्ठत्वं सयुक्ति निरूपितम्। अत्र प्रबन्धे अतीतकालीनानां लकाराणामर्था एव विमृष्टाः। तथा च, अत्र लिट्लकारस्य लङ्लकारस्य लुङ्लकारस्य चार्था सविशदं निरूप्यन्ते -

- **<u>लिट्-लकारार्थविमर्शः</u>** -

आचार्यजगदीशेन लिटो लक्षणद्वयं न्यरूपि स्वग्रन्थे। तत्राद्यं लिट्लक्षणं निरूपयतागादि यद् यादृशी तिङ् द्विरुक्तभिन्नधात्वर्थधर्मिकस्वार्थप्रकारकशाब्दबोधं न जनयति तादृशी तिङेव लिट्-पदवाच्या। तथाहि कीर्तितेयं कारिका -

**द्विरुक्तभिन्नधात्वर्थे स्वार्थस्यन्वयबोधने।**

**या न योग्या तादृशी तिङ् लिट्पदेनाभिधीयते।।**[1] इति।

यादृशानुपूर्वीकप्रकारकज्ञानत्वं द्विरुक्तान्यधर्मिकस्वार्थप्रकारकबोध - जनकतानवच्छेदकं, तादृशानुपूर्वीमत्तिङ्त्वं लिट्त्वमिति कारिकार्थः। ननु लिट्-लक्षणे अभावद्वयनिवेशनं व्यर्थम्, द्विरुक्तधात्वर्थधर्मिक-स्वार्थप्रकारकबोधजनकत्वस्यैव लिट्लक्षणत्वादिति चेन्न, तल्लक्षणस्य लुङादावतिव्याप्तेः। तथाहि अशिश्रियत्, अदुद्रुवत् इत्यादौ लुङो द्विरुक्तधात्वर्थधर्मिकस्वार्थप्रकारकशाब्दबोधं जनयन्तीति तत्र लिटः अतिव्याप्तिर्निर्बाधा। अभावद्वयनिवेशे तु अपाक्षीत् इत्यादौ लुङो द्विरुक्तधात्वर्थधर्मिकस्वार्थप्रकारकज्ञानजनक-

---

[1] . शब्दशक्तिप्रकाशिकायाः 104कारिका

सत्त्वात् नातिव्याप्तिः। लिटस्तु जघान जघ्नतुः इत्यादौ द्विरुक्तधात्वर्थे एव स्वार्थप्रकारकबोधजनकत्वमिति समन्वयः।

लिटः अर्थान्तरं निरूपयता जगदीशतर्कालङ्कारैर्निरुक्तम् -

**द्विरुक्तस्य यजेरर्थे चकास्तेराम्युतस्य वा।**

**या स्वार्थस्यान्वये हेतुः सा वा तिङ् कथ्यते लिटा।।**[1] इति।

द्विरुक्तयज्धात्वर्थधर्मिकस्य आमन्तचकासधात्वर्थधर्मिकस्य वा स्वार्थप्रकारकान्वयबोधस्य जनकतावच्छेदकं यादृशानुपूर्वीप्रकारकज्ञानत्वं तादृशानुपूर्वीमत्तिङ्त्वं लिट्त्वमिति कारिकार्थः। तस्यायमाशयः यादृशी तिङ् द्विरुक्त-यज्-धातोरर्थे अथवा आम्-युक्तस्य चकासृ-धातोर्थे स्वार्थान्वयबोधहेतुर्भवति तादृशी तिङ् लिट्पदवाच्या इति। लडादिः यद्यपि जुहोति इत्यादिद्विरुक्तधात्वर्थे स्वार्थबोधिकस्तथापि न यज्-धात्वर्थे न स्वार्थान्वयबोधक इति न तत्र लडादौ लक्षणस्यातिव्याप्त्यापत्तिः। किञ्च, चकास्ति इत्यादौ लडादिः यद्यपि चकास्-धात्वर्थे स्वार्थान्वयबोधकस्तथापि आम्-प्रत्ययान्तस्य चकास्-धातोर्नबोधको नेति नात्र लडादौ अतिव्याप्त्यापत्तिः। तथाहि उक्तम् –

**जुहोतीत्यादौ द्विरुक्तस्य धातोरर्थे स्वार्थस्य बोधकः अपि लडादिर्न यजेरर्थे। चकास्तीत्यादौ चकासधातोर्थे तादृशः अपि नामन्तस्य तस्य।**[2] इति।

मनश्चचाल इत्यत्र अतीककाल इव धात्वर्थनिष्ठं परोक्षत्वमपि लिटः अर्थः। तच्चातीन्द्रियत्वम्। तथा च अतीतकालवृत्त्यतीन्द्रयचलवन्मन इति शाब्दबोधो भवतीति।

- <u>**लङ्लकारार्थविमर्शः -**</u>

लङं लक्षयन्नाह जगदीशाचार्यः-

**या स्मयोगं विना धातोः शबन्तस्यार्थधर्मिके।**

**अतीतत्वग्रहे हेतुः तादृशी तिङ् लङुच्यते।।**[3] इति।

स्मशब्दस्य योगं विना शबन्तस्य धातोरर्थे अतीतत्वस्य अन्वयधीहेतुर्यादृशी तिङ् तादृशी तिङ् लङ् इत्युच्यते। तथा च स्मशब्दसमभिव्याहारभावविशिष्टयादृशानुपूर्वीप्रकारकज्ञानत्वं शबन्तधात्वर्थधर्मिकातीतत्वप्रकारकशाब्दधीजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं लङ्त्वमिति पर्यवसितम्। लट्लकारस्तु स्मशब्दसमभिव्याहारं विना धात्वर्थे अतीतत्वं न बोधयति। पपाचेत्यादौ लिट्लकारः यद्यपि अतीतत्वं बोधयति तथापि स शबन्तस्य धातोरर्थे नातीतत्वं बोधयति। किन्तु अपचदित्यादौ स्मशब्दयोगं विनापि लङ् शबन्तधात्वर्थे अतीतत्वं बोधयति इति लक्षणसमन्वयः। तथाहि उक्तं शब्दशक्तिप्रकाशिकायाम् –

---

[1] . शब्दशक्तिप्रकाशिकायाः 105कारिका

[2]. विष्णुपदमहापात्रसम्पादित-शब्दशक्तिप्रकाशिकायाः 413पृष्ठाङ्के

[3] . ढुण्ढीराजशास्त्रिसम्पादित-शब्दशक्तिप्रकाशिकायाः 102संख्यककारिका, 431पृष्ठाङ्के

**स्मशब्दस्य योगं विना शबन्तस्य धातोरर्थे अतीतत्वस्यान्वयधीहेतुर्यादृशी तिङ् तादृशी तिङ् लङ् उच्यते। तिबादिश्च स्मशब्दोपसन्धानं विना धातोरर्थे नातीतत्वं बोधयति। पपाचेत्यादौ लिङादिरतीतत्वं बोधयन्नपि न शबन्तस्य, अपचदित्यादौ तु विनापि स्मशब्दयोगं लङस्तथात्वम्।**[1] इति।

आचार्यकौमारमते अपचदित्यादौ लङोऽतीतकाल इव तन्निष्ठं ह्यस्तनमप्यर्थः। तत्र ह्यस्तनत्वं पूर्वदिनवृत्तित्वम्।

केषाञ्चिन्मते तु ह्यस्तनत्वं न लङः अर्थः, किन्तु अद्यतनभिन्नत्वम्। यतो हि पाणिनीयमनुशासनं वर्तते अनद्यतने लङ् इति। तथा च, रामः अपचत् इत्यस्य वर्तमानध्वंसप्रतियोगिपूर्वदिनवृत्तिपाककृतिमान् रामः, वर्तमानध्वंसप्रतियोग्यनद्यतनकालवृत्तिपाककृति-मान् राम इति वा तत्र बोधः।

क्वचित् ह्यस्तनत्वाद्यभावे अपि लङादिप्रयोगो दृश्यते। अतः लक्षणमिदं प्रायिकम्। तेन ह्यस्तनत्वादिशून्येऽपि काले क्वचिद् लङादेः प्रयोगः। सम्भेदे नान्यतरवैयर्थ्यम् इति न्यायाद् ह्योऽपचदित्यादौ ह्यःपदाख्याताभ्यामेकमेव ह्यस्तनत्वं निर्दिश्यते। तथाहि जगदीशतर्कालङ्कारैः उक्तम् – प्रायिकञ्चेदम्, तेन ह्यस्तनत्वादिशून्ये अपि काले क्वचिल्लङादेः प्रयोगाः। ह्यः अपचदित्यादौ ह्यःपदाख्याताभ्यामेकमेव निरुक्तं ह्यस्तनत्वं बोध्यते।[2] इति।

- **<u>लुङ्लकारार्थविमर्शः</u> –**

लुङर्थं निरूपयता जगदीशतर्कालङ्कारेण उक्तम् -

**हन्तेः कृतवधेरर्थे यातीतत्वस्य बोधिका।**

**सिजन्तस्याथ वा धातोस्तादृशी तिङ् लुङोच्यते।।**[3] इति।

यादृशी तिङ् हन्-धातोरर्थे कृतावधादेशस्य अथवा सिजन्तस्य धातोरर्थे अतीतत्वस्य बोधिका तादृशी तिङ् लुङ्शब्देनोच्यते। कृतवध्यादेशस्येत्युक्त्या जघान, हन्ति स्म इत्यादिषु लिङ्-लडादिः हन्-धातोरर्थे अतीतत्वस्य यद्यपि बोधकस्तथापि न कृतवधादेशस्य हन्-धातोर्थे न वा सिच्-प्रत्ययान्तधात्वर्थे अतीत्वस्य बोधकः। अतः न लुङ्। अवाधीत् अवधिष्टम् अवधिषुः इत्यादौ तु अतीतत्वस्य बोधको लुङ्। तथा वध्यात् वध्यास्तां वध्यासुरित्यादौ कृतवध्यादेशस्य हन्-धातोरर्थे स्वार्थस्य आशीरित्यस्य बोधिकापि आशीर्लिङ् अतीतत्वस्य न बोधिका।

आचार्यकौमारमते अपाक्षीदित्यादौ अतीतकाल इव तन्निष्ठमद्यतनत्वमपि लुङर्थः। तेन रामः अपाक्षीद् इत्यस्य वर्तमानध्वंसप्रतियोग्यद्यतनपाककृतिमान् राम इति तत्र बोधः। तथाहि शब्दशक्तिप्रकाशिकायामुक्तम् –

**अत्र अपाक्षीदित्यादौ अतीतः काल इव तन्निष्ठमद्यतनत्वमपि लुङामर्थः।**[4] इति।

---

[1] . तत्रैव 432पृष्ठाङ्के

[2] . विष्णुपदमहापात्रसम्पादित-शब्दशक्तिप्रकाशिकायाः 412पृष्ठाङ्के

[3] . ढुण्ढीराजशास्त्रिसम्पादित-शब्दशक्तिप्रकाशिकायाः 103संख्यककारिका

[4] . विष्णुपदमहापात्रसम्पादित-शब्दशक्तिप्रकाशिकायाः 413पृष्ठाङ्के

**उपसंहृतिः** - अत्र प्रबन्धे जगदीशदिशा लिट्लकारस्य लङ्लकारस्य लुङ्लकारस्य चार्थाः व्याख्याताः। तत्र आचार्यकौमारस्यापि मतं निरूपितं जगदीशदिशा। जगदीशतर्कालङ्कारैः लिटः लक्षणद्वयं कृतम्। लङ्लकारस्य लुङ्लकारस्य मतव्याख्यानवेलायां तर्कालङ्कारैः कौमारमतमपि निरूपितम्। तथा च, लङ्लकारस्य अतीतत्वमिव ह्यस्तनत्वमप्यर्थ इति कौमारमतम्। अत्र अपरेषां मतमपि तत्र निरूपितम्। अपरेषां मते पाणिनीयानुशासनात् अनद्यतनत्वम् एव अर्थः, न ह्यस्तनत्वमपि। तथा च, कौमारमते लुङ्लकारस्यापि अतीतत्वमिव अद्यतनत्वमपि अर्थः। एवं लिट्लकारस्यापि अतीतत्वमिव परोक्षत्वमपि अर्थः स्वीकृतो दृश्यते इति दिक्।

**सहायकग्रन्थाः**


१. वैयाकरणसिद्धान्तकौमुदी, गिरिधरशर्मणा सम्पादिता, मोतीलाल-वेनारसीदास, नवमसंस्करणम्, दिल्ली, २००१।

२. वैशेषिकदर्शनम् (उपस्कारसहितम्), पञ्चाननशास्त्रिसम्पादितम्, कलिकाता, १३१३वङ्गाब्दः।

३. व्युत्पत्तिवादः (सुनन्दाव्याख्यासहितः), ड.सच्चिदानन्दमिश्रसम्पादितः, भारतीयविद्याप्रकाशनम्, दिल्ली, २००१।

४. व्युत्पत्तिवादः (सादर्शः), हरेरामत्रिपाठिसम्पादितः, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, २०११।

५. व्युत्पत्तिवादः (जयासहितः), रमाकान्तमिश्रसम्पादितः, इलाहावाद पुनःप्रकाशनम्, वाराणसी, १९८८।

६. व्युत्पत्तिवादः(गूढार्थतत्त्वालोकः), धर्मदत्तझासम्पादितः, कृष्णदास अकादमी, १९७८।

७. व्युत्पत्तिवादः (कृष्णम्भट्टी-दीपिका-प्रकाश-शास्त्रार्थकलादिव्याख्यायुतः), अचिन्त्यदास-सम्पादितः, न्यू भारतीय वुक् कोर्परेशन्, दिल्ली, २००४।

८. शक्तिवादः, गोस्वामिदामोदरशास्त्रिसम्पादितः, चौखम्भा-संस्कृत-भवनम्, वाराणसी, १९८६।

९. शाब्दबोधमीमांसा(चतुर्थः भागः), एन्. एस्. रामानुजताताचार्यसम्पादितः, इन्स्टिट्यूट् फ्रान्सिस् दे, पण्डिचेरि, २००९।

१०. शब्दशक्तिप्रकाशिका, पण्डितढण्ढुराजशास्त्रसम्पादिता, चौखम्बा-संस्कृत-भवनम्, वाराणसी, तृतीयसंस्करणम्, २००२।

११. शब्दशक्तिप्रकाशिका, विष्णुपदमहापात्रसम्पादिता, मान्यताप्रकाशनम्, नवदेहली, द्वितीयसंस्करणम्, २०19।

# विधिवद्दृश्यमानानामप्यर्थवादानां स्तावकत्वेनैव प्रामाण्योपपादनम्

**Dr. Shriram A. S.**
Assistant Professor
Department of Dharmashastra - Mimamsa
Banaras Hindu University Varanasi
Uttar Pradesh, 221005

**शोधसारः**

मीमांसायां प्रथमे अध्याये धर्मप्रमाणानि निरूपितानि । तानि विध्यर्थवादादीनि अष्टौ प्रमाणानि भवन्ति । विधेः अज्ञातार्थज्ञापकत्वेन इतरनिरपेक्षतया प्रामाण्यम् । अर्थवादस्य तु ज्ञातार्थज्ञापकत्वेन प्रामाण्यं न स्यात् । अतः विध्येकवाक्यतया अर्थवादानां विधिसापेक्षतया प्रामाण्यम् उपपाद्यते । अर्थवादाः विधेयस्तावकाः । क्वचिदर्थवादाः विधायकाः इति भाति । विधित्वे इतरनिरपेक्षं प्रामाण्यं स्यात् । परं सर्वेषाम् अर्थवादानां स्वावकत्वेनैव प्रामाण्यमिति सिद्धान्तः ।

विधिसन्निधौ अर्थवादसत्त्वे अर्थवादस्यैव विधेयस्तावकत्वम् । विधिसन्निधौ अर्थवादस्य अभावे विधेः एव स्वविधेयस्तावकत्वम् । विधेः आकाङ्क्षात्रयं भवति । साध्यम्, साधनम्, इतिकर्तव्यता इति । इतिकर्तव्यताकाङ्क्षायाम् अर्थवादज्ञाप्यप्राशस्त्यज्ञानस्य अन्वयः । एवं विधिवाक्येन सह पदैकवाक्यतां प्राप्य अर्थवादाः धर्मे प्रमाणम् ।

**शोधपत्रम्**

धर्मं प्रति विप्रतिपन्नाः बहुविधः केचिदन्यं धर्ममाहुः, केचिदन्यम्, सोयमविचार्यप्रवर्तमानः कश्चिदेवोपादधानो विहन्येत अनर्थं च ऋच्छेत् इत्यतः धर्मस्य विचाराय जैमिनिप्रभृतयः प्रवृत्ताः । तैः यः धर्मसम्बद्धः विचारः प्रदर्शितः सः एव मीमांसा इति नाम्ना प्रसिद्धः । तस्यां मीमांसायां सन्ति द्वादश अध्यायाः । प्रथमे अध्याये धर्मस्य लक्षणम्, तस्य च अष्टौ प्रमाणानि निरूपितानि । तानि च प्रमाणानि विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यानि ।

प्रथमे चत्वारः पादाः सन्ति । प्रत्येकस्मिन् अपि पादे प्राधान्येन एकैकः विषयः समचर्चि । प्रथमपादः विधिपादः । द्वितीयः अर्थवादपादः । तृतीयः स्मृतिपादः । चतुर्थः नामधेयपादः इति । तदुक्तं –

विध्यर्थवादस्मृतयोः नाम चेति चतुर्विधम् ।
प्रथमाध्यायगैः पादैः चतुर्भिः मानमीरितम् ।।

प्रथमे विधिःविचारितः । द्वितीये अर्थवादमन्त्रौ विचारितौ ।

विधिः नाम अज्ञातार्थज्ञापको वेदभागः । यथा अग्निहोत्रं जुहोति । इदं च वेदवाक्यम् अग्निहोत्ररूपं कर्म स्वर्गादिप्रयोजनविशिष्टं प्रमाणान्तरेण अज्ञातं विधत्ते । अतः अयं विधिः । विधेः इदमेव कार्यम्, यत् प्रमाणान्तरेण अप्राप्तकर्मणः, दध्यादिद्रव्यस्य, आरुण्यादिगुणस्य, भावनायाः च विधानम् ।

तदनु द्वितीये पादे विधिवाक्यसमभिव्याहृतानामर्थवादरूपाणां वेदवाक्यानां प्रामाण्यमादौ प्रतिपादितम् ।

प्राशस्त्यनिन्दान्यतरपरं वाक्यम् अर्थवादः । अर्थवादाः विधिसन्निधौ पठिताः विधेयप्राशस्त्यं समर्पयन्ति । निषेधसन्निधौ पठिताः अर्थवादाः निषेध्यनिन्दां समर्पयन्ति । तद्यथा “वायव्यं श्वेतम् आलभेत भूतिकामः” इति विधिः । अनेन वायुदेवताकः श्वेतपशुद्रव्यकः भूतिफलकः यागः विधीयते । तत्सन्निधौ अर्थवादः श्रूयते “वायुर्वै क्षेपिष्ठा देवता” इति । अयमर्थवादः विधेयवायव्ययागस्य प्राशस्त्यं समर्पयति । तेन प्रशस्तेन वायुदेवताकेन श्वेतपशुद्रव्यकेन यागेन ऐश्वर्यं भावयेत् इति बोधः ।

प्रथमाध्याये द्वितीये पादे प्रथमाधिकरणे अर्थवादानां प्रामाण्यं प्रतिपादितम् । अत्र च सर्वे अर्थवादाः विषयः । अर्थवादानां धर्मे प्रामाण्यं नास्ति उतास्तीति संशीतिः । तत्र च पूर्वपक्षे आम्नायस्य क्रियार्थत्वादानर्थक्यम् अतदर्थानां तस्मादनित्यम् उच्यते इत्यादीनि सूत्राणि । तत्र च पूर्वपक्षः, अर्थवादानां शक्त्या बाधितसिद्धार्थप्रतिपादकत्वात् न अर्थवादस्य धर्मप्रमाजनकत्वं सम्भवति इति । तत्र च विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः इत्यादीनि सिद्धान्तसूत्राणि । तत्र च अयं सिद्धान्तः, लक्षणया विध्यपेक्षितप्राशस्त्यप्रतिपादकत्वम् अर्थवादानाम् । एवं स्तावकत्वेन निन्दकतया वार्थवादानां प्रामाण्यम् ।

अर्थवादेषु लक्षणया कः अर्थः लक्ष्यते इत्युक्ते विधिसन्निधौ श्रूयमाणस्यार्थवादस्य विधेयस्तुतौ लक्षणा, एवं निषेधसन्निधौ श्रूयमाणस्यार्थवादस्य निषेध्यनिन्दायां लक्षणा ।

प्रथमाध्याये द्वितीयपादे द्वितीय अधिकरणे एवं तृतीये अधिकरणे विधिवद्दृश्यमानानां वाक्यानां कथं प्रामाण्यमिति विचारः प्रवृत्तः ।

तैत्तिरीयसंहितायाम्, सोमापौष्णं त्रैतमालभेत पशुकामः इति वाक्यविहितपशुयागसन्निधौ इदं विधिवाक्यमाम्नायते, औदुम्बरो यूपो भवति इति । तत् सन्निधौ अर्थवादः श्रूयते, ऊर्ग्वा उदुम्बरः ऊर्क् पशवः, ऊर्जैवास्मा, ऊर्जं पशून् आप्नोति, ऊर्जोवरुद्ध्यै इति । ऊर्क् नाम अन्नम् इत्यर्थः । ऊर्क्-शब्दः पशुवाची, उदुम्बरत्ववाची च ।

एवं चातुर्मास्ये चत्वारि पर्वाणि सन्ति । यथा - वैश्वदेवः, वरुणप्रघासः, साकमेधः, शुनासीरीयः इति । तत्र वरुणप्रघासाख्ये पर्वणि इदं श्रूयते, शूर्पेण जुहोति इति । इदं वाक्यं विधिः । तत्सन्निधौ अर्थवादः श्रूयते, तेन हि अन्नं क्रियते इति । इदं वाक्यमर्थवादः । अर्थवादद्वयमाधारीकृत्य अयं विचारः प्रवर्तते ।

धर्माधर्मनिरूपणात्मिकायां मीमांसायाम् अर्थवादरूपधर्मप्रमाणनिरूपणात् शास्त्रसङ्गतिः । धर्मप्रमाणनिरूपणात्मके प्रथमाध्याये अर्थवादरूपधर्मप्रमाणनिरूपणात् प्रथमध्याये विधिवत्पठितार्थवादनिरूपणं सङ्गच्छते । विध्यतिरिक्तवेदवाक्यरूपधर्म- प्रमाणानां प्रामाण्यनिरूपणं पादसङ्गतिः ।

अर्थवादाधिकरणे अवच्छेदकावच्छेदेन अर्थवादानां विधेयस्तावकत्वेन, निषेध्यनिन्दाप्रतिपादकत्वेन वा प्रामाण्यमभिहितम् । परमस्मिन्नधिकरणे क्वचित् अर्थवादेषु स्तुतिप्रतिपादकत्वं न सम्भवति, अपि तु फलाय गुणसमर्पकत्वेन प्रामाण्यं भवति इति आक्षिप्य समाधीयत इति पूर्वाधिकरणेन साकम् आक्षेपिकी सङ्गतिः । विधिवन्निगदाधिकरणे अर्थवादानां विधायकत्वं न सम्भवति, अपि तु स्तावकत्वमेवेति सिद्धान्तः क्रियते । परं तेन हि अन्नं क्रियते इत्यत्र विधायकत्वमेवेति पूर्वपक्षे प्रतिपादनात् प्रत्युदाहरणसङ्गतिः ।

अस्य अर्थवादस्य विधेयस्तावकत्वेन प्रामाण्यम्, उत पशुरूपफलाय औदुम्बरत्वरूपगुणसमर्पकत्वेन इति। एवम् अर्थवादस्य हेतुविधायकत्वेन प्रामाण्यम्, उत स्तावकत्वेनैव इति संशीतिः।

तत्र च विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्, एवं हेतुर्वा स्यादर्थवत्वोपपत्तिभ्याम् इत्यादीनि सूत्राणि।

ऊर्ग्वा उदुम्बरः ऊर्क् पशवः, ऊर्जैवास्मा, ऊर्जं पशून् आप्नोति, ऊर्जोवरुद्ध्यै इत्यस्य वाक्यस्य फलाय गुणसमर्पकत्वेनैव प्रामाण्यम्। न तु लक्षणया स्तावकत्वेन प्रामाण्यसम्भवः। कुतः इत्युक्ते पशुरूपफलोद्देशेन गुणविधायकत्वे शक्यार्थः स्वीकृतो भवति। स्तावकत्वे तु लक्षणाश्रयणीया। एवं शक्यार्थस्वीकारेणैवोपपत्तौ लक्षणाश्रयणम् अन्याय्यम्।

प्रकृते फलं किमिति जिज्ञासायाम्, अर्थवादे पशून् इति द्वितीयान्तपशुपदश्रवणात् पशूनामेव भाव्यत्वमवगम्यते। द्वितीया तु कर्तुरीप्सिततमं कर्म इति सूत्रानुसारम् ईप्सिततमार्थे विहिता।

अथवा अवरुद्ध्यै इति चतुर्थीविभक्तिः श्रूयते। सा च विभक्तिः तादर्थ्ये विहिता। यथा धनलाभाय राजसेवा इति। राजसेवा कुतः क्रियते इत्युक्ते धनस्य प्राप्तये। एवं धनप्राप्तिः फलम्। अतः धनलाभाय इति चतुर्थी प्रयुक्ता। एवम् ऊर्जः अवरुद्ध्यै इत्युक्ते ऊर्जः प्राप्त्यर्थम् इत्यर्थः। ऊर्क् इति शब्दस्तु पशुः, अन्नम् इत्याद्यर्थकः। एवम् ऊर्क् साध्यम्। साधनाकाङ्क्षायां सन्निधानात्, ऊर्जा इति तृतीयाश्रवणाद्वा औदुम्बरत्वं साधनमिति अवगम्यते। ऊर्क्-शब्दः उदुम्बरार्थकोपि। तृतीया च कर्तृकरणयोः तृतीया इति सूत्रेण करणार्थे विहिता। एवं पश्वादिफलप्राप्तये उदुम्बरवृक्षनिर्मितस्य यूपस्य उपयोगः यागे कार्यः इति विधिवाक्यमेवेदम्।

तदुपरि प्रश्नः, यदि फलाय गुणविधिः, तर्हि विधायकप्रत्ययाभावात् कथं विधायकत्वमस्य वाक्यस्य इति। तन्न, भवति इत्यत्र भूधातुसमभिव्याहृताख्यातेन सत्तानुकूला कापि कृतिः न प्रतीयत इति पक्षे अर्थात् भावनावाचकत्वाभावपक्षे लक्षणया भावनाबोधकत्वम्। अथवा आख्यातत्वसामान्येन शक्त्या एव भावानाप्रतिपादकत्वम्।

यद्यपि भूधातोः सत्तार्थकत्वम्, तथापि यूपस्य उत्पादिकायाः छेदनक्रियायाः अनुवादकत्वं लक्षणया स्वीक्रियते। भावनावच्छेदिकायाः क्रियायाः अप्राप्तत्वात् भवति इति तिङन्तस्य लेट्लकारत्वमिति स्वीकार्यम्। तथा च अस्य वाक्यस्य विधायकत्वं सम्भवति। एवं पशुफलसम्बन्धः, तदुद्देशेन उदुम्बरत्वरूपो गुण इति उभयं विधीयते। तथा च धात्वर्थाश्रितेन औदुम्बरत्वेन पशुं भावयेदिति वाक्यार्थः।

यदि अर्थवादः इति स्वीक्रियते, तदा न किमपि प्रयोजनं सम्भवति। फलाय गुणविधिः इति स्वीक्रियमाणे तु गुणसमर्पणरूपं प्रयोजनं सम्भवति। अतः प्रयोजनपुरस्सरं वा गुणविधिः।

एवमेव तेन हि अन्नं क्रियते इत्यस्यार्थवादस्य स्तावकत्वेन प्रामाण्यं न सम्भवति। अपि तु अस्य हेतुप्रतिपादकत्वेनैव प्रामाण्यम्। पूर्वत्र तु पशूनां भाव्यत्वं कल्पनीयमासीत्। अत्र तु प्रत्यक्षतया हि शब्दः श्रूयते। अतः हेतुविधाने न किञ्चित् कल्पनीयमस्ति। हिशब्दो हेतुवाचकः। हेतुश्च व्याप्तिं विना न सम्भवति इति व्याप्तिः कल्पनीया। यथा - यत् यत् अन्नकरणम्, तेन होतव्यमिति। तेन अन्नकरणे यानि साधनानि भवन्ति, तानि सर्वाणि होमसाधनत्वेन स्वीकर्तव्यानि। अन्नकरणाय न केवलं शूर्पस्योपयोगः क्रियते, अपि तु

दर्वीपिठरादीनामपि उपयोगः क्रियते । अतः दर्वीपिठरादीनामपि होमसाधनत्वं व्याप्तिमुखेन ज्ञायते । तदुपरि प्रश्नः, विधिवाक्ये शूर्पपदमात्रं श्रूयते इति चेत्, दर्वीपिठरादीनां बोधकं पदं न श्रूयते । अतः कथं दर्व्यादीनां ग्रहणम् इति । तत्रेदं समाधानम्, शूर्पपदं दर्व्यादीनामुपलक्षणम् । अथवा शूर्पपिठरादिषु वक्तव्येषु केवलं शूर्पस्य पृथक्कृत्य कथनात् अवयुत्यानुवादः इति पूर्वपक्षः ।

अथवा, सर्वनाम्नः प्रकृतप्रधानपरामर्शकत्वनियमात् तेन इति तच्छब्देन शूर्पस्यैव परामर्शात् शूर्पगतमेव अन्नकरणत्वं हेतुः । तेन यत् यत् शूर्पः अन्नकरणम्, तेन शूर्पेण होतव्यमिति विशिष्य व्याप्तिः कल्पनीया । तस्याः अन्नकरणे असमर्थशूर्पव्यावृत्तिः फलम् । अतः पूर्ववत् शूर्पपदस्य उपलक्षकत्वादिदोषाः न सम्भवन्ति । एवं सर्वथा हेतुविधायकं वाक्यमिति ।

तत्र च उक्तं तु वाक्यशेषत्वम् एवं स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य इत्यादीनि सिद्धान्तसूत्राणि ।

यत्कर्तृकभवनाक्षिप्तायां भावनायां तस्यैव भाव्यत्वमिति नियमात्, यूपकर्तृकभवनाक्षिप्तायां भावनायां यूपस्यैव भाव्यत्वं वक्तव्यम् । तथा च यूपस्यैव साध्यत्वं सिद्धम् । सन्निधौ पठितत्वात् औदुम्बरत्वस्य साधनत्वं वक्तव्यम् । अतो यूपोद्देशेनैव औदुम्बरत्वस्य विधानम् । 'पशुकामः' इत्येवं प्रकारेण कामशब्दसमभिव्याहाराभावात् पशोः फलत्वेन ज्ञानं न भवति ।

पूर्वपक्षरीत्या यदि विधिवाक्यमिति स्वीक्रियते, तदा गुणफलसम्बन्धविधिः स्यात् । आश्रयसत्त्वे एव गुणफलसम्बन्धविधिः सम्भवति । प्रकृते सः न भवति, आश्रयाभावात् । यदि सोमापौष्णं त्रैतमालभेत पशुकामः इति वाक्यविहितकर्मणः आश्रयत्वे औदुम्बरो यूपः इति यूपपदवैयर्थ्यं सम्भवति । एतद्वाक्यापेक्षया पूर्वतनवाक्येन यूपस्य अविहितत्वात् यूपस्यापि नाश्रयत्वम् ।

प्रकृतयागस्य वैकृतत्वात् अतिदेशेनैव धर्मप्राप्तिः सम्भवतीति, यूपोपि अतिदेशेन प्राप्यते । अतः अतिदेशप्राप्तयूपस्याश्रयत्वं भवतु इति चेत्, अतिदेशेन जुह्वादिपात्रान्तराणामपि प्राप्तिः सम्भवतीति, तेषामपि आश्रयत्वं स्यात् । तेन पूर्ववत् औदुम्बरो यूपः इति यूपपदवैयर्थ्यं सम्भवति ।

वाक्येनानेन आश्रयदाने, यूपस्य आश्रयत्वेन विधानम्, फलाय औदुम्बरत्वस्य च विधानमिति अनेकविधानात् वाक्यभेदः सम्भवति । अतः ऊर्ग्वा इत्यारभ्य वाक्यमिदम् अर्थवादः । तेन च औदुम्बरत्वस्य स्तुतिः क्रियते ।

तेन ह्यन्नं क्रियते इत्यत्र तु लडन्तप्रयोगो दृश्यते । तेन च वर्तमानान्नकरणत्वस्य हेतुत्वं वक्तव्यम् । परन्तु होमकाले अन्नकरणत्वं न सम्भवति । अतः श्रूयमाणस्य लटः भूतभविष्यत्कालपरकतया लक्षणा त्वयापि स्वीकार्या । परं त्वत्पक्षरीत्या विधावेव लक्षणा स्वीकृता भवति इति दोषः । यद्यपि मत्पक्षेपि प्राशस्त्यप्रतिपादनाय लक्षणा अपेक्षिता । परं अनुवादवाक्ये विधिवाक्यापेक्षानुसारेण लक्षणा स्वीकृता इति न दोषः मत्पक्षे । अन्नं क्रियत इति वर्तमाननिर्देशोपि स्तुतिप्रतिपादनपक्षे सङ्गतो भवति । यतः शूर्पस्य वर्तमानकालीनान्नकरणत्वं विना शूर्पस्य स्तुतिः न प्रतीयते । एवं च विधिवाक्यापेक्षित- प्राशस्त्यपरकत्वकल्पनां विना अनपेक्षितहेतुप्रतिपादनं न युक्तम् ।

एवं च अर्थवादः आपाततः विधिवत् दृश्यते चेदपि स्वावकत्वेनैव धर्मे प्रामाण्यम् । न तु फलाय गुणसमर्पकत्वेन वा, हेतुसमर्पकत्वेन वा प्रामाण्यम् । अनेन सिद्धं सर्वेषामर्थवादानां स्तावकत्वेनैव प्रामाण्यम् इति ।

**आकरः**

धर्मं प्रति विप्रतिपन्नाः बहुविधः केचिदन्यं धर्ममाहुः, केचिदन्यम्, सोयमविचार्यप्रवर्तमानः कञ्चिदेवोपादधानो विहन्येत अनर्थं च ऋच्छेत् - शाबरभाष्यम् 1-1-1

विध्यर्थवादस्मृतयोः नाम चेति चतुर्विधम् । प्रथमाध्यायगैः पादैः चतुर्भिः मानमीरितम् ।।

- जैमिनीयन्यायमाला – उपोद्घातः ।

अग्निहोत्रं जुहोति - तै.स.1-5-9-2

प्राशस्त्यनिन्दान्यतरपरं वाक्यम् अर्थवादः – अर्थसङ्ग्रहः – अर्थवादनिरूपणम् ।

वायव्यं श्वेतम् आलभेत भूतिकामः – तै.सं. २. १. १. १

वायुर्वै क्षेपिष्ठा देवता - तै.सं. २. १. १. १.

आम्नायस्य क्रियार्थत्वादानर्थक्यम् अतदर्थानां तस्मादनित्यम् उच्यते – जैमिनीयसूत्रम्१,२.१.

विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः – जैमिनीयसूत्रम् – 1.2.7

सोमापौष्णं त्रैतमालभेत पशुकामः – तैत्तिरीयसंहितायाम्, २. १. १

औदुम्बरो यूपो भवति – तै.सं. २. १. १

ऊर्ग्वा उदुम्बरः ऊर्क् पशवः, ऊर्जैवास्मा, ऊर्जं पशून् आप्नोति, ऊर्जोवरुद्ध्यै - तैत्तिरीयसंहितायाम्, २. १, १.

शूर्पेण जुहोति - शत.2.5.2

तेन हि अन्नं क्रियते - शत.2.5.2

विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् – जैमिनीयसूत्रम् 1-2-19

हेतुर्वा स्यादर्थवत्वोपपत्तिभ्याम् – जैमिनीयसूत्रम् – 1.2.26

कर्तुरीप्सिततमं कर्म –अष्टाध्यायी1.4.49

कर्तृकरणयोः तृतीया – अष्टाध्यायी 2.3.18

उक्तं तु वाक्यशेषत्वम् - जैमिनीयसूत्रम् १,२.२२

स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य - जैमिनीयसूत्रम् १,२.२७

यत्कर्तृकभवनाक्षिप्तायां भावनायां तस्यैव भाव्यत्वम् - भाट्टदीपिका -१, २. २.

**परिशीलितग्रन्थाः**

1. भाट्टदीपिका – खण्डदेवः – सद्गुरुप्रकाशनम्-देहली-1987

2. जैमिनीयन्यायमाला – माधवाचार्यः – चौखम्बा संस्कृत संस्थान-वाराणसी-1991

3. मीमासान्यायप्रकाशः – आपदेवः - चौखम्बा संस्कृत संस्थान-वाराणसी – 2016